# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ द्वितीयः खण्डः ]





## विश्वविद्यालयरजतजयन्तीविशेषाङ्कः

३७ वर्ष

१-४ अङ्काः

वार्षिक मूल्यम् १० रूप्यकाणि

संयुक्ताङ्कानाम् १० रूप्यकाणि

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

### विश्वविद्यालयरजतजयन्तीविशेषाङ्कः

[ द्वितीयः खण्डः ]

सम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी





३७ वर्षे
१-४ अङ्काः

वार्षिकं मूल्यम् १० रूप्यकाणि
संयुक्ताङ्कानाम् १० रूप्यकाणि

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

३७ वर्षः | ज्येष्ठ-भाद्र-मार्गशीर्ष-फाल्गुनपूर्णिमाः, वि०सं०२०३९ | १-४ अङ्काः

# अवच्छेदकता

आचार्यश्रीबदरीनाथशुक्लः
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

अवच्छेकता कस्यापि वस्तुनो निर्वचनस्य प्राणभूतं तत्त्वम् । एनामुपेक्ष्य कार्यकारणभावः, प्रतिबध्यप्रतिबन्धकभावः, व्याप्यव्यापकभावः, अन्योऽप्येवंविधोऽर्थो न निर्वक्तुं शक्यते । यथा गन्धपृथिव्योरस्ति कार्यकारणभावः, गन्धं प्रति पृथिवी कारणमित्यनङ्गीकारे गन्धः कुतः पृथिव्यामेवोत्पद्यते, न जलादिषु, इति प्रश्नस्य समाधातुमशक्यत्वात् । तत्र न तावद् गन्धं प्रति तत्तत्पृथिव्यात्मकद्रव्यं कारणमिति शक्यते स्वीकर्त्तुं गन्धस्य सर्वेषु पृथिव्यात्मकद्रव्येषु उत्पन्नत्वेन तं प्रति तत्तत्पृथिव्यात्मकद्रव्यस्य कारणत्वकल्पनायां व्यतिरेकव्यभिचारात्, तत्पृथिव्यात्मकद्रव्यभिन्ने पृथिव्यात्मकद्रव्येऽपि गन्धोत्पादात् तत्पृथिव्यात्मकद्रव्यस्य च तत्र तादात्म्येनासत्वात्, तत्तद्गन्धं प्रति तत्तत्पृथिव्यात्मकं द्रव्यं कारणमिति कल्पनयाऽपि नाभीष्टसिद्धिः सम्भवा, जलादिषु तादात्म्येन तत्तत्पृथिव्यात्मकद्रव्याभावस्य तत्तद्गन्धानुत्पत्ति प्रत्येव प्रयोजकतया जलादिषु तत्तद्गन्धोत्पत्तिवारणेऽपि तत्र गन्धोत्पत्तेः वारयितुमशक्यत्वात् । पृथिव्यात्मकतत्तद्द्रव्यभेदकूटस्य गन्धसामान्यानुत्पत्तिप्रयोजकत्वमभ्युपेत्यापि नैष दोषो वारयितुमुचितः, कूटस्य एकविशिष्टापरत्वेनैव प्रयोजकतायाः अभ्युपेतव्यतया विशेष्य-विशेषणभावे विनिगमनाविरहेण प्रयोजकतया आनन्त्यप्रसङ्गात् । अवच्छेदकताऽभ्युपगमे तु गन्धत्वस्य कार्यतावच्छेदकत्वं पृथिवीत्वस्य

च कारणतावच्छेदकत्वं स्वीकृत्य गन्धं प्रति पृथिवीकारणमिति सामान्यकार्यकारणभावकल्पनायाः सम्भवेन जलादिषु गन्धकारणस्य पृथिवीद्रव्यस्य तादात्म्येनाभावात् तत्र गन्धोत्पत्तेर्वारणस्य सुकरत्वान्न कोऽपि दोषः।

एवम् अवच्छेदकतामुपेक्ष्य प्रतिबध्यप्रतिबन्धकभावोऽपि न निर्वक्तुं शक्यते, यथा 'भूतलं घटाभाववत्' इति बुद्धौ भूतलं घटवद् इति निश्चयस्य प्रतिबन्धकत्वं भवति, इदं प्रतिबन्धकत्वं यदि भूतलविशेष्यकघटप्रकारकनिश्चयस्य मन्यते, तदा 'भूतलं द्रव्यवत्' इति निश्चयस्य 'द्रव्यं घटवत्' इति निश्चयस्यापि च उक्तबुद्धिं प्रति प्रतिबन्धकत्वं स्यात्। अवच्छेदकताभ्युपगमे तु भूतलत्वनिष्ठावच्छेदकतानिरूपितभूतलनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठप्रकारताकनिश्चयस्य प्रतिबन्धकत्वोक्त्या उक्तापत्तेः वारयितुं शक्यत्वात्।

न च अवच्छेदकताया अभावेऽपि भूतलत्वनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठप्रकारताकनिश्चयत्वेन प्रतिबन्धकत्वकल्पनया भूतलं घटाभाववदिति बुद्धौ 'द्रव्यं घटवत्, भूतलं द्रव्यवत्' इति निश्चययोः प्रतिबन्धकत्वं वारयितुं शक्यते, एकज्ञानीयसमानाधिकरणविषयतयोरभेदेन घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताया भूतलत्वनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यतायाश्च मिथोऽभिन्नतया घटनिरूपितभूतलनिष्ठविशेष्यतायां भूतलत्वनिष्ठप्रकारतानिरूपितत्वस्य, एवं भूतलनिष्ठविशेष्यतानिरूपितघटनिष्ठप्रकारताया घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतायाश्च परस्परमभिन्नतया घटनिष्ठप्रकारतायां घटत्वनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वेनोक्तरूपेण प्रतिबन्धकत्वे बाधकाभावाद् इति वाच्यम्, एकज्ञानीयसमानाधिकरणविषयतयोरभेदस्यामान्यत्वात्, अन्यथा दण्डः पुरुषाभाववानिति बुद्धौ दण्डः पुरुषवानिति दण्डविशेष्यकपुरुषप्रकारकनिश्चयस्यैव रक्तदण्डवत्पुरुषवान् देश इति दण्डप्रकारकपुरुषविशेष्यकनिश्चयस्यापि प्रतिबन्धकत्वापत्तेः, रक्तत्वनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यत्व-पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारत्वयोः। एवं दण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यत्व-देशनिष्ठविशेष्यतानिरूपितपुरुषनिष्ठप्रकारतयोः परस्परभिन्नतया दण्डनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वात्।

न च एकज्ञानीयसमानाधिकरणविषयतयोरभेदस्योक्तदोषेण त्याज्यतया तयोरवच्छेद्यावच्छेदकभावो नूनमभ्युपेयः, अन्यथा भूतलं घटश्चेति ज्ञानवत् 'भूतलं

घटवत्' इति ज्ञानस्य समूहालम्बनताया अपि अपरिहार्यत्वात् तस्यापि उक्तज्ञानस्येव परस्परासम्बद्धविशेष्यताद्वयशालित्वात् । तथा च घटाभाववद् भूतलमिति बुद्धौ घटवद् भूतलमिति निश्चयस्य घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-घटनिष्ठप्रकारता-निरूपितभूतलत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नभूतलनिष्ठविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वस्वीकारे उक्तबुद्धौ 'द्रव्यं घटवत्', 'भूतलं द्रव्यवत्' इति निश्चययोः प्रतिबन्धकत्वस्य वारयितुं शक्यतयाऽवच्छेदकताभ्युपगमो नावश्यक एवेति वाच्यम्, प्रतिबन्धकतावच्छेदककुक्षौ घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्व-भूतलत्व-निष्ठप्रकारतानिरूपितविशेष्यत्वयोः प्रवेशे प्रतिबन्धकतायां गौरवापत्तेः ।

न चावच्छेदकताऽभ्युपगमेऽतिरिक्तविषयताकल्पनाप्रयुक्तं गौरवमिति वाच्यम्, प्रकारतायामेवावच्छेदकतात्वस्य कल्पनीयतया गौरवाभावात् । अवच्छेदकतात्वरूपातिरिक्तोपाधेः कल्पने गौरवं तु न शङ्क्यम्, एकज्ञानीयसमानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावोपगमे विषयतानिष्ठायां समानाधिकरणविषयतावच्छेदकतायां क्लृप्तस्यावच्छेदकतात्वस्यैव विषयतारूपायामप्यवच्छेदकतायां स्वीकारात् ।

व्याप्यव्यापकभावोऽपि अवच्छेदकतां विना निर्वक्तुमशक्यः । यथा धूमो वह्निव्याप्यः, 'वह्निश्च धूमव्यापकः' भवति, तत्र वह्निव्याप्यत्वं वह्न्यभाववन्निरूपितवृत्त्यभावः, धूमव्यापकत्वं च धूमसामानाधिकरणाभावप्रतियोगित्वाभावः, धूमः वह्न्यभाववति जलह्रदादौ अवृत्तितया वह्निव्याप्यः, वह्निश्च धूमसमानाधिकरणघटाभावादीनामप्रतियोगितया धूमव्यापकः । तत्र वह्निव्याप्यत्वं यदि वह्न्यभाववन्निरूपितवृत्तिप्रतियोगिकाभावः, तदा मीनशैवालादिरपि वह्निव्याप्यः स्यात्, तत्र वह्न्यभाववन्निरूपितवृत्तिप्रतियोगिकस्य तादृशवृत्तिघटत्वोभयाभावस्य तत्र सत्त्वात् ।

एवं धूमव्यापकत्वं यदि धूमसमानाधिकरणाभावप्रतियोगिकाभावः, तदा मीनादिरपि धूमव्यापकः स्यात्, तत्र तादृशप्रतियोगिताप्रतियोगिकस्य धूमसमानाधिकरणाभावप्रतियोगिकत्वघटत्वोभयाभावस्य सत्त्वात् । अवच्छेदकताऽभ्युपगमे तु वह्न्यभाववन्निष्ठावच्छेदकताभिन्नवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावस्य वह्निव्याप्तित्वस्वीकारेण नोक्तदोषः, वह्न्यभाववन्निरूपितवृत्तिर्नास्तीति प्रतीतिसिद्धस्य तादृशाभावस्य मीनादावसत्त्वाद् धूमसमानाधिकरणाभावनिष्ठावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावस्य धूमव्यापकत्वरूपस्वीकारेण नोक्तदोषः, धूमसामानाधिकरणाभावप्रतियोगित्वं नास्तीति प्रतीतिसिद्धस्य तादृशाभावस्य मीनादावभावात् ।

अवच्छेदकत्वानङ्गीकारे घटो नास्तीति प्रत्ययविषयोऽभावोऽपि दुर्वचः, तथा हि न तावद् घटप्रतियोगिकाभावस्तथा घटप्रतियोगिकस्य नीलघटाभावस्य पीतघटवति देशे सत्त्वेन तत्र घटो नास्तीति प्रत्ययापत्तेः। यावद्घटप्रतियोगिकाभाव उक्तप्रत्यय-विषयभूताभाव इत्यभ्युपमे नोक्तदोष इति न शक्यं वक्तुम्, यावद् घटाभावस्य नीलघटनीलघटान्यघटोभयाभावस्य च यावद्घटप्रतियोगिकाभावस्य नीलघटवति सत्त्वेन तत्र तादृशप्रत्ययापत्तेः। घटप्रतियोगिकयावदभावः, स इत्यपि न सुवचम्, यावतां घटानां प्रातिस्विकरूपेण असर्वज्ञेन ज्ञातुमशक्यतया तस्य तादृशप्रत्ययाभाव-प्रसङ्गात्। अवच्छेदकतायाः स्वीकारे तु घटत्वे घटाभावप्रतियोगितावच्छेदकता-मुपगम्य घटत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितघटत्वनिष्ठावच्छेदकतानिरू-पितप्रतियोगिताकाभावस्य घटो नास्तीति प्रत्ययविषयत्वस्वीकारेण नोक्तदोषाणाम-वसरः। प्रतियोगिताया व्यधिकरणधर्मावच्छिन्नत्वपक्षे विशेषनिष्ठप्रतियोगितायाः सामान्यधर्मावच्छिन्नत्वपक्षे च घटत्वेन घटाभावस्य घटत्वेन नीलघटाभावस्य च तादृशस्य पीतघटादिमति देशे सत्त्वेन तत्र तादृशप्रत्ययापत्तिस्तु घटत्वगतैकत्ववृत्ति-प्रतियोगिताकाभावस्य च तादृशप्रत्ययविषयत्वाभ्युपगमेन वारणीया, प्रतियोगितायां घटत्वगतैकत्ववृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितावच्छेदकत्व-स्वनिरूपिकाभावनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगि-कताकपर्याप्त्यनुयोगितावच्छेदकत्वतदुभयसम्बन्धेन। एवमभूतश्चाभावो घटो नास्तीति प्रत्ययविषय एवाभावस्तत्प्रतियोगितावच्छेदकत्वस्य तन्निरूपकतावच्छेदकत्वस्य च घटत्व एव सत्त्वेन उक्ताभावप्रतियोगिताया उक्तोभयसम्बन्धेन घटत्वगतैकत्ववृत्तित्वात्। घटत्वेन पटाभावः, घटत्वेन नीलघटाभावश्च न तथा, तयोः प्रथमाभावप्रतियोगिता-निरूपकतावच्छेदकत्वयोः क्रमेण घटत्वपटत्वयोः सत्त्वेन द्वितीयाभावस्य च तयोः घटत्वनीलघटत्वयोः सत्त्वेन तत्तदाभावप्रतियोगिताया उक्तोभयसम्बन्धेन घटत्वगतै-कत्वेऽवृत्तितया तावादाय घटो नास्तीति प्रत्ययाभावसम्भवात्।

अत्रेदं चिन्तयितुं शक्यते यत् प्रतियोगिविशेषिताभावप्रत्ययो विशिष्टवैशिष्ट्-यावगाहिमर्यादां नातिशेत इति नियमः, विशिष्टवैशिष्ट्यावगाहित्वं च विशेषण-विशेष्यतावच्छेदकद्वयावगाहित्वम्, तथा च विशिष्टप्रकारकाभावबुद्धे विशेषणस्य यः सम्बन्धो भासते, स एव विशेषणतावच्छेदकस्यापि तदवच्छिन्नप्रतियोगिकत्वेन भासते, तथा रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिन्यां 'रक्तदण्डवान् पुरुषः' इति बुद्धौ

विशेषणस्य दण्डस्य सम्बन्धविधया भासमानः संयोग एव स्वावच्छिन्नप्रतियोगिक-संयोगत्वेन रक्तत्वस्यापि सम्बन्धतया भासते; परं विशिष्टप्रकारकाभावबुद्धौ अभावांशे विशेषणस्य सम्बन्धविधया या प्रतियोगिता भासते, सैव स्वावच्छिन्नप्रतियोगितात्वेन विशेषणतावच्छेदकस्यापि सम्बन्धविधया भासते। यथा घटो नास्तीति बुद्धौ अभावांशे घटसम्बन्धविधया भासमाना प्रतियोगितैव घटत्वावच्छिन्नप्रतियोगितात्वेन घटत्वसम्बन्धविधया भासते। एवं च घटत्वेन पटो नास्तीति बुद्धौ अभावांशे पट-सम्बन्धविधया भासमाना घटत्वावच्छिन्नप्रतियोगितैव विशेषणतावच्छेदकस्य पटत्व-स्यापि स्वावच्छिन्नप्रतियोगितात्वेन भासते, तथा चोक्तप्रतीतिविषयाभावप्रतियोगितायां घटत्वपटत्वोभयावच्छिन्नत्वस्योपपन्नतया केवलमेकेन स्वनिरूपितावच्छेदकतात्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वगतैकत्ववृत्तिप्रति-योगिताकाभावत्वेन घटो नास्तीति प्रतीतिविषयाभावस्य निर्वचनेन घटत्वेन पटाभा-वस्य तद्भिन्नत्वमुपपद्यते।

एवं घटत्वेन नीलघटो नास्तीति बुद्धावपि अभावांशे नीलघटात्मकविशेषणस्य सम्बन्धविधया या घटत्वावच्छिन्नप्रतियोगिता भासते, सैव नीलघटत्वरूपविशेषणता-वच्छेदकस्यापि स्वावच्छिन्नप्रतियोगितात्वेन सम्बन्धविधया भासते, तथा चोक्ताभाव-प्रतियोगितायां घटत्वमात्रनिष्ठावच्छेदकतानिरूपितत्वमिव नीलत्व-घटत्वोभयनिष्ठा-वच्छेदकतानिरूपितत्वमपि लभ्यत इति तदभावप्रतियोगिता न भवति, उक्तसम्बन्धेन घटत्वगतैकत्ववृत्तिरिति उक्तेनैकसम्बन्धेन घटत्वगतैकत्ववृत्तिप्रतियोगिताकाभावत्वेन वर्ण्यमानोऽभाव उक्ताभावाद् भिद्यते। अतो घटो नास्तीति प्रत्ययविषयाभावो घटत्वगतैकत्ववृत्तिप्रतियोगिताकाभावत्वेन यदा वर्ण्यते, तदा प्रतियोगितायां घटत्वगतैकत्ववृत्तित्वमुक्तेनैकेनैव सम्बन्धेन वाच्यम्, द्वितीयसम्बन्धो नैवोपादेय इति।

**अवच्छेदकता कः पदार्थः**

उक्तरीत्या अवच्छेदकताया अवश्यमभ्युपेयत्वसिद्धौ सा सप्तसु पदार्थेषु कुत्रा-न्तर्भवतीति प्रश्नो जायते, अस्योत्तरमिदं भवति यदस्ति अवच्छेदकताया द्वैविध्यम्—स्वरूपसम्बन्धविशेषानतिरिक्तवृत्तित्वभेदात्। तत्र स्वरूपसम्बन्धविशेषरूपावच्छेदकता अवच्छेदकस्वरूपा, अतो याऽवच्छेदकता अवच्छेदकीभूतयत्पदार्थरूपा, सा तत्रैवान्त-र्भवति, यत्रावच्छेदकीभूतो धर्मोऽन्तर्भवति। यथा घटाभावप्रतियोगितावच्छेदकता घटत्वरूपा, घटत्वं च जातिविशेष इति तन्निष्ठावच्छेदकताऽपि जातिरूपा। दण्डी

नास्तीति प्रत्ययविषयाभावप्रतियोगिताया दण्डनिष्ठावच्छेदकता दण्डस्य स्वरूपा, दण्डो द्रव्यमिति तन्निष्ठावच्छेदकताऽपि द्रव्यरूपा अनतिरिक्तवृत्तित्वरूपावच्छेदकता च अतिरिक्तावृत्तित्वम्, तच्चाभाववन्निरूपितवृत्तित्वाभावः, स च अभावनिष्ठावच्छेदकता-भिन्नावच्छेदकत्वानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताभाववन्निष्ठावच्छेदकताभिन्न-वृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपिततादृशावच्छेदकताद्वयनिरूपिता प्रति-योगिताभावः। यथा अभावो घटाभावप्रतियोगित्वाभावस्तद्वन्निरूपितवृत्तित्वाभावो घटाभावप्रतियोगितामतिरिक्तवृत्तित्वरूपावच्छेदकता, इयमवच्छेदकता न केवलं घटत्व एव; किन्तु घटनिष्ठेषु कम्बुग्रीवादिमत्वादिरूपेष्वपि वर्तते, तेषामपि घटाभावप्रतियोगित्वाभाववति पटादाववृत्तित्वात्। एवं चेयमवच्छेदकता सर्वत्राभाव-रूपैव, अस्या अभाव एवान्तर्भावः।

उभयोरप्येतयोरवच्छेदकतयोरुपगम आवश्यकः, तथा हि यदि स्वरूप-सम्बन्धविशेषरूपावच्छेदकता नाभ्युपेयेत, तदा घटाभाववद्भूतलमिति बुद्धौ घटवद्-भूतलमिति निश्चयस्य घटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठप्रकारतानिरूपितभूतल-त्वनिष्ठावच्छेदकतानिरूपितभूतलनिष्ठविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वे प्रकारतायां घटत्वनिष्ठावच्छेदकतानिरूपितत्वं घटत्वनिष्ठाभावनिरूपितवृत्तित्वनिष्ठप्रतियोगितानिरू-पिताधिकरणनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्स्वरूपं वाच्यम्, घटवद् भूतलमिति ज्ञानीयप्रकारत्वाभावनिरूपितवृत्तित्वाभावप्रतियोगितानिरू-पितपरम्परीयोक्तावच्छेदकताया उक्तज्ञानीयप्रकारतायां सत्त्वात्। अनयैव रीत्या भूतल-निष्ठविशेष्यतायां भूतलत्वनिष्ठानतिरिक्तवृत्तित्वरूपावच्छेदकत्वमपि वाच्यम्, तथा च प्रतिबन्धकतावच्छेदके महद् गौरवं स्यात्, स्वरूपसम्बन्धविशेषरूपावच्छेदकतास्वीकारे तु नैष दोषः।

अनतिरिक्तवृत्तित्वं तादृशाभावत्वेनाप्रवेश्य अवच्छेदकतात्वेन प्रवेश्यमिति नोक्तं गौरवमिति भणितिरपि न भद्राय, ह्रदो वह्न्यभाववानिति बुद्धौ ह्रदो वह्नि-मानितिवत् ह्रदो धूमजनकतेजस्वीति निश्चयस्यापि प्रतिबन्धकत्वापत्तेस्तादृशतेजस्त्व-स्येव वह्नित्वस्यापि ह्रदो धूमजनकतेजस्वीति ज्ञानप्रकारतानतिरिक्तवृत्तित्वात्मका-वच्छेदकतावत्तया तन्निश्चयस्यापि वह्नित्वावच्छिन्नप्रकारताकत्वात्।

प्रतिबन्धकतावच्छेदकादिघटकतया स्वरूपसम्बन्धविशेषात्मकावच्छेदकताया अभ्युपगमस्यावश्यकतातोऽन्यापि तदभ्युपगमावश्यकता वर्तते। यथा शरीरे आत्मन-

स्तदीयसुखादीनामवच्छेदकताऽपि स्वरूपसम्बन्धात्मिकैव वाच्या, अनतिरिक्त-वृत्तित्वस्य तत्र दुर्घटत्वात्, आत्मशून्ये शरीरावयवे शरीरस्य वृत्तित्वात्. देशे कालवृत्तितायाः, काले देशवृत्तितायाश्चावच्छेदकताऽपि स्वरूपसम्बन्धात्मिकैव स्वीकार्या। यथा उत्पत्तेः पूर्वं नाशादुत्तरं च 'इदानीं तन्तुषु न पटः' इति प्रतीतिस्तन्तुषु कालावच्छेदेन पटाभावमवगाहते, पटकाले चेदानीं कपाले न पट इति प्रतीतिः काले कपालावच्छेदेन पटाभावमवगाहते, तथा च काले तन्तुनिष्ठपटाभावावच्छेदकता कपाले च कमलनिष्ठपटाभावावच्छेदकतास्वरूपसम्बन्धरूपैव, नानतिरिक्तवृत्तित्वरूपा नावश्य-कत्वात् । एवम् एकज्ञानीयसमानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावमते रक्त-दण्डवान् पुरुष इति ज्ञानीया रक्तत्वनिष्ठप्रकारतानिरूपितदण्डनिष्ठाविशेष्यता तादृश-ज्ञानीयपुरुषनिष्ठाविशेष्यतानिरूपितदण्डनिष्ठप्रकारताया अवच्छेदिका भवति, इयमप्य-वच्छेदकतास्वरूपसम्बन्धरूपैव नानतिरिक्तवृत्तित्वरूपा लाघवाद् दण्डरूपादेरपि तादृश-प्रकारताया अवच्छेदकत्वापत्तेश्च तस्यापि तादृशप्रकारताया अनतिरिक्तवृत्तित्वात् ।

एवमेव यदि अनतिरिक्तवृत्तित्वरूपावच्छेदकतां नाभ्युपेयेत, तदा साध्याभाव-वदवृत्तित्वरूपा पूर्वपक्षीयव्याप्तिरपि निर्वक्तुं न शक्यते, सम्भवति लघौ धर्मे गुरुधर्मे स्वरूपसम्बन्धात्मिकायाः प्रतियोगितावच्छेदकताया अनभ्युपगमेन कम्बुग्रीवादिमतः साध्यतायां सद्धेतावव्याप्तिः स्यात्, घटत्वापेक्षया गुरुतरस्य कम्बुग्रीवादिरूपसाध्यता-वच्छेदकस्याभावप्रतियोगितानवच्छेदकतया साध्यतावच्छेदकावच्छिन्नप्रतियोगिताका-भावस्याप्रसिद्धत्वात् ।

एवं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामाना-धिकरण्यरूपा सिद्धान्तव्याप्तिरपि निर्वक्तुं न शक्येत, कम्बुग्रीवादिमत्साध्यकव्यभिचा-रिणि कम्बुग्रीवादेर्हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकतयाऽतिव्याप्तिप्रसङ्गात् । तदेवं स्वरूपसम्बन्धविशेषरूपावच्छेदकता यथास्थिति जात्यादिरूपा, अनतिरिक्तवृत्तित्वरूपा-वच्छेदकता च सर्वत्राभावरूपेति सिद्ध्यति ।

घटत्वनिष्ठा घटाभावप्रतियोगितावच्छेदकता घटत्वेन सह घटाभावप्रति-योगितायाः स्वरूपसम्बन्ध इत्युक्त्याऽयमर्थो निर्गलति यद् घटत्वेन सह घटाभावप्रति-योगिताया घटत्वमेवावच्छेदकतात्वेन सम्बन्धः, तथा च घटत्वस्यावच्छेदकतात्वेन-स्ववृत्तितया अवच्छेदकतासम्बन्धस्यानुयोगितानियामकः सम्बन्धः स्वरूपसम्बन्धः, प्रति-योगितायाश्च नियामको निरूपकत्वसम्बन्धः । एवं चावच्छेदकतायाः स्वरूपसम्बन्धेन

घटत्वनिष्ठतया घटत्वं तस्यानुयोगि, अवच्छेदकतानिरूपकत्वस्य घटाभावप्रतियोगितायां सत्वेन तादृशप्रतियोगिता तस्य प्रतियोगिभूतेति लभ्यते।

अत्रेयं जिज्ञासा यद् यत्रानुयोगिनः स्वरूपत्वेन सम्बन्धता, तत्र कस्तस्यानुयोगितायाः कश्च तत्प्रतियोगिताया नियामकः सम्बन्ध इति, अत्रोत्तरमिदं यद् भूतलेन सह घटाभावादेर्यो भूतलात्मकः सम्बन्धः, तस्यानुयोगितानियामकस्तादात्म्यसम्बन्धः प्रतियोगितानियामकं च स्वनिरूपितस्वात्मकसम्बन्धावच्छिन्नाधेयत्वम्। तथा च भूतलेन सह घटाभावादेर्यो भूतलात्मकः स्वरूपसम्बन्धः, स तादात्म्येन भूतलेऽस्तीति भूतलं तदनुयोगि, भूतले स्वरूपसम्बन्धेन घटाभावादेर्वृत्तितया भूतलस्वरूपनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयतया घटाभावादौ सत्त्वेन घटाभावादेस्तत्प्रतियोगिता, तत्सम्बन्धावच्छिन्नाधेयत्वतत्सम्बन्धप्रतियोगित्वयोरभेदेनोक्तकथने आत्माश्रयप्रसङ्गो न शङ्कनीयः, आधेयतात्वेन नियामकतायाः प्रतियोगितात्वेन च नियम्यताया एकत्रापि स्वीकर्त्तुं शक्यत्वात्।

● ● ●

# विधिमीमांसा

पद्मभूषण-आचार्यश्री पी० एन्० पट्टाभिरामशास्त्री, 'विद्यासागरः'

❋ ❋ ❋

विधिशब्दो लिङ्-लोट्-लेट्-तव्यप्रत्ययेषु प्रसिद्धः, तद्घटितपदसमभिव्याहृत-वाक्येष्वपि प्रयुज्यते। इमे विधयः, इमानि विधिवाक्यानीति प्रयोगानुपलभामहे। तेन विधिवाक्यमीमांसा विध्यर्थमीमांसेति द्वेधा विचारः प्रवर्तयितुं शक्यते। अत एवाप्पय्यदीक्षितेन्द्राः स्वीये विधिरसायने अपूर्व-नियम-परिसंख्याविधिवाक्यानि विचारितवन्तः, मण्डनमिश्रास्तु स्वीये विधिविवेके विध्यर्थं विवेचितवन्तः। विचार-द्वयमपि सूत्रारूढम्। अर्थवादाधिकरणे भगवान् जैमिनिः **'विधिना त्वेकवाक्यत्वात्'**[1] इत्यादि सूत्रयति। अत्र विधिनापदं विध्यर्थपरं विधिवाक्यपरञ्च। अर्थवादानां विध्येक-वाक्यतया विधिवाक्यैकवाक्यतया प्रामाण्यसाधकमिदं सूत्रम्। अत्रैवाधिकरणे विध्यर्थः कः? कथञ्च तदेकवाक्यतार्थवादानामिति व्याख्यातारो विचाराय प्रवृत्ताः। एवं विध्यर्थे इति तद्घटितपदसमभिव्याहृतेषु वाक्येषु किमपूर्वविधिः? उत नियमविधिः? अथवा परिसङ्ख्याविधिरिति विचाराः प्रवर्तन्ते। ते च विचारा **'व्रीहीन् प्रोक्षति'**, **'व्रीहीनवहन्ति'**, **'इत्यश्वभिधानीमादत्ते'**, **'आज्यभागौ यजति'** इत्यादिवाक्येषु तत्र तत्राधिकरणेषु जैमिनिना 'नियमार्थः', 'परिसङ्ख्या' इत्येवं सूत्रयता कृता इति विचारद्वयस्यापि सूत्रारूढत्वं तावत् सिध्यति। अत एव वाक्यशास्त्रमिदं वेदवाक्यार्थ-निर्णयाय प्रवृत्तमिति सर्वदार्शनिकव्यवहारः।

वाक्यार्थनिर्णयात्पूर्वं पदानामर्था अपि निर्णेतव्या भवन्ति, पदानामर्थान् अनव-बुध्य न खलु वाक्यार्थावधारणं सम्भवतीति जैमिनिस्तत्र तत्र पदार्थानपि चिन्तयति। जैमिनिना यत्र पदार्था न निवृताः, तत्र सूत्रव्याख्यातारोऽधिकरणरचयितारश्च वाक्यार्थ-निर्णयाय तानवधार्य प्रवर्तन्त इति मर्यादा। तत्र विध्यर्थविचारे मीमांसाशास्त्र एव सन्ति बहूनि मतानि। तानि सङ्क्षेपेणाग्रे प्रदर्शयिष्यामः।

---

१. जै० सू० १।२।७।

**'विधिना त्वेकवाक्यत्वात्'** इत्यादिसूत्रे 'विधिना' इति 'विधीयताम्' इति विधिशब्दद्वयं तृतीयान्ततया षष्ठ्यन्ततया च प्रयुक्तं वर्तते । तत्र विधिनापदं 'विध्युद्देशेन' इति विवृण्वन्ति शबरस्वामिनः । 'क्षेमसुभिक्षोऽयमुद्देशः, अतोऽहमस्मिन् प्रतिवसामि' इति व्यवहारेणोद्देशशब्दस्य स्थानमर्थं इति ज्ञायते । विधेरुद्देशः स्थानं वाक्यं विधिवाक्यमित्यर्थः सम्पद्यते । विधिवाक्येनैकवाक्यत्वाद्विधीनाम् अवयवार्थे षष्ठी । विध्यवयवानामर्थवादानां प्रामाण्यमिति सूत्रार्थः । विधेः स्थानं लिङादिकमपि, तद् घटितं पदं विधिपदम् । तत्सहकृतवाक्येनैकवाक्यत्वमर्थवादानामिति वा सूत्रार्थः ।

अत्रायं विषयो विविच्यते—अर्थवादानां विधिवाक्यैकवाक्यत्वे स्तुतिनिन्दा-द्वारा ते प्रवर्तका निवर्तकाश्च भवन्ति । विधयोऽपि तादृशमेव कार्यमाचरन्ति । तुल्यार्थत्वादुभयेषां समुच्चयो नार्हति भवितुम् । जैमिनिस्समुच्चयस्थले विकल्पमनुशास्ति । **'तुल्यार्थास्तु विकल्पेरन्'** इति । यत्रार्थवादरहिता विधयो विधिरहिता वा अर्थवादाः, तत्र स्वातन्त्र्येण प्रवर्तकत्वं निवर्तकत्वं वाभीप्सितम् । यत्र च सार्थवादा विधयः, तत्र किञ्चिदेकं त्याज्यम् । किं विधेस्त्यागः ? उतार्थवादानाम् ? इति संशये भूयोऽनु-ग्रहन्यायेनार्थवादानां भूयस्त्वात्तेषामनुग्रहो जैमिनेरभिमतः । अनेनैव न्यायेनाधुना श्रीजैलसिंहस्य राष्ट्रपतिपदे चयनमन्वभवाम । एतादृशेषु स्थलेषु विधेरर्थवादसिद्ध-प्रवर्तकत्वानुवादकत्वम्, अथवा विधिप्रत्ययस्य प्रयोगसाधुत्वार्थत्वमङ्गीकर्तव्यम् ।

अत्रार्थे दशमद्वितीयत्रयोदशाधिकरणन्याय आनुकूल्यमावहति । तत्र हि **'सत्रा-दुदवसाय पृष्ठशमनीयेन सहस्रदक्षिणेन ज्योतिष्टोमेन यजेरन्'** इति वाक्यमुदाहृत्य विचारः प्रवर्तितः । उद्-अवोपसर्गकस्यतेर्ल्यपि रूपमुदवसायेति, समाप्य त्यक्त्वा उत्थायेत्यादिस्तदर्थः । सत्रयागो बहुभिर्यजमानैः सप्तदशावरैश्चतुर्विंशतिपरमैर्वाऽनु-ष्ठेय ऋतुः । तत्र सर्वेऽपि समानफलभाजः, तेषु वरिष्ठः कश्चन गृहपतिश्चीयते, अन्ये सर्वेऽपि योग्यतानुसारेणार्त्विज्यं कुर्युरिति स्थितिः । एवञ्च बहुयजमानकर्तृक-सत्रयागं परिसमाप्य पृष्ठशमनीयाख्यं सोमयागमग्निष्टोमसंस्थाकं ते कुर्युरिति वाक्यार्थस्सम्पन्नः ।

अत्र त्रिप्रकारा विचारास्सूत्रकारेण प्रवर्तिताः । तत्र प्रथमः सहस्रदक्षिणेयं किमदृष्टार्था ? उत परिक्रयार्था ? इति । यदि पृष्ठशमनीयाख्यं कर्म सत्राङ्गम्, तर्हि दक्षिणा धर्ममात्रार्था, यदि च तदनङ्गं तर्हि परिक्रयार्था । सत्रे हि सर्वे यजमाना एव भवन्ति, आर्त्विज्यन्तु मिथः कर्तव्यम् । पृष्ठशमनीयस्य सत्राङ्गत्वेऽङ्गप्रधानयो-

स्समानकर्तृत्वनियमात् परिक्रयस्य नावसरः। सत्रानङ्गत्वे च सहस्रदक्षिणा परिक्रयार्था स्यात्। तदैको यजमानोऽन्ये चर्त्विजो दक्षिणया परिक्रीता भवेयुः। परिक्रयार्था दक्षिणा सत्रानङ्गञ्च पृष्ठशमनीयाख्यं कर्मेति सिद्धान्तः।

द्वितीयो विचारः—किमिदं कर्म संहृत्य सत्रिभिः कर्तव्यम्? उतैकैकशः? 'यजेरन्' इति विधीयमानो याग उपादेयः। उपादेयगता च संख्या पश्वेकत्वाधिकरणन्यायेन विवक्षिता भवतीति कर्मेदं संहृत्य कर्तव्यमिति सिध्यति।

तृतीयो विचारः—किं सत्रिण एव पृष्ठशमनीयेऽपि ऋत्विजो भवेयुः? उताप्यन्ये? इति। पृष्ठशमनीयस्य सत्रानङ्गत्वादन्य एवर्त्विजो वरीतव्या इति सिद्धान्तः।

ऋत्विजामन्यत्वे सहस्रदक्षिणा परिक्रयार्था। एवञ्च 'सत्रादुदवसाय यजेरन्' इति यागमात्रं विधीयते, तदाश्रयः प्रयोगः कर्तारस्तद्गता च सङ्ख्या इत्येतत्सर्वमनूद्यत इति पृष्ठशमनीयमेकैकशः कुर्यादिति पर्यवस्यति। एवञ्च यथा सत्रोदवसायवाक्ये क्त्वाप्रत्ययसिद्धप्रवृत्त्यनुवादकत्वे विधेः, तथैव वायव्यवाक्येऽपि विधेरर्थवादजन्यस्तुतिप्रयुक्तप्रवृत्त्यनुवादकत्वमिति सिद्धम्। अर्थवादाधिकरणसिद्धान्तभाष्यसन्दर्भमेवमेव व्याख्यान्ति केचन। तदयमस्मिन् पक्षे निर्गलितोऽर्थः अर्थवादसहितविधिरूपत्वे स्तुत्युन्नयनद्वारा विधिरेव विधेयं स्तुवन् तत्र पुरुषं प्रवर्तयति, विधिरहितार्थवादस्थले विधिमुन्नयन्नर्थवाद उन्नीतविधिना विहितं विधेयं स्तौति, प्रवर्तयति च पुरुषम्, सार्थवादविधिस्थले च भूयोऽनुग्रहन्यायेन सत्रोदवसायन्यायेन चार्थवादजन्यस्तुतिप्रयुक्तप्रवर्तकत्वादनुवादकत्वमेव विधेः। अत्रैव भाष्यसन्दर्भस्याशय इति।

भट्टवार्तिकपरिशीलने तु नायं पक्षस्साधीयानिति गम्यते। कस्यापि वाक्यस्य वाक्यान्तरेणैकवाक्यता विनाऽऽकाङ्क्षया न भवतीति सर्वसम्प्रतिपन्नम्। 'वायव्यं श्वेतमालभेत' इत्येकं वाक्यम्। 'वायुर्वै क्षेपिष्ठा' इत्याद्यपरम्। वाक्यद्वयमपि स्वस्वार्थाभिधाने परिपूर्णम्। परिपूर्णमेव वाक्यं वाक्यान्तरेणैकवाक्यतायां समर्थमित्यपि शास्त्रसम्मतः पक्षो भगवान् पाणिनिः 'विधिनिमन्त्रण०'[1] इत्यादिसूत्रेण विध्याद्यर्थेषु लिङं विदधाति। तत्र विधिर्नाम प्रवर्तना। प्रवर्तनैव लिङर्थः। 'प्रवर्तनायां लिङ् इत्येवं सुवचम्' इति भट्टोजिदीक्षितोऽपि वदन् पक्षमिमं परिपोषयति। प्रवर्तना च

---

१. अष्टाध्यायी—३।३।१६१।

प्रवृत्त्यनुकूलव्यापारः। तत्र प्रवृत्तिः प्रवर्तना चेत्युभयमपि व्यापाररूपम्। व्यापारश्च धात्वर्थः, न प्रत्ययार्थ इति फलमेव धात्वर्थो व्यापारश्च प्रत्ययार्थं इति ब्रुवाणा वैयाकरणा मीमांसकाश्च स्वीयं मस्तकं स्फोटयन्तः कलहे व्याप्रियन्ते। तस्य तस्य शास्त्रस्य नियतो विलक्षणश्च पन्थाः परिकल्पितः। तस्मिन्नेव पथि स गच्छेत्। मिथो मस्तकस्फोटनमात्रेण समन्वयो न भविता। यथाऽधुना कश्चनैकं वर्गं कामनिष्ठस्य समाजवादिनो वा प्रविष्टः प्राक् स्वार्थसिषाधयिषया वर्गान्तरे 'भाजपा-जनता' इत्यादौ कूर्दते, न खलु तथाऽस्मच्छास्त्रकारा निश्चिते स्वीये पथि गच्छन्तो मार्गान्तरमवलम्बन्ते। कामं वादकथासु स्वीयासाधारण्या वाग्धोरण्या केनचन कश्चन निगृहीतो भवेत्; तथापि पक्षान्तरं स न प्रविशेत्। अस्तु यथा तथा वा। प्रकृते प्रवर्तना प्रवृत्त्यनुकूलव्यापारो लिङर्थः, स एव प्रत्ययस्यापि, स चायं न धात्वर्थं इति मीमांसकस्य पन्थाः।

एवं स्थिते **'वायव्यं श्वेतमालभेत'** इत्यत्र विध्यर्थः प्रवर्तना, सैव च शाब्दीभावनेति निगद्यते। सा च लोके पुरुषनिष्ठा, वेदे च तदभावाच्छब्दनिष्ठः भवति। विधिवाक्यं स्वार्थाभिधाने परिपूर्णमपि विधेः प्रवर्तनायाः किं केन कथमित्याकाङ्क्षात्रयं जायते। तत्र पुरुषप्रवृत्तिर्लिङादिज्ञानञ्च क्रमेण साध्याकाङ्क्षां साधनाकाङ्क्षाञ्च पूरयतः। तत्र लोके प्रवर्तकः पुरुषः, वेदे च विधिः लिङादिज्ञानवन्तमप्यप्रवर्तमानं पुरुषमनुभूय कथमहमेनमस्मिन् प्रवर्तयेयमित्याकाङ्क्षतः।

एवमेव **'वायुर्वै क्षेपिष्ठा देवता'** इत्यर्थवादवाक्यं स्वार्थाभिधाने परिपूर्णमपि ममोपकार्यं किमित्याकाङ्क्षति। एकत्रापकारकाकाङ्क्षा, अपरत्र चोपकार्याकाङ्क्षेत्युभयोः प्रकरणाधिकरणसिद्धनष्टाश्वदग्धरथन्यायेनैकवाक्यता सिध्यति। एवञ्च सति न विधेर्व्याकोपोऽङ्गीकृतो भवति। तथा च नात्र भूयोऽनुग्रहन्यायस्यावसरः, विधिशक्तेरक्षुण्णत्वात्। नाप्यत्र सत्रोदवसायन्यायस्य प्रसरः। तत्र 'उदवसाय' इति क्त्वाप्रत्ययेन विधिमनपेक्ष्य क्रियामात्रमुच्यते। 'यजेरन्' इत्यत्र तु विधित्वमाश्रयणीयमेव, अन्यथा तत्रार्थीभावनायां धात्वर्थस्यैव साध्यत्वमापतेत्। तथा सति विधीयमानस्य पुष्ठशमनीयस्य कर्मणो विफलत्वं स्यात्। अतो नास्य दृष्टान्तता। अथवा रवेत्यधिकरणन्यायेनात्रापि क्त्वाप्रत्ययोपात्तभावनोपसर्जनकं भावनानन्तरं विधीयत इत्यङ्गीकारे नास्य दृष्टान्तता।

एवञ्च 'विधिना त्वेकवाक्यत्वात्' इत्यत्र सूत्राविनाशेनैव विधिनैकवाक्यत्वमङ्गीकृतं भवति। तत्र सौत्रं विधिनापदं विध्यर्थपरम्। तेनार्थवादानामेकवाक्यता न सम्भवतीति भाष्यकारो 'भूतिकाम इत्यन्तो विध्युद्देशः' इत्याह। भाष्यस्यास्य विवरणावसरे भट्टपादाः 'विध्यर्थेन त्वेकवाक्यत्वासम्भवात्सत्तातिरेकेणोद्देशग्रहणं भूतिकाम इत्येवमन्त इति च फलादिसङ्गत्युत्तरकालं स्तुत्यवसरप्रदर्शनार्थम्' इति वदन्ति। एतेन सौत्रविधिशब्दस्य लिङादिरर्थे भाष्यगतोद्देशशब्दस्य फलसंयुक्तवाक्यमर्थं इति सिध्यति सादृशफलसम्पादनाय विधिः पुरुषं प्रवर्तयति। पुरुषप्रवृत्तिरेव विधिना साध्यते। प्रवृत्तेश्च साध्यं फलं स्वर्गकामाधिकरणन्यायेन, साधनञ्च धात्वर्थो भावार्थाधिकरणन्यायेन, क्रियावाक्यानि चाङ्गानि प्रकरणाधिकरणन्यायेनेतिकर्तव्यतयान्वियन्ति। सर्वोऽयं प्रपञ्चो विध्यर्थः प्रवर्तनेत्यङ्गीकार एवोपपद्यते।

एवं प्रवर्तनारूपार्थबोधकविधौ सत्यपि क्वचित् 'य एवं विद्वान् पौर्णमासीं यजते', 'य एवं विद्वान् अमावास्यां यजते' इत्यादौ विधायकत्वं तस्य न स्वीक्रियते, यत्तदादिशब्दस्य विधिशक्तिप्रतिबन्धकत्वस्य विधिमन्त्राधिकरणे[1] साधितत्वात्। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इत्यादौ यच्छब्दघटितत्वेऽपि विधायकप्रत्ययाभावेऽपि 'भवति' इति वर्तमानापदेशे सत्यपि आग्नेयाधिकरणन्यायेन विधायकत्वं स्वीक्रियते। अत्र च हेतुः प्रमाणान्तरग्राह्यभावः क्वचित्, प्रयोगविध्यन्वयिगुणोपादानं क्वचित्, क्वचिच्च पञ्चमलकारस्वीकरणञ्चेति व्यष्ट्या समष्ट्या च भवतीति विविधेयं विधिमीमांसा। प्रकृतवाक्ये च समष्ट्या तान् हेतूनुपलभामहे। 'य एवं विद्वान्' इति वाक्ये तु प्रयोगान्वयिगुणोपलम्भे सत्यपि तादृशगुणस्य प्रमाणान्तरेण प्राप्तिसत्वेनानुवादकत्वमेवानयोर्वाक्ययोरिति विशेषः।

तत्र विधिरयम्—उत्पत्ति-विनियोग-प्रयोगाधिकाररूपेण चतुर्विधः। तत्रापि उत्पत्तिविनियोगविध्योरपूर्वविधिः, नियमविधिः, परिसङ्ख्याविधिरिति त्रयो विधयोऽन्तर्भवन्ति। त्रयाणाममीषां लक्षणबोधकं भट्टपादानां वार्तिकम्—

'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते॥ इति।

सर्वत्र लक्षणे विध्यन्तराप्रवृत्तिसहितेतद्विध्यप्रवृत्तिदशायामिति विशेषणमप्राप्ते- र्बोध्यम्। तथा च विध्यन्तराप्रवृत्तिसहितेतद्विध्यप्रवृत्तिदशायां योऽत्यन्तमप्राप्तमर्थं

१. जै० सू० २।१।६।

विधत्ते, सोऽपूर्वविधिः; तादृशदशायां यो पाक्षिकीमप्राप्तिं बोधयति, स नियमविधिः। एवं तादृशदशायां य इतरनिवृत्तिम्, स परिसंख्याविधिरिति लक्षणानि सम्पद्यन्ते। **'व्रीहीन् प्रोक्षति', 'व्रीहीनवहन्ति'** इत्यश्वाभिधानीमादत्त इति प्रसिद्धान्युदाहरणानि क्रमेण।

एवं सामान्यतस्त्रयाणां स्वरूपेऽवस्थिते विधीन् मीमांसन्ते श्रीदीक्षितेन्द्राः स्वीये विधिरसायने। तत्र 'व्रीहीन् प्रोक्षति' इत्यत्र विध्यन्तरावृत्तिसहितैतद्विध्यप्रवृत्तिदशायां व्रीहिषु प्रोक्षणं कर्तव्यमिति ज्ञानं न जायत इत्यज्ञातमप्राप्तमर्थं प्रोक्षणं विदधातीत्ययमपूर्वविधिरिति परिगण्यते। इदं ब्राह्मणवाक्यं प्रयोगाद् बहिःपदार्थमवबोध्य चरितार्थम्। अनुष्ठानकाले च तत्तन्मन्त्रानुच्चार्य पदार्थानामनुष्ठानं तन्मन्त्रार्थानुसन्धानपुरस्सरं कर्त्तव्यमित्यस्ति जैमिनेरनुशासनं प्रोक्षणस्य च मन्त्रः **'अग्नये त्वा जुष्टं प्रोक्षामि'** इति। अस्य च देवतार्थद्रव्यप्रोक्षणलिङ्गबलाद्धविः प्रोक्षणद्वारेण तादर्थ्यमस्तीति तदेव हविः प्रोक्षणकर्तव्यतापि गम्यत इति किं प्रयोजनं 'व्रीहीन् प्रोक्षति' इति विधेरप्राप्तार्थविधायकत्वाभावात्। अत्रार्थे जैमिनेः दशम-तृतीय-चतुर्थाधिकरणन्याय आनुकूल्यमावहति। तथा हि—चयनप्रकरणे 'षड्भिर्दीक्षयति' इति विधिराम्नायते। षड्भिर्मन्त्रैर्यजमानं दीक्षयेदिति तदर्थः। मन्त्राश्च—**'आकूतिमग्निं प्रयुजं स्वाहा'** इत्यादयः षट् पठिताः। इमे च स्वाहाकारान्ताः। तद्बलाद्धोमद्वारेण दीक्षार्थत्वं सिध्यति, तत एव च होमकर्तव्यतापि गम्यते। आहुतिद्वारापि दीक्षार्थत्वस्योपपत्तौ 'षड्भिर्दीक्षयति' इत्यस्यापूर्वविधित्वं नोपपन्नमिति।

एवं 'व्रीहीनवहन्ति' इत्यत्रापि नियमविधिरनुपपन्नः। दर्शपूर्णमासप्रकरणे **'अवरक्षो दिवः सपत्नं वध्यासम्'** इति श्रुतस्य मन्त्रस्य दर्शपूर्णमासार्थत्वं तावदविवादम्। तत्रापि मन्त्रगतावहननलिङ्गफलादवहननद्वारेण तदर्थत्वं सिद्धम्। तत एव पुरोडाशीयद्रव्यवितुषीकरणायानियतप्राप्तस्यावहननस्य नियमलाभे 'व्रीहीन् अवहन्ति' इति विधेः किं प्रयोजनम्? अस्या अपि शङ्कायास्तार्तीयसपेटिकासिद्धन्यायोऽनुकूलः।

तथा हि—ज्योतिष्टोमे ऋत्विजां सोमरसभक्षणाय भक्षावाके मन्त्राः पठिताः, तेषां तत्तत्कार्ये विभज्य विनियोगस्सिद्धान्तः, तत्र **'अश्विनोस्त्वा बाहुभ्यां साध्यसम्'** इति **'नृचक्षसं त्वा देवसोम सुचक्षा अवख्येषम्'** इति च मन्त्रद्वयम्। प्रथमो मन्त्रः सोमरसपात्रग्रहणाय, द्वितीयश्च तदवेक्षणायेति लिङ्गबलेन तद्द्वारा

मन्त्रयोर्भक्षसम्बन्धित्वमवगतम् । तत्र परहस्तगतं सोमपात्रमगृहीत्वापि तदनवेक्ष्यापि भक्षयितुं शक्यत्वेनानियतप्राप्तयोर्ग्रहणावेक्षणयोर्मन्त्रगतलिङ्गादेव नियमोऽङ्गीकृतः। तद्वद् 'व्रीहीनवहन्ति' इत्यत्रापि भवितुमर्हति। अपि च परिसंख्यायामितरनिवृत्तिस्तथैव 'व्रीहीनवहन्ति' इत्यत्रापि नखविदलनादेरितरस्य निवृत्तिः। तत्रार्थादिति परिसंख्यायान्तु फलत इति भेदे कल्पितेऽपि निवृत्तिस्तु तुल्यैव। एवमेव 'इत्यश्वाभिधानीमादत्ते' इति परिसंख्योदाहरणे द्वयोस्समुच्चितत्य प्राप्तौ स्वीकृतायामपि मन्त्रस्याश्वाभिधानीग्रहणाङ्गत्वं नियम्यत इति वक्तुं शक्यमेव। एवं सर्वत्र मीमांसाशास्त्रे प्रयोगविधिवाक्यान्येवावलम्ब्य विधि मीमांसा प्रवर्तिता शास्त्रस्यास्येयमेव मीमांसा प्राधान्येन परिगण्यते।

अपरा च विध्यर्थमीमांसा। विधेरर्थः क इति तत्तद्ग्रन्थप्रणेतारो विचारयन्ति। तत्रास्ति मीमांसकेष्वेव भूयान् मतभेदः। संक्षेपेण तानि मतानि प्रदर्शयितुमभिलषामि। शास्त्रान्तरसिद्धो विध्यर्थो न प्रदर्शयिष्यते।

तत्र भट्टपादा विधिना त्वेकवाक्यत्वादित्यादिसूत्रभाष्यविवरणप्रसङ्गे **'इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते, शब्दात्मिका चार्थात्मिका च। तत्रार्थात्मिकयाऽर्थवादा नोपेक्ष्यन्ते, शब्दात्मिकया तु ग्रहीष्यन्ते'**[1] इत्यभिदधाना विधेरर्थं प्रवर्तनापरपर्यायां शाब्दीभावनामङ्गीकुर्वन्तीति स्पष्टम्। वार्तिकस्यास्य व्याख्यातारः श्रीभट्टसोमेश्वराः स्वीये राणके विध्यर्थविषये प्राप्तानि बहूनि मतानि निरस्य यथावार्तिकमेव प्रेरणा प्रवर्तना शाब्दीभावनैव विध्यर्थ इति व्यवस्थापयन्ति। भाव्योत्पादानुकूलव्यापार एव भावनापदार्थः। तादृशपुरुषप्रवृत्तिरूपभाव्योत्पादानुकूलव्यापारत्वं प्रेरणायां प्रवर्तनापरपर्यायशाब्दीभावनायामक्षतम्। लोके चायं व्यापारः प्रयोजकपुरुषनिष्ठः, वेदे च पुरुषाभावेन लिङादिशब्दनिष्ठ एवालौकिको धर्मः शाब्दीभावनापदवाच्य इति प्रागवोचम्।

**पार्थसारथिमिश्रस्तु** राणकोक्तलिङादिशब्दगतमलौकिकधर्मत्वमनङ्गीकृत्य शाब्दीभावनापरपर्याया प्रवर्तना विध्यर्थः, स। चार्थीभावना प्रतिपत्त्यनुकूलव्यापारात्मा इति वदति। लिङ्विधिश्चाभिदधाति आर्थीभावनाश्चेति तदाशयः। न्यायरत्नमालायां प्रवर्तनात्वेन रूपेणेष्टसाधनत्वमेव लिङर्थ इति निर्दिशन् पूर्वोक्तमेवाशयं दृढीकरोति।

---

१. तन्त्रवार्तिकम्—पृ० ११४, पूनासंस्करणम्।

आर्थीभावनायां साधनत्वेन धात्वर्थोऽन्वेति। स एव चेष्टसाधनम्। इष्टसाधनत्वञ्च न तत्त्वेन; किन्तु प्रवर्तनात्वेन। एवञ्च इष्टसाधनत्वरूपा अभिधाख्यभावनाप्रतिपत्त्यनुकूलप्रवर्तनैव विध्यर्थं इति फलति।

**खण्डदेवस्तु न्यायसुधाकृन्मतमेवानुसरति। मण्डनमिश्रास्तु—**इष्टसाधनत्वमेव विध्यर्थं इति मतान्तरखण्डनपुरस्सरं स्वीये विधिविवेके साधयन्ति।

एवं प्रभाकरप्रस्थाने नियोगो विध्यर्थः, स च कार्यमिति अपूर्वमिति च व्यवह्रियते। अस्यैव निरूपणं भवनाथ-वरदराज-शालिकनाथ-नन्दीश्वर-रामानुजप्रभृतयः प्रभाकरमतानुयायिनः किञ्चिन्नामपरिवर्तनपुरस्सरं नियोगस्य कार्यस्यैव विध्यर्थत्वं व्यवस्थापयन्ति। मीमांसकसम्मतविध्यर्थो विशेषरूपेण कालान्तरे निरूपयिष्यत इत्यत्रैव विरमामीति शम्।

• • •

# अपोहस्वरूपविमर्शः

डॉ० गोपिकामोहनभट्टाचार्यः

आचार्यः, संस्कृतविभागस्य

कुरुक्षेत्रविश्वविद्यालये

❀ ❀ ❀

शब्दार्थविचारावसरे बौद्धैः 'अपोहवादः' प्रपञ्चितः। महाभाष्यकारेण पतञ्जलिना 'गौरित्यत्र कः शब्दः[1]' इत्यत्र शब्दार्थस्वरूपमधिकृत्य मूलीभूतः प्रश्न उत्थापितः। अनन्तरं मीमांसकानां वैयाकरणानां नैयायिकानां च नये शब्दार्थस्वरूपं बहुधा प्रपञ्चितम्। 'जात्याकृतिव्यक्तयस्तु पदार्थः' इति।

मीमांसकैर्जातिपक्ष एव उररीकृतः, वैयाकरणैस्तावत् (व्याडिः) व्यक्तिपक्षः। सौगतप्रस्थाने दिङ्नागात् प्रारभ्य रत्नकीर्त्यन्तं शब्दार्थस्वरूपमधिकृत्य बहुधा वाचोयुक्तिरूपमुपलभ्यते। मूलतः सौगता अपोहवादिनः।

अन्यापोह एव अपोहपदेन संक्षेपतो व्यवह्रियते। अर्थाद् अपोह इत्यस्य अन्यापोह एव शब्दार्थः। तथा च गौरिति शब्दे उच्चारिते गोभिन्नं यत्, तस्माद् अन्यतम व्यावित्तरेव शब्दार्थः पर्यवस्यति।

नैयायिकास्तावद् एवं मन्यन्ते—सास्नादिमान् बाह्यः सन् गोत्वविशिष्ट-गोव्यक्तिरेव गोशब्दस्यार्थः।

अत्र सौगता एवं प्रत्यवतिष्ठन्ते—गोशब्दश्रवणानन्तरं पदार्थबोधकाले कश्चिद् बाह्यः सन् गोव्यक्तिविशेष अवश्यमेव तत्र स्यादिति न नियमः। तत्काले तद्देशे च असत्यामपि गोव्यक्तौ गोशब्दार्थबोधो जायत इति नात्र काचिद् विमतिः। अर्थस्तु स्वलक्षण एव। स एव सन् अपरमपि सर्वं विकल्पात्मकम्। शब्देन सहायस्य स्वलक्षणस्य सम्बन्धो न सम्भवति। स्वलक्षणं विनैव शब्दोऽर्थं प्रकाशयति। ननु सोऽर्थः अत्यन्तविलक्षणः स्वलक्षणरूपो नो चेत् किं रूपः? स तु विकल्पात्मकः, विकल्पेनैव जातः। मनसा निर्मितो मानस एव।

---

१. महाभाष्यम्—पस्पशाह्निके।

अत्र प्रश्नोऽयं समुदेति—एवं सति व्यवहारलोपप्रसङ्गः स्यात्। तथा च 'गामानय' इति वाक्यश्रवणानन्तरं श्रोतुर्गवानयने प्रवृत्तिर्जायते। कश्चिद् गोव्यक्ति-विशेषमेवानेतुं श्रोता प्रवर्तते। अत उच्चारितगोशब्देन सह गोरूपार्थस्य कोऽपि सम्बन्धोऽवश्यमेव अङ्गीकरणीयः। अत्रेदं समाहितम्—साक्षात्सम्बन्धाभावाद् अपोहवादिभिः स सम्बन्धः निषेधमुखेन प्रस्तूयेत। गोशब्दोच्चारणानन्तरमेव सर्वे गोभिन्नाः पदार्था निराकृता भवन्ति। यद् अवतिष्ठते, स तु गोव्यक्तिरेव, नान्यः। स व्यक्तिरन्यापोहविशिष्ट एव। एवं गोशब्दोच्चारणाद् अर्थाद् गोप्रतिभासात् सर्वे अन्ये अगोप्रतिभासा अपि निराकृता भवन्ति। प्रत्यक्षे व्यक्तिरेव सर्वात्मना प्रतिभाति। शाब्दज्ञाने च स एव व्यक्तिर् अतद्व्यावृत्त्यात्मकतया ज्ञानविषयो भवति। अतो गोशब्दस्य वाच्यार्थेऽगोनिवृत्तिरेव। अतद्व्यावृत्त्यैव शब्दानां स्वार्थबोधे सामर्थ्यमिति पर्यवसितार्थः।

ज्ञानश्रीमित्रेण अपोहप्रकरणस्य प्रथमकारिकायाम् अपोहस्याभिधेयत्वं प्रतिपाद-यितुमुक्तम्—

> **अपोहः शब्दलिङ्गाभ्यां प्रकाश्यत इति स्थितिः।**
> **साध्यते सर्वधर्माणामवाच्यत्वप्रसिद्धये॥**

सौगतनये सर्वप्रथमम् आचार्यदिङ्नागेन प्रमाणसमुच्चयस्य पञ्चमाध्यायेऽपोह-स्वरूपमेवं प्रतिपादितम्—

> **न प्रमाणान्तरं शाब्दमनुमानात्तथाहि तत्।**
> **कृतकत्वादिवत् स्वार्थमन्यापोहेन भासते॥**

कमलशीलकृततत्त्वसङ्ग्रहपञ्जिकायाम् उद्धृतेयं दिङ्नागकारिका। अस्याय-माशयः—शाब्दस्य नानुमानान्तरात् पृथक् प्रमाणत्वम्, परन्त्वनुमान एवास्यान्त-र्भावः। तथा च यथा अनुमितौ लिङ्गेन अन्यव्यवच्छेदेन साध्यसिद्धिर्जायते, तथा शब्दोऽपि अन्यापोहेन स्वार्थमभिदधाति। दिङ्नागमते लिङ्गमन्यव्यवच्छेदेन साध्यं साधयति, यथा पर्वते वह्न्यनुमितौ लिङ्गेन धूमेन सपक्षवृत्तित्वेन विपक्षव्यावृत्तित्वेन च सामान्यतया वह्नेर्ज्ञानं जायते, न तु कस्यचिद् वह्निविकल्पात्मक एव। वह्निस्व-लक्षणमेव सत्। एतत्तु सर्वानुभवसिद्धं यद् वह्निविरहितस्थले धूमो न विद्यते, यत्र वह्निरस्ति, तत्रैव धूमज्ञानं सम्भवतीति सपक्षवृत्त्या विपक्षव्यावृत्त्या च धूमेन अवह्निव्यावृत्तिविशिष्टस्य ज्ञानं जायते। स एव अनुमितेर्विषयः।

अनुमितेरयं क्रमः शब्दाद् अर्थावगतावपि परिदृश्यते। घटशब्दोच्चारणानन्तरं ये खलु विपक्षा अघटाः, घटभिन्ना इति यावत्, तेभ्यो व्यावृत्तिविशिष्टस्यैव ज्ञानं जायते। तदेवोक्तं दिङ्नागेन—'शब्दोऽर्थान्तरनिवृत्तिविशिष्टान् एव भावान् आह'[1] कस्यचिद् अभिधेयार्थस्य सन्ति बहूनि रूपाणि—सत्ताज्ञेयत्वादयः।

यथा वृक्षस्तु अभिधेय एव, तमवबोधयितुं वृक्ष इति, पार्थिव इति, द्रव्यमिति, सन् इति वा शब्दाः व्यवह्रियन्ते। सर्वे एवैते शब्दा वृक्षम् अभिधातुं समर्थाः। यदि शब्दः स्वलक्षणार्थेन साक्षात् सम्बध्येत, तर्हि सर्वे एव पूर्वोक्ताः शब्दाः समानार्थका भवेयुः, समानार्थबोधकत्वात्। नो चेदेकस्यैव पदार्थस्य स्वरूपभेदो जायेत, वाचकशब्दभेदात्। अतः शब्दो वस्तुसत्पदार्थेन सह न सम्बध्यते। केवलं विकल्पशून्यं प्रत्यक्षज्ञानमेव वस्तु सत् पदार्थं विषयीकरोति। शब्दस्तु तं निर्विकल्पकप्रत्यक्षग्राह्यं स्वलक्षणं पदार्थान्तरेभ्यो व्यावर्त्तयति। वृक्षभिन्नेभ्यः पदार्थेभ्यो व्यावर्त्तयितुं कञ्चित् पदार्थं 'वृक्षः' इति शब्देन व्यवहरन्ति वृद्धाः। एवं तमेव पदार्थं 'द्रव्यम्' इति व्यवहरन्ति, अद्रव्यपदार्थेभ्यो वृक्षं व्यावर्त्तयितुमिति। अतः पदार्थस्यैकांशेनैव सह शब्दः सम्बध्यते; परन्तु पदार्थस्य अंशा विकल्पा एव पदार्थस्य निरंशत्वात्। अत एवायाति यद् मनःकल्पितांशेनैव शब्दानां सम्बन्धः। तदेवोक्तं धर्मकीर्त्तिना—**'सर्वे शब्दा विवेकविषया विकल्पाश्च'।**

उद्द्योतकरेण न्यायवार्तिके कुमारिलभट्टेन च श्लोकवार्त्तिके सप्रपञ्चं दिङ्नागोक्तापोहवादो निराकृतः। तदत्र किञ्चिद् विचार्यते। भट्टपादानाम् अपोहविषये विप्रतिपत्तयः शान्तरक्षितेन निराकृताः। अनेन भट्टपादस्य प्रायेण ६७ संख्याकाः कारिकाः समुद्धृताः। कुमारिलपादस्य तात्पर्यं कमलशीलकृततत्त्वसङ्ग्रहपञ्जिकात एव साधु प्रकटीभवति। अपोहवादम् अनङ्गीकुर्वतां भाट्टानां नैयायिकानाञ्च मते बौद्धसम्मतापोहवादो निवृत्तिस्वभाव एव। अर्थाद् अभावात्मकेनैव गृहीतः; परन्तु विधिमुखतयैव 'गामानय' इत्यादिवाक्याद् गवादिबुद्धिर्जायते, न तु अगो-अपोहरूपेण, अर्थाद् निषेधरूपेण। तेन शब्दार्थस्य विधिरूप एव वाच्यः।

अत्र बौद्धैरेवं प्रतिविधीयते—स्वलक्षणात्मनि वस्तुनि वाच्ये सर्वात्मना प्रतिपत्तेर्विधिनिषेधयोर् अयोगः स्यात्। गौरिति शब्देन यदि बाह्यो गोव्यक्तिविशेष

---

१ द्रष्टव्यम्—प्रमाणवार्तिकस्ववृत्तिः, पृ० २५१; तत्त्वसङ्ग्रहपञ्जिका—पृ० ३७१; प्रमेयकमलमार्त्तण्डः, पृ० ४३६।

एवोच्यते, तर्हि 'गौरस्ति' इत्यत्र अस्तीति पदं व्यर्थं स्यात्। 'गौर्नास्ति' इत्यपि असमर्थं भवेत्। गौरित्यनेन विधिमुखतया यस्य प्रतीतिर्जायते, तस्य 'नास्ति' इत्यनेन निराकरणं विरोधायैव भवति। किञ्च, गौरिति पदेन यदि असद्भूतो 'गौः' उच्येत, तर्हि 'नास्ति' इति पदं व्यर्थं स्यात्। असद्भूतं गावमधिकृत्य 'अस्ति' इति कथनमपि विरोधाय कल्पेत। अतो वस्तुभूतं स्वलक्षणं न वाच्यं भवतीति सिद्धान्तः।

पूर्वमेवोक्तं दिङ्नागमते निषेधात्मक एव अपोहः। दिङ्नागकृतहेतुमुखे निषेधात्मकत्वमेव प्रतिपादितमिति हेतुमुखस्यालभ्यतया तत्त्वसङ्ग्रहपञ्जिकात एवोपलभ्यते। कमलशीलेनोक्तं **'कथं तर्हि हेतुमुखे लक्षणकारेण असम्भवो विधेरित्युक्तम्'**[1]। शान्तरक्षितेनापोहस्य निषेधात्मकत्वं परिहर्त्तुं प्रयतितम्। अतो दिङ्नागोक्तापोहस्य निषेधात्मकताया नवीनं व्याख्यानमनेन कृतम्। तेनोक्तं यत्—**'असम्भवो विधेर् इत्यत्र सामान्यादेरसम्भवतायामेव तात्पर्यम्'**[1]। तदुक्तम्—

**असम्भवो विधेरुक्तः सामान्यादेरसम्भवात्।**
**शब्दानां च विकल्पानां वस्तुतोऽविषयत्वतः**[2]॥

यद्यपि शान्तरक्षितेन दिङ्नागोक्तोऽपोहवादः कथमपि समर्थयितुं चेष्टितम्, तथापि मन्ये निषेधात्मक एव अपोह इति दिङ्नागमतमासीदित्येवं मनसि कृत्यानेन पश्चाद् अपोहवादमधिकृत्य नवीनमुद्भावनं प्रदर्शितम्। जातिवादिनां कुमारिलोद्द्योतकरादीनां खण्डनं परिहर्त्तुम् अपोहवादं नवीनदृष्ट्या प्रपञ्चयितुं शान्तरक्षितेनोक्तं वस्तुतो विधिरेव शब्दार्थ इति। शब्दश्रवणानन्तरं प्रथमं विधिरेव स्फुरति, पश्चात् सामर्थ्याद् निषेधरूपोऽपोहो निश्चीयते। स्फुटमत्र यत् शान्तरक्षितेन वृत्तिद्वयम् अङ्गीकृतम्—मुख्या गौणी च। मुख्यया वृत्त्या गोव्यक्तेर्भानं (विधेर्भानं) पश्चात् सामर्थ्याद् अर्थाद् अर्थापत्त्या 'नायमश्वः' इत्यादिकं निषेधात्मकं ज्ञानं जायते। तदुक्तं तत्त्वसङ्ग्रहे—

**प्रसज्यप्रतिषेधोऽपि सामर्थ्येन प्रतीयते।**
**न तदात्मा परात्मेति...............**[3]॥

पश्चाद् रत्नकीर्त्तिना अपोहसिद्धिनिबन्धे अपोहस्थापनावसरे शान्तरक्षितोऽपि निराकृतः।

---

१. तत्त्वसंग्रहपञ्जिका-पृ० ३३९; २. तत्त्वसंग्रहः, श्लोकः-१०९७।
३. तत्त्वसंग्रहः-श्लो० १०१३-१४।

वस्तुतोऽपोहसिद्धिग्रन्थे केषाञ्चिन्मतमपि उपलभ्यते, येषां मते शब्दस्य वाच्यतया निषेध एव प्रथमं स्फुरति, अनन्तरं विधेः सामर्थ्यात् प्रतीतेः। तदुक्तं रत्नकीर्त्तिना—**'अन्यापोहप्रतीतौ सामर्थ्याद् अन्यापोढोऽवधार्यते इति प्रतिषेधवादिनां मतम्।'**

नेदं सङ्गतमिति रत्नकीर्त्तिः। न ह्येवं दृश्यते यत् कश्चित् प्रथमं विधिरूपं शब्दार्थं प्रतिपद्यते, पश्चाद् निषेधरूपम्, अथवा प्रथमं निषेधरूपम्, पश्चाद् विधिरूपमिति। प्राथमिकज्ञाने क्रमानुल्लेखः सर्वानुभवसिद्ध एव। तदुक्तं रत्नकीर्तिना—**'प्रतिपत्ति क्रमदर्शनात्'**।

वस्तुतः कस्यचिद् वस्तुनः प्रतिपत्तिरेव अन्यापोहप्रतिपत्तिः। विधि-निषेधयोः समकालमेव स्फुरणं भवति। विधिरूपार्थस्य (यद्यपि सोऽपि विकल्पात्मकः) निषेध-रूपार्थस्य च युगपदेव भानं जायते। शब्दार्थस्तु न कार्त्स्न्येन विधिरूपः, निषेधरूपो वा। निषेधेन विशिष्टो विधिरेव शब्दार्थः। विधिरूपार्थं गृहीत्वैव व्यवहारः प्रचलति। **'गामानय'** इत्युक्ते न कश्चिद् अगो-अपोहम् आनेतुं प्रयुक्तः स्यात्; परन्तु तदन्य-व्यावृत्तिविशिष्टमेवानेतुं प्रयतते। अत्रेदमवधेयं यद्यपि शब्दार्थस्य निषेधरूपत्वमत्र शब्देन नोक्तम्; तथापि तत्तु नूनमेव ज्ञाने प्रतिभासते। तद्यथा नीलोत्पलं वाचयितुम् इन्दीवरशब्दः प्रयुज्यते। तत्र नीलवाचकः कोऽपि शब्दो नास्ति; परन्तु इन्दीवरशब्द-प्रयोगानन्तरमेव नीलोत्पलप्रतीतिर्जायते समकालमेव नीलरूपस्य, उत्पलस्य च भानं जायते। एवं निषेधवाचकशब्दस्यानुल्लेखेऽपि गौरित्युक्ते गोप्रतीतौ तुल्यकालमेव विशेषणतया अगो-अपोहस्फुरणम् अनिवार्यम्[1] (तथा विधौ प्रतीयमाने विशेषणतया तुल्यकालम् अन्यापोहप्रतीतिः), अन्यथा शब्दाद् अर्थप्रतिपत्तिकाले तदन्यपरिहारेण प्रवृत्तिर्न जायेत।

वस्तुतो ज्ञानश्रीमित्रस्य रत्नकीर्त्तेश्चेयमुक्तिः दिङ्नागानुसारिण्येव प्रतिभाति (तुल०—**'शब्दः अर्थान्तरव्यावृत्तिविशिष्टान् एव भावानाह'**)। अत एव धर्मकीर्त्तिनाऽप्युक्तम्—'अत एव शब्दे तदन्यव्यावृत्तिः स्वार्थाभिधानं न व्यापारद्वयम्, स्वार्थस्य अभिधानाद् एव तदन्यव्यावृत्तिगतिः स्वार्थस्य भेदरूपत्वात्। न ह्यन्वय-अव्यावृत्तिमतः, नापि अनन्वयिनो व्यावृत्तिः। अत एव वस्तुतो विधिनिषेधौ परस्परा-श्रितौ। एकेन अपरस्य स्फुरणं जायते'।

अत्रेयं शङ्का—एवञ्चेद् अन्योन्याश्रयो दोषः सम्भाव्यते। ज्ञानश्रीमित्रेण अपोहप्रकरणे सप्रपञ्चं रत्नकीर्त्तिना अपोहसिद्धावस्य समीचीनं समाधानं कृतम्।

---

१. तुलनीयम्-ज्ञानश्रीमित्रनिबन्धावलिः-पृ० ३०२।

ज्ञानश्रीमित्रेणोक्तम्—'इदमन्योन्याश्रयणं ग्राम्यधन्धीकरणमेव'। वस्तुतो जातिशक्तिवादे व्यक्तिशक्तिवादेऽप्ययं दोषः सम्भवति, गवापरिज्ञाने गोत्वसामान्यापरिज्ञानात्, वस्तुतो यदि अगो-अपोढो गोशब्दवाच्य इत्याकारकः सङ्केतः स्वीक्रियेत, तदा अयमन्योन्याश्रयदोषः सम्भाव्येत; परन्तु बौद्धनये विधिनिषेधयोर् एकाकारप्रत्यवमर्शवर्तित्वम्। तथा च न कश्चिद् दोषावकाशः।

वस्तुतः पुण्डरीकशब्दश्रवणान्तरीयकश्वेतपत्रप्रतीतिवद् गोशब्दश्रवणानन्तरमपि अगोव्यावृत्तिप्रतीतिः सर्वानुभवसिद्धेति जातिसङ्केतवादिभिरपि अवश्यमभ्युपगन्तव्यं यद् अपोहविशेषण-नान्तरीयत्वं विधेरिति। अन्यापोहधर्मा विधिरेव शब्दार्थः, विधि-निषेधयोः सामानाधिकरण्यम्।

अपोहस्य स्वरूपं प्रकटयितुमुदाहरणान्तरमपि ज्ञानश्रीमित्र-रत्नकीर्त्तिपादाभ्यामुपन्यस्तम्। 'एष पन्थाः स्रुघ्नम् उपतिष्ठते' इत्यत्रापि अपोहो गम्यत एव। 'एषः' इत्यनेन पन्थान्तरस्य व्यवच्छेदः—अयमेव पन्थाः, न तु अन्य इत्याशयः। स्रुघ्नपदेन स्रुघ्नप्रत्यनीक-अनिष्टस्थानानां व्यावृत्तिः। 'उपतिष्ठते' इत्यनेन अपरेऽपि अरण्यमार्गा यत्र विच्छेदसम्भावना, ते निराकृताः। 'पन्थाः' इति शब्देन सार्थदूतादिव्यवच्छेदः—अयं पन्था एव, न तु मार्गः। अत एव सुष्ठूक्तं ज्ञानश्रीमित्रेण—

'शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ-
स्तत्रापोहस्तद्गुणत्वेन गम्यः।
अर्थश्चैकोऽध्यासते भासतेऽन्यः ( भासतो )।
स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्॥

अन्ततोगत्वा रत्नकीर्त्तिनैवं समाधीयते यद् विधिरेव शब्दार्थः। स विध्यात्मकः शब्दार्थे बाह्यो गवादिरूपोऽर्थे भवितुमर्हति, बुद्ध्याकारो वा; परन्त्वत्र शङ्केयं समुदेति तस्य बुद्ध्याकारस्य गवादिवस्तुना कथमस्तीति विधिरूपेण व्यवहारो नास्तीति निषेधरूपेण व्यवहारो वा सम्भवेत्? बुद्ध्याकारस्य वस्तुनः तत्त्वतः संवृत्या वा न विधि-निषेधो सम्भवति, बुद्ध्याकारस्य स्वसंवेदनप्रत्यक्षगम्यत्वात्। नापि बाह्यस्य ( External object ) तत्त्वतो विधि-निषेधः शाब्दज्ञाने तस्य अप्रतिभासनात्। अत एव शाब्दे प्रत्यये बाह्यस्य अप्रतिभासनात् 'अस्ति', 'नास्ति' इति वा शब्देन बाह्यः सर्वथा अनभिलाप्य एव; परन्त्वेतेन लौकिकः शाब्दव्यवहारः

सर्वथा विलुप्येत। अत एवेदमत्र समाधानं बाह्यस्यैव सांवृतौ ( Conventional level ) विधि-निषेधौ।

अत्र रत्नकीर्त्तिना ज्ञानश्रीमित्रस्य कारिकामुद्धृत्यैवं कथितं यत् तत्त्वतो न बाह्यस्य, न वा बुद्ध्याकारस्य विधानं निषेधो वा बाह्यस्य सांवृतौ बुद्ध्याकारस्य वा विधि-निषेधौ सम्भवतः। तदुक्तम्—

नाकारस्य न बाह्यस्य तत्त्वतो विधिसाधनम्।
बहिरेव हि संवृत्त्या संवृत्यापि तु नाकृतेः[1]॥

अतोऽन्योन्याभावविशिष्टो विजातीयव्यावृत्तोऽर्थो विधिः, स एवापोहशब्द-वाच्यः शब्दानामर्थः प्रवृत्तिनिवृत्तिविषयश्चेति रत्नकीर्त्तिः। मन्ये धर्मकीर्त्तिमतेऽपि स्वलक्षणस्यैकं सामान्यरूपमस्ति। तत् संवृतिरूपमुच्यते। तदेव शब्दानामर्थं इति—

अपोहवादे कृतिनां प्रपञ्चः कृतोऽयमस्माभिरविस्तरेण।
तद्विस्तरस्त्वाकर एव चिन्त्यः परोदितं तूलमिव क्षिपद्भिः॥

इति ज्ञानश्रीमित्रवचनं श्रावयित्वा विरतोऽहम्।

---

१. ज्ञानश्रीमित्रनिबन्धावलिः—पृ० २२१।



# स्फोटविचारः

आचार्यश्रीकालिकाप्रसादशुक्लः,
वेद-वेदाङ्गसंकायाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❋ ❋ ❋

नैयायिकनये परमाणोरिव, वेदान्तिमते ब्रह्मण इव च शाब्दिकसिद्धान्ते स्फोटस्य महती चर्चा विद्यते तत्र तत्राकरग्रन्थेषु। शाब्दिकानां दार्शनिकत्वप्रसादः स्फोटभित्तिमेवावलम्बते, परन्तु स्फोटवादस्य कुतः प्रारम्भो जातः? इत्यस्य समाधाने इतिवृत्तस्य पृष्ठानि मौनमेवावलम्बन्ते; परन्तु सूक्ष्मेक्षिकया पर्यालोच्यमाने **'वागेव विश्वा भुवनानि जज्ञे' 'ओमित्येतदक्षरमिदं सर्वम्', 'वाचो ह वाक्'** इत्यादिश्रुतिरूपाणि स्फोटस्रोतांसि वेदब्राह्मणादिवारिधिषु समुपलभ्यन्ते। शाब्दिका अमुमेव सूत्रात्मकमर्थं सुगमतां सरलताञ्च नयन्ति। वेदब्राह्मणादिषु ग्रन्थेषु गो-वागादिशब्दाः शब्दरूपेऽर्थे प्रयुज्यन्ते, न तु स्फोटशब्दरूपेऽर्थे। अतो वादत्वेन स्फोटवादस्य कदा प्रारम्भ इति प्रश्नोऽद्यापि न समाहितोऽभूत्।

**'अवङ्स्फोटायनस्य'**[1] इति सूत्रे स्फोटशब्दो दृष्टिगोचरीभवति। अस्य स्फोटायनशब्दस्य हरदत्तः पदमञ्जर्यां विवरणं करोति—**'स्फोटोऽयनं पारायणं यस्य, स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणाचार्यः'**। नागेशेनापि स्फोटवादे अन्ते स्फोटायनऋषेरेव सिद्धान्तः स्फोटवाद इति प्रतिपादितम्—

> **वैयाकरणनागेशः स्फोटायन ऋषेर्मतम्।**
> **परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः॥** इति।

यास्काचार्योऽपि प्रारम्भे निरुक्ते शब्दानित्यत्वं व्यवस्थापयतामाचार्यौदुम्बरायणानां मतं प्रत्याख्याय शब्दस्य नित्यत्वं व्यापकत्वमणुत्वं च स्थापितवान्। अत्र दुर्गाचार्यः—**'व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च'** इति स्फोटं प्रतिपादितवान्। एवं स्फोटस्येतिहासोऽतीव प्राचीनो वर्तते। अमुं स्फोटमुद्दिश्य विभिन्नशास्त्रेषु विभिन्नानि मतानि शास्त्रकाराणामुपलभ्यन्ते। तान्यत्र समासतो निर्दिश्यन्ते।

---

१. अष्टा० ६।१।१२३।

अत्र मीमांसकाः 'अथ गौरित्यत्र कः शब्दः' गकारौकारविसर्जनीयाः इति भगवान् उपवर्षः' इति कण्ठताल्वाद्यभिघातानां श्रवणेन्द्रियविषयाणां वर्णानामेव शब्दत्वं वाचकत्वं चास्ति। प्रकरणपञ्चिकायां शालिकनाथोऽपि—'कः शब्दोऽभिमतः? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात्' इति। तथा च भाष्यम्—'श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः' इति। अन्यस्मिन् दिनेऽनुभूतेऽद्यानुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे[2] 'तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति' इति न्यायात् पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्वपर्यवसानम्। सर्वदेशेषु तदुपलम्भाद् विभुत्वम्, लाघवाच्चैकत्वम्। आनुपूर्वीघटकम्—अव्यवहितोत्तरत्वं चैतत्पक्षे उत्पत्त्यनवच्छिन्नस्वज्ञानाकालोत्पत्तिकज्ञानविषयत्वम्।

यथाऽत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वं तद्वद् ज्ञानानामप्येतद्विषये स्थिरत्वम्।

ननु न तावद् वर्णानां प्रत्येकमर्थबोधकत्वम्, एकैकस्मादर्थाप्रतीतेः। नापि समुदितानाम्, क्षणविनाशिनां समुदायानुपपत्तेः। प्रतिवर्णं च संस्कारकल्पने गौरवापत्तिः। अतो वर्णोच्चारणानन्तरं यतोऽर्थप्रत्ययो भवति, सोऽयं स्फोटकत्वेन प्रकाशकत्वेन स्फोट इत्युच्यते। स एव पदात्मा शब्दः। एवं वाक्यस्फोटोऽपि। अप्रत्यक्षोऽप्ययमर्थः प्रतीतिलक्षणकार्यानुपपत्त्या गम्यते।

न च वर्णा एवानुभूयन्ते, न तदतिरिच्यमानस्वरूपं वस्तुतत्त्वमिति वाच्यम्, पदमेकं वाक्यमेकमिति चैकरूपस्यानुभवात्। न चेयं वर्णावगाहिनी, तेषां परस्परभिन्नत्वात्। न चैकत्र नानात्वैकत्वे सम्भवतः, विरुद्धत्वात्। एकार्थविषयत्वे नैकत्वमिति चेत्, न, परस्पराश्रयात्। एकपदत्वेनैवैकार्थविषयत्वात्। तस्मान्न वर्णात्मकः शब्दः; किन्तु स्फोटरूप एवेति चेत्, न, वर्णातिरिक्तवाचककल्पनायामर्थापत्तिः प्रमाणम्, प्रत्यक्षं वा? नाद्यः, अर्थप्रतिपत्तेरन्यथाप्युपलब्धत्वात्। नेतरः, तदभावात्। न चैकं पदमित्येकवस्त्ववगाहिनी नाना वर्णेष्वनुपपद्यमाना बुद्धिरेव प्रमाणमिति वाच्यम्, वर्णेष्वप्येकार्थविषयत्वेन तदुपपत्तेः। अस्ति खल्वेकाभिधेयधीहेतुभावस्त्रयाणामपि वर्णानामेकस्मरणोपारूढानामश्मनामिवैकपिठरधारणे। नाप्यन्योन्याश्रयः, समधिगतैकाभिधेयधीहेतुभावानां तेषां पश्चात्पदत्वावधारणात्।

---

१. शाबरभाष्यम्—१।१।५;  २. श्लोकवार्तिकम्—पृ० ८३३, श्लो० ३६६।

कारकविशेषाभिधायी हि पदशब्द पद्यतेऽनेनेति, स च कार्यसम्बन्धज्ञाने सत्येव भवति, नान्यथा, अत एकार्थविषयत्वज्ञाने सत्येवैकपदत्वज्ञानम्। यदाहुः—'अर्थैकत्वादेकं वाक्यम्' इति। पदमप्यर्थैकत्वादेकम्। श्रोत्रग्राह्ये च वस्तुनि शब्दशब्दः प्रसिद्धो वर्ण एव न श्रोत्रग्राह्यो न स्फोटः। अतो नासौ शब्दशब्दवाच्यः कथमर्थ-प्रत्यायकः स्यात्, शब्दादेवार्थप्रतीतेः सर्वलोकसम्मतत्वात्। आशुतरविनाशिनां साहित्या-सम्भवात् कथं गमकत्वमिति चेत्, संस्कारेणेति। यदाह भाष्यकारः—'पूर्वपूर्ववर्णजनित-संस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः[1]' इति। व्यापारस्य चाव्यवधायकत्वाच्छब्दादर्थं प्रतिपद्यामह इत्युपपद्यते। अथवा भाष्यपर्यालोचनयाऽन्त्यवर्णस्यैव प्रत्यायकत्वम्। एवञ्च शब्दादिष्वेकवचनमप्युपपन्नम्। तथा चोक्तम्—

> यदि वा पूर्वसंस्कार इतिकर्त्तव्यतेष्यते।
> वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत्[2] ॥

केचित्तु सद्रूपान्यवर्णविषयप्रत्यक्षं पूर्वेषु चातीतेषु वर्णेषु स्मृतिरूपेति। चित्र-स्वरूपा बुद्धिः सर्वार्थप्रतीतिहेतुरित्याहुः। तथा चोक्तम्—

> चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम्।
> केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥
> अन्त्यवर्णेऽपि विज्ञाते पूर्वसंस्कारकारितम्।
> स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते[3] ॥ इति।

स्फोटवादिनापि शब्दतत्त्वं कल्पयित्वा पुनः संस्कारकल्पनावश्यं कर्तव्या। ध्वनयो हि प्रत्येकं स्फोटमभिव्यञ्जन्ति साहित्यञ्च क्रमवर्त्तिनां संस्कारद्वारमेवेति तुल्यं तत्कल्पनम्; प्रत्युत स्फोटवादिनः स्फोटसद्भावो वर्णेभ्यश्च व्यतिरेकः सावयवे पदे गम्यमाने निरवयवत्वमित्यधिका कल्पना स्यात्। तस्माद् वर्णा एव वाचकाः, न तदतिरिक्तः स्फोटो युक्तिसिद्ध इत्याहुः।

---

१. शाबरभाष्यम्—९।१।५।

२. श्लोकवार्त्तिकम्—१३०, पृ० ४७२, मद्रासयूनिवर्सिटीसंस्कृतसीरिज, नं० १३।

३. श्लोकवार्त्तिकम्, २११, २१२, पृ० ४६८, Madras University Sanskrit Series, No 13,

गुरुमतानुयायिनस्तु वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतीत्युपपत्तये कश्चिद् विशेष आश्र- यितुं युक्तः, सर्वपूर्वपूर्वोपलम्भसापेक्षत्वादन्त्यवर्णस्य[1]।

उपलम्भस्य च क्षणिकतया स्वतो विशेष्टुमशक्यत्वात् पूर्वपूर्ववर्णोपलम्भजन्यः संस्कार एवाश्रीयते। स च स्मृतिहेतोः संस्काराद् भिन्न एव। स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भानन्तरं जनयितुमलम्, नार्थान्तरम् इत्यर्थविषया प्रतीतिस्ततोऽनुपपन्नेति तदतिरेकिणः संस्कारस्याश्रयणमिति संस्कारद्वयं स्वीकर्तं- व्यम्। एकः स्मृतिहेतुः, अर्थप्रतीतिहेतुरपरः, येन क्रमेण विषया अनुभूताः, तेनैव क्रमेण स्मर्यन्त इति तु प्रमाणविरहितम्, एकैकशो दृष्टेष्वपि घटेषु 'सहस्रं घटाः' इति समु- दितस्य स्मरणात्। तदित्थं वर्णा एव शब्दः। ते च व्यापका नित्याश्च।

सर्वोऽपि ककार एक एव। पदवाक्यानामपि वर्णसमुदायरूपत्वं प्रत्येकमेकत्वं नित्यत्वं विभुत्वञ्च। पदादीनामनित्यत्वे 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः'[2], इति तत्सम्बन्धनित्यत्वप्रतिपादकं सूत्रं व्याकुप्येत। तथा चोक्तम्—

तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः।
तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम्[3]॥ इति।

शब्दो द्रव्यं साक्षादिन्द्रियसम्बन्धवेद्यत्वाद् घटवदित्यनुमानेन चैषां वर्णानां द्रव्यत्वम्। शब्दो ध्वन्यात्मको वर्णात्मकश्च। वर्णव्यञ्जको ध्वनिर्वायुगुणः। वर्णस्तु द्रव्यं ध्वनिव्यङ्ग्यमित्याहुः। पातञ्जलयोगास्तु पदस्फोटस्य वाक्यस्फोटस्य च वाचकत्वं स्वीकुर्वन्तो वर्णानां वाचकत्वं प्रत्याचक्षते।

"अयमभिसन्धिस्तेषामर्थप्रत्ययो हि वर्णैर्नियतक्रमतया परस्परसम्भवद्भिरशक्यः कर्त्तुम्। न च संस्कारद्वाराऽऽग्नेयादीनामिव परमापूर्वं वा स्वर्गं वा जनयितव्येऽनियत- क्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामिति साम्प्रतम्, विकल्पासहत्वात्। स खल्वयं वर्णानुभवजन्यः संस्कारः स्मृतिप्रसवहेतुस्थो वाऽऽग्नेयादिजन्य इवापूर्वा- भिधानो न तावदनन्तरः, कल्पनागौरवापत्तेः।

---

१. प्रकरणपञ्चिका, प्रमाणपारायणम्—पृ० ८१, चौखम्बा-संस्कृत-सीरिज—१७।

२. मीमांसासूत्रम्—१।१।

३. श्लोकवार्त्तिकम्—१०८।७ श्लो० ३०५, चौखम्वा सं० सीरीज—३।

स एव तावददृष्टपूर्वः कल्पनीयस्तस्य च क्रमवद्भिर्वर्णानुभवैरेकस्य जन्यत्वं न सम्भवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवम्। न चैष ज्ञापक-हेत्वङ्गमज्ञातस्तदङ्गतामनुभवतीति।

न खलु सम्बन्धोऽर्थप्रत्यायनाङ्गमज्ञातोऽङ्गतामुपैति। स्मृतिफलप्रसवानुमि-तस्तु संस्कारः स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययमाधातुमुत्सहते, अन्यथा यत्किञ्चिदेवैकैकमनुभूय सर्वः सर्वं जानीयादिति। न च प्रत्येकवर्णानुभवजनित-संस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचकाः साम्प्रतम्, क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गात्। न चैतत्स्मरणज्ञानं पूर्वानुभववर्त्तिनीं परापरतां गोचरयितुमर्हति। तस्माद् वर्णे-भ्योऽसम्भवन्नर्थप्रत्यय एकपदानुभवमेव स्वनिमित्तमुपकल्पयति, न चैष पदेऽपि प्रसङ्गः, तद्धि प्रत्येकमेव प्रयत्नभेदभिन्ना ध्वनयो व्यञ्जयन्तः परस्परविसह्य तत्तत्पदव्यञ्जकध्वनिभिस्तुल्यस्थानकरणनिष्पन्नाः सदृशाः सन्तोऽन्योन्यविसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगिभेदेन तत्तत्सादृश्यानां भेदात् तदुपधानादेकमप्यन-वयवमपि सावयवमिवानेकात्मकमिवावभासयन्ति।

यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्न-वर्णपरिमाणसंस्थानमनेकमादर्शयन्ति, न परमार्थतः। सादृश्योपधानभेदकल्पिता भागा एव निर्भागस्य पदस्य वर्णाः, तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवावलम्बते। अतो गोपदस्फोटभेदस्यैकस्य गकार-भागो गौरादिपदस्फोटसादृश्येन न निर्धारयति स्वभागिनमित्थाकारेण विशिष्टो निर्धारय-त्येवमोकारोऽपि भागः सोऽचिरादिपदसदृशतया न शक्नोति निर्धारयितुं स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्धारयति। असहभाविनामपि च संस्कार-द्वारेणास्ति सहभाव इति विशेषणविशेष्यभावोपपत्तिरिति।

वेदान्तिनस्तु—वर्णानामेव वाचकत्वं स्वीकुर्वन्ति, तेषां मते स्फोटाभावात्। इदं तेषामभिप्रेतम् यदि वर्णानां वाचकत्वं न सम्भवेत्, स्फोटस्यानुभवपद्धति-मध्यासीत्, तदैव वर्णातिरिक्तः स्फोटोऽभ्युपेयेत। वर्णानामवाचकत्वं क्षणिकत्वेनाशक्य-संगतिग्रहत्वाद् व्यस्तसमस्तप्रकारद्वयाभावाद्वा, वर्णानां क्षणिकत्वे मानाभावेन प्रथमः कल्पस्तावन्निरस्तः। ननु वर्णानां प्रत्युच्चारणमन्यत्वं सर्वजनप्रसिद्धमिति चेत्, न, प्रत्यभिज्ञायमानत्वात्।

न चासत्यप्येकत्वे ज्वालादिवत् सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति साम्प्रतम्, सादृश्यनिबन्धनत्वमस्य बलवद्बाधकोपनिपाताद्वा स्थीयते, क्वचिज्ज्वालादौ व्यभिचारदर्शनाद्वा। न चेदं प्रत्यभिज्ञानं गत्वादिजातिविषयम्, न गादिव्यक्तिविषयम्, तासां प्रतिनरं भेदोपलम्भात्। अत एव शब्दभेदोपलम्भाद् वक्तृभेद उन्नीयते, सोमशर्माधीते न विष्णुशर्मेति युक्तम्, यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम्। यथाकालाक्षीं च स्वस्तिमतीं चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति। किं वा यथा गोत्वमाजानत एकं भिन्नदेशपरिणामसंस्थानव्यक्त्युपधानभेदाद् भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव तथा गव्यक्तिराजानत एवापि व्यञ्जकभेदा तद्धर्मानुपातीनीव प्रथत इति भवन्त एव विदाङ्कुर्वन्तु।

तत्र गव्यक्तिभेदमङ्गीकृत्यापि योगत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः, स वरं गव्यक्तावेवास्तु, किमन्तर्गडुना गत्वेनाभ्युपेतेन। सत्यपि समस्तवर्णप्रत्यवमर्शे यथाक्रमानुरोधिन्यः पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधेनैव वर्णाः पदबुद्धिमारोहन्ति। अतो 'जारा', 'राजा' 'कपिः', 'पिकः' इत्यादौ पदविशेषप्रतिपत्तौ नास्ति, काचनापि विप्रतिपत्तिः। वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुग्रहीता ग्रहीतार्थविशेषसम्बन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थंव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना।

स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च कर्तव्या भवति। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति। स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्। अतो वर्णा एव वाचका नित्या विभवश्चेति।

अत्रेदं विचारणीयम्—स्वसिद्धान्तभङ्गभिया वर्णानां नित्यत्वं सापेक्षमेव स्वीकार्यमिति। वस्तुतो वर्णानामनित्यत्वमेव सृष्टिप्रलयमध्ये विनाशित्वाभावरूपमेव तत्। एवञ्च सृष्टीनामानन्त्येनानन्तवर्णतद्ध्वंसप्रागभावादिकल्पनाया गले पतितत्वाल्लाघवं शशशृङ्गायमाणमेव। किञ्च गकारादिषु गत्वादिजातेरभावेन गकारादिज्ञानस्य निर्विकल्पकात्मकत्वेन प्रत्यक्षत्वानापत्तिः। ध्वनिगतगत्वादिभानस्वीकारे तु तदभाववति तत्प्रकारकज्ञानत्वेन भ्रमत्वापत्तिर्दुर्वारा। किञ्च गत्वादिजातिमस्वीकृत्य व्यक्तावेव स्वभेदकत्वस्वीकर्तुस्तव गकारतो घकारादिभेदस्य स्वतः सिद्धतया स्फोटखण्डनाय

प्रवृत्तेन त्वया वर्णैकत्वरूपमूलधनमप्यपहारितम्। तस्माद् ध्वनिभेदा एव वर्णाः, न तु ध्वन्यतिरिक्ता नित्याः।

**क्वचिद्भाष्ये वर्णा नित्याः** इत्युक्तिस्तु स्फोटपरा। वर्णानामनित्यत्वे च तत्र वाचकत्वस्य दुरुपपादतया तदतिरिक्तस्फोटकल्पना वेदान्तिनोऽपि स्वीकार्या।

**वैयाकरणनये** तु स्फोटस्य ब्रह्मरूपतया तत्रैव ध्वनिगतधर्माणामध्यस्तत्वाद् ब्रह्मणि प्रपञ्चाध्यासे भिन्न-भिन्नरूपेण तत्प्रतीतिरिव वर्णभेदप्रतीतिर्नानुपपन्ना। न च त्वन्मतेऽपि स्फोटस्य ब्रह्मत्वेन निधर्मकतया तत्र गत्वादिप्रकारकप्रतीतेर्भ्रमत्वं दुर्वारमेवेति वाच्यम्? तुरीयदशायां भ्रमत्वेऽपि तव ब्रह्मण एव प्रपञ्चरूपेण प्रतीतिवद् व्यावहारिकदशायां बाधाभावेन भ्रमत्वस्य वक्तुमशक्यत्वात्। एवञ्च मीमांसकादीनां स्फोटवादखण्डनं शाब्दिकनयानवगमावजृम्भणमात्रम्।

**सांख्यास्तु**—प्रत्येकवर्णेभ्योऽतिरिक्तं 'कलश' इत्यादिरूपमखण्डमेकं पदं स्फोट इति योगैरभ्युपगम्यते। कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव। स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणादित्युच्यते। स शब्दोऽप्रामाणिकः, कुतः? प्रतीत्यप्रतीतिभ्याम्। स स्फोटाख्यः शब्दः किं प्रतीयते, न वा। आद्ये येन वर्णसमुदायेनानुपूर्वीविशिष्टेन सोऽभिव्यज्यते, तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गडुना तेन। अन्त्ये, त्वज्ञातस्य स्फोटस्य नार्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पना। **'स एवायं गकारः'** इति प्रत्यभिज्ञाबलाद् वर्णनित्यत्वं न युक्तम्, उत्पन्नो गकार इत्यादिप्रत्ययेनानित्यत्वसिद्धेः। प्रत्यभिज्ञा च तज्जातीयता विषयिणी। अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तिरित्याहुः।

**नैयायिकास्तु**—पदानामेव वाचकत्वम्। वर्णानां समूहः पदम्, पदानां समूहो वाक्यम्। वर्णाश्चानित्याः। ननु वर्णानामनित्यत्वे **'सोऽयं ककारः'** इति प्रत्यभिज्ञाया उपपत्तिर्न स्यादिति चेत्, न, सोऽयं धान्यराशिरितिवत् जातिनिबन्धना सादृश्यनिबन्धना वा प्रत्यभिज्ञेति वक्तुं शक्यत्वेनादोषात्। ननु तथापि क्रमोत्पन्नविनष्टानां वर्णानां सहभावाभावात् तत्समूहस्य पदस्य, पदसमूहस्य वाक्यस्य च विलयापत्तिरिति चेत्, न, संस्कारद्वारा तदुपपादयितुं शक्यत्वात्। यथा क्रमोत्पन्ना अपि प्रत्येकग्रासाः समुदितास्तृप्तिमुत्पादयन्ति, तथा क्रमवर्तिनोऽपि वर्णाः समुदिता एवार्थाभिधायिनो भवन्ति। न तावदनुमानमहिम्ना स्फोटस्वरूपमुपपादयितुं पार्यते, परिदृश्यमानविशिष्टानुपूर्वीकवर्णकलापकरणे नार्थप्रतीतेर्घटमानत्वात्। नापि प्रत्यक्षतो वर्णानामेव प्रत्यक्षत्वादित्याहुः। अधिकं जयन्तभट्टकृतायां न्यायमञ्जर्यां द्रष्टव्यम्।

वैयाकरणास्तु—स्फोट एव वाचको न तु वर्णाः स्फोटानुभवानन्तरं विदित-संगतेरर्थधीसमुत्पादात्। न च वर्णातिरिक्तस्य तस्यानुभवो नास्ति, गौरित्येकं पदम्, गामानय शुक्लामित्येकं वाक्यमिति नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीन-त्वात्। न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम्। नाप्यौ-पाधिकः, उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा ? न तावदेकधी-गोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति। तथा सति धवखदिर-पलाशा न जातु स्यात्। नाप्येकार्थधीहेतुता, तद्धेतुत्वस्य वर्णेषु व्यासेधात्। तद्धेतु-त्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः, साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्य-मिति। तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते, स स्फोट इति।

तच्च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति, येन द्रागर्थधीः स्यात्; अपि तु रत्नतत्त्वज्ञानवद् यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कार-परिपाकसचिवचेतो लब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नेत्तरेषामानर्थक्यं ध्वनीनाम्। नापि प्राचाम्, तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात्। अन्त्यस्य चेतसः केवलस्याजनकत्वात्।

न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरामिति युक्तम्, व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वाद् अधिकस्तत्र प्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवो-पजनो न वा स्यात्, न पुनरस्फुट इति न समः समाधिः, तस्मान्नित्यः स्फोट एव वाचकः, न वर्णाः।

अस्य च स्फोटस्योपाधिभेदादष्टौ भेदाः वर्णपदवाक्यरूपरूषितस्य भावाद् वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटश्चेति त्रयः। अत्रैव जातिव्यक्तिभेदेन वर्णजाति-स्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इति त्रयः। पदवाक्ययोः सखण्डा-खण्डत्वभेदात् सखण्डपदस्फोटः, सखण्डवाक्यस्फोटश्चेति द्वौ। एवं सङ्कलनयाऽष्टौ स्फोटा इति नागेशादयः।

श्रीरामाज्ञापाण्डेयास्तु—'व्याकरणदर्शनभूमिकायां षोडशस्फोटानीत्याहुः। तथाहि—'अस्यां स्थितौ वाक्यार्थज्ञानमस्माकं कृते वाक्यस्फोटस्य विलय एव स्यात्।

नापि 'पचति' इति पदस्फोटव्यवहारः। तथा चायं विभागो नहि युक्तियुक्तः। अत एव नागेशभट्टो नहि अष्टौ स्फोटान् मञ्जूषायां निरदिक्षत्, किन्तु केवलमान्तरबाह्यभेदेन द्वौ स्फोटौ प्रदर्श्य बाह्यस्फोटस्य जातिव्यक्तिभेदेन द्वावेव भेदौ प्रादर्शयत्। तथा च व्यवहारदृष्ट्या बाह्यस्फोटप्रदर्शने प्राप्तेवक्ष्यमाणरीतिरेवास्माभिरवलम्बनीया। तथाहि—व्यक्तिः पदार्थं इति व्याडिमते व्यक्तिस्फोटः। जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोटः, इत्येवंरूपेण द्वौ स्फोटावभ्युपगन्तव्यौ। यदि चावान्तरस्फोटप्रतिपादने आग्रहस्तर्हि कल्पितानि पदानि कल्पितपदेषु कल्पितौ प्रकृतिप्रत्ययावादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः।

एवं सति—(१) प्रकृतिस्फोटः, (२) प्रत्ययस्फोटः, (३) प्रकृतिजातिस्फोटः, (४) प्रत्ययजातिस्फोटः, (५) पदस्फोटः, (६) पदजातिस्फोटः, (७) वाक्यस्फोटः, (८) वाक्यजातिस्फोटः, (९) अखण्डपदस्फोटः, (१०) अखण्डपदजातिस्फोटः, (११) अखण्डवाक्यस्फोटः, (१२) अखण्डवाक्यजातिस्फोटा भविष्यन्ति। तत्तदवयवविवक्षाविवक्षाभेदेन प्रकृतिप्रत्ययादिकल्पनाकल्पनाभ्यां सर्वेषां कृत एते द्वादश स्फोटा युक्तियुक्ता भवेयुः। एतदेव विचार्य मञ्जूषायां नागेशभट्टो द्वावेव स्फोटौ प्रत्यपादयदिति शिवम्।



# ॐकारस्य दार्शनिकं स्वरूपम्

डॉ० महाप्रभुलालगोस्वामी,
आचार्योऽध्यक्षश्च,
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

❀ ❀ ❀

भारतीयसंस्कृतिः समन्वयात्मिकेति दार्शनिकसिद्धान्तोऽपि तात्त्विकदृष्ट्याऽभेद-भूमिमेवाश्रयते। गङ्गाप्रवाहपात इव विरोधं मधुमिश्रणमिवात्मसात्कुर्वन्तीयं संस्कृतिः अनेकत्वे एकत्वरूपेणानुस्यूताक्षुण्णेवाविरुद्धा विराजते।

नूनं प्रत्यक्षगोचरमिदं विशालं बहुधा भिन्नं बाह्यं तत्त्वं तत्रात्रत्याचार्याणां नास्ति आक्षेपः, अनेकत्वनिषेधो वा; अपि तु बाह्यस्तरावलोकेनेनैवैतेषामन्तःज्ञाना-न्वेषण एवातुलनीयः प्रयासस्तत्रैव परितोषः, वस्तुतत्त्वस्वरूपोपलब्धिश्चान्यथा शुक्तौ जातं रजतज्ञानमप्यर्थक्रियाकारितां न जह्यात्। तत्त्वानुसन्धानतत्परा इमे वस्तुतत्त्वान्त-स्तले प्रवेशमवाप्य सुधामाधुरीमवगाह्यान्यानपि सुधासागरे उन्मज्जयन्ति।

भारतीयसमन्वयवादो न विरोधभूमिः; अपि तु ब्रैडलेमहोदयाविष्कृतसिद्धान्ते 'Appearence and Reality' सत्याभासयोरित्याख्ये यथोक्तवन्तः तथैवात्रापि पूर्वत एव अवधूतरहस्यतत्त्वम्। परमतत्त्वे, आपातदृष्ट्या, परस्परं विरुद्धानि तत्त्वानि निश्चितैकात्मतायां विशृङ्खलतां नाधत्ते; अपि तु सामञ्जस्यपूर्णेऽस्मिन् शरीरे विरोधं विहाय अङ्गिनोऽक्षुण्णतां विधत्ते। समन्वयात्मकत्वमेव भारतीयदर्शनस्य गति-शीलतां सम्पादयति, विना गतिं समन्वयो न भवितुमर्हति।

भारतीयचिन्तनधारायां धर्ममहत्त्वं सम्प्रदायप्रसूतान्धविश्वासो नास्ति। मनोविज्ञानखनिजोत्पन्नस्तर्ककर्कशविचारचातुरीनिकषपरिपूतो रत्नभूतोऽयं धर्मः।

धर्मः सम्पूर्णस्य विश्वस्य प्रतिष्ठेति धर्म एव सर्वं प्रतिष्ठितम्, अत एव श्रेष्ठश्च अपौरुषेयः सनातन उदारश्चायं पुरुषभ्रमप्रमादादिकलङ्कशून्य आचारशिक्षार्थमार्यैः रङ्गीकृतः। अत एव **'आचारः परमो धर्मः'** इत्यसकृदुद्घोषो विद्यते शास्त्रेषु। अनासक्तिभूमावावस्थित एष धर्मः सकलप्राणिष्वात्मदर्शनं विधाय स्वार्थदृष्ट्यैव महाकरुणार्द्रः सर्वोपकारकरणमेव स्वार्थं विदधाति।

**'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि'**[1] इति गीतोक्तिरत्रैव साफल्यमश्नुते। अत्र परार्थोऽपि स्वार्थो भवति, स्वव्यतिरिक्तस्यैवाभावात्। धर्मोऽयं मानवस्य सामाजिकजीवनमुन्नतभूमौ निधायाशुभहीनस्वाभाविकीं प्रवृत्तिं दूरीकृत्योदारोदात्तविचारमाविष्कृत्य भारतीयमानवतां सम्पाद्यात्मानुग्रहाभावेऽपि भूतानुग्रहार्थं निवृत्तिभूमिकां प्रवृत्तिं प्रसूते। आत्मनः प्रतिकूलानि परेषां कृते नाचरणीयानीत्येव भारतीयनिधिः।

प्रवृत्तिनिवृत्तिभेदाद् ज्ञानविमलधारा द्विधा विभक्तेव प्रतीयते; किन्तु लोकोपकारकरणाय सदाऽऽर्द्रचित्तस्य मनीषिणो निवृत्तिमार्गं उदासीनमार्गो वा नैव सम्भाव्यते, यतो लोकदुःखासहिष्णुत्वमेव तपसि प्रवर्त्तयति अत्रत्यान् साधकजनान् ज्ञानज्योतिःसम्पन्नान्। कथमसौ बुद्धः सन् लोकोपकारविरतो भवेत्? यतो मूलस्योपक्रमस्योपसंहारे उच्छेदात्। यत औदासीन्यं भजमानास्ते तपःप्रवृत्तिं प्रति मूलाधारमेव परिजह्यात्, अतो भारतीयनिवृत्तिमार्गं उदासीनमार्गो वा व्यष्टिहितमविगणय्य समष्टिहितसाधनाया एवोपसंहृतः समस्तं विश्वमेकनीडमवलोकयन्तोऽखण्डचराचरं विश्वं वासुदेवमाकलय्य तद्धितकामनयैव निवृत्तिमार्गं उदासीनमार्गो वा, अन्यथा निवृत्तिमार्गाचार्याणामुदासीनमतप्रवर्तकानाञ्चाचारः सर्वथा सिद्धान्तसामञ्जस्यं परित्यजेत्। चराचरकल्याणाय तेषामशेषजीवनयापनं सर्वथा निवृत्तिमार्गस्य तथार्थत्वाभावे कथं तज्जीवनं साफल्यं भजेत? विशिष्टभावभूमिमाश्रित्य देशस्य समाजस्य समवायस्य च हितकामनया समष्ट्यभ्युदयायैवैतेषां बाधाशून्या जीवनयात्रा प्रवहति। सञ्चरणस्य श्रेष्ठसाधनता व्यष्ट्यनासक्तौ सन्निहितास्तिष्ठन्ति।

आर्यभावनादिवाहनं वैदिकसाहित्यमेव। आर्यैः सह पारसीकानां निवासैक्यादेवोभयोर्भावनायां 'ज्योतिषः' आराधनस्य देवस्तवनपरम्परायाश्च साम्यम्।

विष्णुपुराणस्य तृतीय-चतुर्थाध्याययोः सगरनृपस्य कथोपलभ्यते। तन्निर्देशेन पह्लवादिप्राचीनपारसीकानां वेदस्य यज्ञस्य च साधनायामनधिकारः समजनि। आसीच्चादेशः श्मश्रुमुण्डनं तैः कर्तुं न शक्यत इति। अतो वैदिकभावनाया अन्तः-

---

१. श्रीमद्भगवद्गीता—६।२९।

प्रकृतेः सर्वथा परिवर्तनं तत्रापि न जातम्। अस्या भावनाया इतिहासानुधावने वैदिकसाहित्यमेव ध्रुवपदरूपेण वर्तत इत्यत्र नास्ति कापि सचेतसां विप्रतिपत्तिः।

मन्त्रेषु वर्तमानरहस्यानामाविष्कार उपनिषदादिषु विद्यते। ज्ञानकर्मणोर्मध्ये भेदोपलब्धिः परवर्तिकालवर्तिनी। अत एव गीतायां ज्ञानयज्ञस्य कर्मयज्ञापेक्षया श्रेष्ठत्वं सर्वेषां कर्मणां ज्ञाने परिसमाप्तिश्च प्रकटिता। कर्मभिः स्वर्गप्राप्तिर्ज्ञानेन च मोक्षप्राप्तिरितीमं भेदमादाय स्वर्गोऽभिलाषोपनीतवस्तुप्राप्तिस्थानम्। अपवर्गस्य स्वरूपं तु तत्तद्दार्शनिकचिन्तितं शास्त्रे सुस्पष्टमेव।

वेदार्थस्य विश्लेषणेनैतत्सुस्पष्टमाभाति यद् आत्मचेतनाया लोकोत्तरचिन्मय-भूमेरुत्तीर्णमेव क्रियाकलापानां लक्ष्यमिति। अतश्चिन्मयभूमिरेव स्वर्गः। स्वर्गापर-पर्यायस्वः इत्यनेन ज्योतिर्मयभूमेरनुभव एव प्रमाणम्। तत्र गमनमेव स्वर्गः। ब्राह्मण-व्याख्यया ज्ञानयज्ञलभ्यमोक्षेण सह द्रव्ययज्ञलभ्य 'स्वः' इत्यस्य भेदः काल्पनिक एव।

क्रियाकलापनिर्वाहकत्वेन रूपेण यजुर्वेदस्य प्रसिद्धिस्तत्रैव चान्तिमाध्याये ईशोपनिषदः सन्निवेशोऽस्ति। इयमुपनिषद् संहितायामन्तर्भुक्ता। यजुर्वेदसंहिता-शेषाध्याये उपनिषदः उपस्थापनमतिशयमहत्त्वपूर्णम्, तत्रोदारोदात्तदृष्ट्या समन्वय-स्यातुलनीया चेष्टा वर्तते। कर्मवेदशेषे सार्वभौमज्ञानावतारप्रदीपोऽयं प्रज्वलितः सर्वेषां कर्मणां तत्त्वज्ञाने उपसंहारः किं न कृतः? याज्ञवल्क्यः कृष्णयजुर्वेदधारां शुक्लयजुर्वेदधारायां प्रवाहितवान्। कृष्णस्य कर्मणोऽज्ञानरूपाया अविद्यायाश्च शुक्ले कर्मणि विद्यायां वाऽवतारणमेतस्य मुख्यमुद्देश्यम्। शुक्लयजुर्वेदप्रवर्तकयाज्ञवल्क्यस्योप-निषदि प्राधान्यमावहतोऽभेदेनादिज्ञानकर्मणोरैक्यं सुनिश्चितम्।

वैदिकसाहित्याध्यात्मभावसाधनायां श्रद्धाया महत्त्वं वर्तते। कर्मणि श्रद्धायाः, आवेगस्य चानन्यसाधारणं महत्त्वम्। श्रद्धयैव सह मानवचित्तस्यापरापि वृत्तिः मननम्, यस्य चापरपर्याय ऊहस्तर्को वा। तर्कस्य दृष्टिः प्रत्यक्वृत्ता, यत्र च जिज्ञा-सान्तर्निहिता। जिज्ञासैव साधनम्, अस्याः साधनाया उपसंहार आत्मवादेऽपवर्गे वा। **'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'**[1] इति बृहदारण्यकोपनिषदः सारतमोऽयमुपदेशः भारतीयदर्शनस्य सारः निर्यासो वा। भारतीयजनमनसो जीवनप्रवाहो मुनीनां सर्वा आशाः, आकाङ्क्षाश्च अस्मिन्नेव पर्यवसिताः प्रियतमां मैत्रेयीमुपदिश्य याज्ञवल्क्यः पूर्वोक्तं निवृत्तिमार्गं संजग्राह। एतमेवोपदेशमादाय भारतीयदर्शन-शास्त्रस्यासंख्या धारा वावह्यन्ते, आत्मसाक्षात्कारस्यापवर्गस्य कारणं श्रवणं मननं निदिध्यासनञ्चेति आत्मवादधारा मुनिधारा। देवत्वमात्मत्वञ्चोभयमप्यतीन्द्रियमेव। अतो देवदर्शनमात्मदर्शनं वा भवतु, अप्राकृतत्वमुभयत्र तुल्यमेव। देवत्वं भवतु

१. बृ० उ० २।४।५।

आत्मत्वं वा मूले ज्ञाने प्रसारणस्य, व्यापकत्वस्य विराजोऽनुस्यूतिरनवच्छिन्ना प्रवहृति। आत्मचेतना परमे चरमे सत्ये विश्रान्तिं लभते कर्मभावनया देवत्वभावनया द्रुतचित्तहृदयस्यावेगेन बोधिग्राह्यवस्तुस्वरूपतादात्म्येनात्मस्वरूपस्यैवाप्तिरस्ति।

एतत्तु सत्यम्, एक आवेशकल्पितो विप्रोऽपरः पौरुषदृप्तो नरः। एकत्र श्रद्धा प्राधान्येनापेक्षिताऽपरत्र तर्कः, बोधिर्वा। इमे मौलिकचित्तवृत्ती आश्रित्य साधनायाः परवर्तिकाले भेदः सञ्जातः, एका **ऋषिधारा**, अपरा च **मुनिधारा**। दर्शनं मननसाध्यम्, मननाच्च मुनिः।

एतयोः साधनयोः सुस्पष्टो निर्देशः पातञ्जलयोगदर्शने सूत्राभ्यां वर्तते, उभयोः समन्वयश्च। तथा हि—**'समाधिवशादात्मदर्शनमीश्वरप्रणिधानाद्वा'**[1]। तत्रेश्वरस्वरूपनिरूपणानन्तरमुक्तम्—**'तस्य वाचकः प्रणवः'**[2]।

अत्र व्याख्यायां **'प्रकर्षेण नूयते स्तूयतेऽनेनेति नौति स्तौति वा प्रणव ॐकारः। तयोश्च वाच्यवाचकभावलक्षणः सम्बन्धो नित्यः सम्बन्धेन प्रकाश्यते, न तु केनचित्प्रकाश्यते'**[3]।

**अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।**
**तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति**[4]॥

ॐशब्दस्य अव्ययत्वम्। अस्य निर्वचनमुणादिसूत्रेण जायते। रक्षणार्थको अव्धातोः **'अवतेष्टिलोपश्च'** ( उ० सू० १३९ ) इत्यनेन सूत्रेण मन्प्रत्ययः। मन्प्रत्यस्य टेः 'अन्' इत्यस्य लोपोऽपि भवति। यदि प्रकृतेष्टेर्लोपः स्यात्, तदा डित्करणेनैव **'टेः'**[5] इत्यनेनैव टिलोपसिद्धेः, टिलोपविधानं व्यर्थं स्यात्। तस्मात् प्रत्यस्यैवोद्देश्यत्वम्। **'ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च'**[6] इत्यनेन वकारस्य ऊठि अकारवकारस्थानिकयोरूठोर्दीर्घे कृते ॐमिति निष्पन्नम्, तयोर्दीर्घे कृते गुणे ओमिति।

ॐमित्यस्य 'ओ३म्' इत्येवं रूपेणापि लेखो दृश्यते। परं व्युत्पत्त्या सिद्धस्य 'ओम्' इत्येव लेखः समीचीनः 'ओ३म्' इति तु उच्चारणानुरूपलेख आग्रहवशादुन्नेयः।

अमरकोषे टीकायाञ्च—**'ओंकारप्रणवौ समौ'**[7] इत्यस्य व्याख्याने रामाश्रमीटीकायामुक्तम्—**'अवति। अवतेष्टिलोपश्च (उ०१।१४२) इति मन्प्रत्ययस्यैव टिलोपः। 'ज्वरत्वर०' (अष्टा० ६।४।२०) इत्यूठौ। गुणः (६।३।८४), वषट्कारः (१।२।३५) इति लिङ्गात्समुदायादपि कारप्रत्ययः'** (वा ३।३।१०८)।

---

१. यो० सू० १।१।२३।
२. तदेव–१।१।२७।
३. तदेव—१।१।२७ भोजवृत्तिः।
४. तदेव।
५. अष्टा० ६।४।१४३।
६. तदेव–६।४।२०।
७. अ० को० १।६।४।

'प्रणूयते स्तूयते। नु स्तुतौ। 'ऋदोरप्' ( अष्टा० ३।३।५६ ) 'उपसर्गात्०' (अष्टा० ८।४।१४) इति णत्वम्' इति द्वे ॐकारस्य'।

अमरकोषस्यैव तृतीयकाण्डे 'ऊम्' इति शब्दस्य निर्वचनप्रसङ्गे ऊय्यते इति ऊम्। 'ऊयी तन्तुसन्ताने' इति मुक्प्रत्ययः (रामा० ३।४।१८)। अयमपि शब्दोऽव्यय एव, यद्यप्यर्थभेदः।

'उमा' इत्यपि शब्दो वर्तते। अस्य शब्दस्य व्याख्याने उक्तम्—'ॐ शिवं माति, मिमीते वा। मा माङ् माने—'आतोऽनुप०' (अष्टा० ३।२।३) इति कः। ऊवते ऊयते वा, ऊङ् शब्दे विभाषा तिऊमाषोमा (५।२।४) इति निपातनात्मक् इति। अत्र उमाशब्द-निर्वचनेऽपि अव् धातोस्तस्य निष्पत्तिः सूचिता। अत ओमित्यनेन सह धातुकृतं साम्यं वर्तते।

केनोपनिषदि उमायाश्चर्चा विद्यते। खण्डद्वयेन निर्गुणस्य निर्विशेषस्य ब्रह्मणः स्वरूपं प्रतिपाद्यापि तद्ब्रह्मतत्त्वं मन्दबुद्धिभिर्नाकलयितुं शक्यमिति तृतीयचतुर्थ-खण्डयोः सगुणं ब्रह्म प्रतिपादितम्। अविज्ञातं विजानतां विज्ञातमविजानतामिति निरुपाधिब्रह्मस्वरूपश्रवणान्मूढाश्चिन्तयेयुर्यद् यतो ब्रह्मणोऽविज्ञातत्वमतो बन्ध्यापुत्रादि-वदसत्त्वमलीकत्वमेव स्यात्। अतो देवात् परं पूर्वेषामपि कालानवच्छेदाद् गुरुभूतं ब्रह्मा-ख्यायिकया प्रतिपादयामास। ब्रह्मज्ञानादेव कस्यापि देवस्य श्रेष्ठत्वं जायते। अतो ब्रह्मविद्यास्तुत्यर्थेयमाख्यायिका।

अस्यामाख्यायिकायां देवेभ्योऽर्थाय स्वमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मा-पनीयेन रूपेण देवानामिन्द्रियगोचरेण प्रादुर्बभूव। प्रादुर्भूतं ब्रह्म नैव विज्ञातवन्तो देवा किमिदं पूज्यं महद्भूतमिति। पूजार्थकाद् यक्षतेर्धातोर्निष्पन्नत्वाद् यक्षं पूज्यमित्यर्थः।

यथाग्निस्तृणमपि दग्धुमसमर्थः सन्निवृत्तो बभूव, यक्षस्वरूपज्ञाने स्वस्य विफलतां च देवेभ्यो निवेदयामास, तथैव वायुरपि सर्वस्यादाने नितरामभिमान-युक्तोऽपि तृणस्याप्यादाने कृत्स्नमपि स्वशक्तिं विफलीभूतमालोक्य पराजयमङ्गीकृत्य देवेभ्यः प्राह—नैतद् यक्षं विज्ञातुं प्रभवामीति।

यक्षस्वरूपं ज्ञातुमसमर्थावग्निवायू निवृत्तौ। देवाः सर्वे सम्भूय देवराजमिन्द्र-मुपेत्योचुः—भवान् खलु देवानां श्रेष्ठो बलिष्ठश्च। तद् गम्यतां यक्षस्वरूपं च विज्ञाय-तामिति। जिज्ञासुरिन्द्रो यक्षमुपगतः, यक्षं च तस्मात् समीपवर्तिन इन्द्रात्तिरो-भूतम्। देवश्रेष्ठत्वेन नितरामभिमानवत इन्द्रस्याभिमानो निराकर्त्तव्य इति यद् यक्ष-मग्निना वायुना संवादं कुर्वदपि नेन्द्रं किमपि बभाषे। एवमभिमानशातनेऽपि नासा-विन्दुस्तत्स्थानं तत्याज। तस्मिन्नेवान्तरिक्षे स्थितो ध्यायन्नासीत्—किमिदं यक्ष-

मिति ? एवमिन्द्रस्य यक्षे भक्तिं ज्ञात्वा विद्यैव स्त्रीस्वरूपमाश्रित्य प्रादुर्भूता । इन्द्रस्तत्रोमास्वरूपिणीं विद्यां बहुशोभमानामालोकितवान् । स्वयंप्रकाशस्य ब्रह्मण उज्ज्वलतमत्वात् **'तस्य भासा सर्वमिदं विभाति'**[1] इति च श्रुतेस्तस्या उमायाः शोभनतमत्वं सुष्ठु युज्यते । इयञ्चोमा हैमवतीव हेमालङ्कारभूषिता काचन यथा नितरां शोभामादधाना दृश्यते, तथैवोमापि ।

अद्वैतवादे भक्तिर्न सिद्धान्तविरुद्धा; किन्तु भक्त्या मोक्ष इति नाङ्गीकृतम् । वैष्णवैर्भक्त्या मोक्ष इति सिद्धान्तोऽङ्गीक्रियते । उपासनादिना चित्तशुद्धौ सत्यां क्षपिते कल्मषे ज्ञाने च लब्धे ज्ञानादेव मोक्ष इत्युच्यते । सर्वज्ञेन रुद्रेण सह नित्यं विद्यमानत्वाद् विद्यासामर्थ्यमुपजगामेन्द्रः ।

उमया सह रुद्रस्य सर्वज्ञस्य विवाहादिकं सर्वं मायिकमेवावगन्तव्यम् । शक्तिस्वरूपाया उमायाः शक्तिमत ईश्वरस्य च पारमार्थिको भेदो नास्ति । एकस्यैव ज्योतिष्मत्तमस्य ब्रह्मणश्चितिरूपा शक्तिः । यथा ब्रह्म चैतन्यस्वरूपम्, तथा तच्छक्तिरपि चितिरूपैवात एव भास्कररायः—**"एकमेव ब्रह्मानादिसिद्धया मायया धर्मी धर्मश्चेति सृष्टचारम्भे प्राथमिकमीक्षणं "तदैक्षत बहु स्यां प्रजायेय" इति 'सोऽकामयत', तत्तपोऽकुरुत"** इत्यादित्रिविधश्रुतिसिद्धज्ञानेच्छाक्रियासमष्ट्यात्मकं स एव ब्रह्मधर्मः । स च धर्म्यभिन्न एव, स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः । तस्यैव धर्मत्वाच्छक्तिरिति संज्ञा । तद्गतो धर्मोऽपि न जडो न जीवः; अपि तु चितिः स्वतन्त्रा विश्वाससिद्धिहेतुरित्यादिशक्तिसूत्रोक्तरूपं ब्रह्मैवेत्युपनिषत्सिद्धान्त इति[2] ।

शङ्करानन्देनाप्युक्तम्—अविधा हि कुरूपा पिशाची, तन्नाशकत्वाद् विद्यायाः कान्तिमत्त्वम् ।संसारोच्छेदिकाया ब्रह्मविद्यायाश्चाधिककान्तियुक्तत्वं सुतरां सिद्ध्यति । न केवलं शङ्करानन्दस्य प्रतिभाप्रवुद्धमेतद्व्याख्यानम्; अपि तु शङ्कराचार्येण समर्थितमेतद्व्याख्यानम् । वाक्यभाष्ये च कुरूपस्यापि विद्यावतो शोभायुक्तत्वमुक्तम् । परां विद्यां ब्रह्मविद्यां वेत्ति या तस्या उमाया बहुशोभनत्वं भवत्येव ।

उमाया ॐकारचितिशक्तेरखण्डानन्तानन्दचैतन्यात्मकत्वं दुर्गायाः स्पष्टमुद्घोषितं दुर्गायाम्—

> **त्वं वैष्णवीशक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया ।**
> **सम्मोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ।।**
> **विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु ।**
> **त्वयैकया पूरितमम्बयैतत्का ते स्तुतिः स्तव्यपरा परोक्तिः**[3] **।।**

---

१. क० उ० ५।१५ ।　　२. गुप्तवतीटीका—पृ० ९ ।
३, दुर्गासप्तशती—११।५-६ ।

अस्मिन् पद्ये वैष्णवी इत्यनेन व्यापकत्वं सूचितम् । महाभारतेऽपि—

त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहिनाम् ।
स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि ॥
स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती ।
सावित्री वेदमाता च तथा वेदान्त उच्यते[1] ॥

अस्मिन् प्रसङ्गे दिव्यचेतनायाः क्रमिकोन्मेष उपलभ्यते । अग्नेः, वायोः, इन्द्रस्य, ब्रह्मशक्तेः, उमायाः, ब्रह्मणः, ओङ्कारस्याखण्डज्योतिरूपेण उपलब्धिरस्ति ।

उमाशब्दस्य तैत्तिरीयारण्यके 'खिलः उमापतये'[2] प्रयोग उपलभ्यते । आधुनिका अनार्षभावनोद्भावितचेतस उमोमापती पार्वत्यदेवत इति । अत एव भूमध्यसागरतीरस्थप्राचीन—'Mother Goddess' इत्याख्यया उमया सादृश्यमपि प्रतिपादयन्ति । पूर्वोक्तस्य विश्लेषणप्रसङ्गे शङ्कराचार्यः कथयति—'स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्' । अत्र हैमवतीवोमापि स्त्रीशब्दस्य विशेषणमेवेति स्वीकार एव साध्वन्वयः सङ्गच्छते, अर्थाद् इन्द्रोऽस्मिन् महाशून्ये चरन् एकां स्त्रीमूर्तिमुपजगाम, या बहुशोभमाना उमा हैमवती वा ।

ऋग्वेदे 'ऊम' अव् प्रत्ययघटितो विशेषणशब्दो बहुधा प्रयुक्तः[3] । एकत्र उमासः इत्येष शब्दः प्रयुक्तः (ऋ० सं० १।३।६) । ओमन् शब्दस्य बहुधा प्रयोगो विद्यते । आकाशवाची व्योमन् 'वि+ओमन्' शब्दोऽपि अनवच्छिन्नवैपुल्यस्य, प्रसादस्य, परिरक्षणस्य च बोधकः । उमा शब्दोऽपि एतच्छब्दसगोत्र इति पुंदेवताया विशेषणम् । 'ॐ' एवं स्त्रीदेवताया विशेषणम् 'उमा' इति । ह्रस्वदीर्घयोर्व्यत्ययेऽपि मात्रायाः साम्यं साधु सङ्गच्छते । तथा चोमाशब्दार्थः पालयित्री आनन्दयुक्ता वेति । अतः 'उमा' परमव्योम्नः शक्तिरित्यत्र नास्ति विप्रतिपत्तिः । यक्षशब्दस्य रहस्ये अर्थे प्राचीनप्रसिद्धिर्वर्तते । 'न यासु चित्रं सदृशे न यक्षम्' केनोपनिषदि प्रयुक्तो यक्षशब्दः रहस्यार्थकस्तथा ब्रह्मरहस्यमिति आख्यायिकायां लभ्योऽर्थः । एतेनाभिव्यज्यमानोऽर्थोऽत्र शक्तिमतया तद्रहस्यं न लभ्यम्; अपि तु प्रसादलभ्यं तत् ।

दुर्गासप्तशत्याख्यायिकानुधावनेऽपि शक्तिमत्तानां विनाशः कृपाकाङ्क्षिणामाराधनतत्पराणां तत्प्रसादलभ्यं तद्रहस्यं सुरथसमाध्योः सुलभं सञ्जातम् । 'यमेवैष वृणुते तेन लभ्यः' इति शङ्कराचार्यकृता हैमवतीशब्दस्य द्विविधा व्याख्या समीचीनैव ।

---

१. महाभा० भी० प० २३।११-१२ ।       २. तै० आ० १०।२२ ।

३. ऋ० सं०—४।१९।१, ५।५।११, ७।३९।४, १०।६।७, ३१।३।३२, ८।७७।८, १२०।१।३ ।

हिमवतः पुत्री, हेमालङ्कारभूषिता च। यत ऐन्द्री चेतनाया आविर्भूता महाकाशे मूर्तिः हिरण्मयी, अथ वा सा चेतनाया शुभ्रतुङ्गतामाविर्भूता। एषोऽर्थो न कपोल-कल्पितः; अपि तु ऋग्वेदसमर्थितः। वेदे विष्णुः **'गिरिष्ठाः'** (१।१५४।२) **'वा गिरिक्षित्'** (१।१५४।३), **'इन्द्रोऽपि एष एव'** (१०।१८०।२), **'सोमोऽपि'** (३।४८।२)।

तैत्तिरीयसंहितायां रुद्रार्थे गिरीशशब्दस्य प्रयोगः **'गिरीशन्तु'** (४।५।१।११), **'गिरीश'** (४।५।१।१२), **'नमो गिरीशाय शिपिविष्टाय च'** (४।५।५।१)।

अत्रेदं ध्येयम्—ऋग्वेदे शिपिविष्टो विष्णुः ( ऋ० ७।९९।७ ), वाजसनेय-संहितायां गिरीशय ( वा० सं० १६।२९ ), हिमाचलस्य तुषारश्रृङ्गस्य महिमा रुद्रस्य शिवरूपस्यात एवासौ गिरीशः। एतन्महत्त्वं हि ऋक्संहिताया हिरण्यगर्भ-सूक्तेऽपि विद्यते—**'यस्येमे हिमवन्तो महित्वा'** (१०।१२१।४)। एतद्धिमवत एव हैमवती। तैत्तिरीयसंहितायां सा रुद्रस्य दुहिता अम्बिकानाम्नी। तद्यथा—**'एष ते रुद्रभागः सह स्वस्ताम्बिकया तं जुषस्व'** (तै० सं० १।८।६।१)। अतः केनोपनिषदि उपलब्धा मूर्तिराचार्यशङ्करदृष्ट्या ब्रह्मविद्यारूपिणी, या ऋक्संहितायां 'वाक्'। सा च न सुलभदर्शना **'जायेव पत्य उशती सुवासा'** (ऋ० सं० १०।७१।४) ब्रह्म वाक् च युगनद्ध-मिथुनभूते ( ऋ० सं० १०।११४।८ )। पुराणादौ चैतस्यैव रहस्यस्य परिपल्लवनम्।

एतावता प्रबन्धे 'उँम्' इत्यनेन व्योम्न ब्रह्मण आधिदैविकोऽभेदः सम्पन्नः, इदानीं व्योम्नो विश्लेषणेनोम् इत्यस्याभिप्रायोऽभिव्यक्ततमो भविता।

बृहदारण्यकोपनिषदि अष्टमब्राह्मणे गार्ग्याः प्रश्नौ विद्येते याज्ञवल्क्यं प्रति। तौ च प्रश्नावावेशसम्पन्नौ। तयोक्तं यद् यदि अनयोः प्रश्नयोरुत्तरं विधास्यते, तदा ब्रह्मविचारे त्वं विजयीत्यत्र नास्ति काचिद्विप्रतिपत्तिरिति। 'यदुपरि दिवः=अण्डकपालात्, यच्चाधोऽण्डकपालात्, यच्चाण्डकपालयोः द्यावापृथिव्योर्मध्य यद्भूत वर्तमानं भवि-ष्यच्च, यत्सर्वमेतदाचक्षते, तत्सर्वं द्वैतजात कस्मिन्नेको भवति।'

याज्ञवल्क्येनैतस्य समाधानप्रसङ्गे उक्तम्—यदेतद्व्याकृत सूत्रात्मकं जगद् अव्याकृते आकाशे उत्पन्नं स्थितं लीनं च। अनन्तरं सोवाचाकाशः कस्मिन्नोतश्च प्रोतश्च। आकाशमेव परमव्योम कालत्रयातीतत्वाद् दुर्वाच्यम्। याज्ञवल्क्येनोक्तमक्षरं यन्न क्षीयते न क्षरतीति वा। अस्याक्षरस्य स्वरूपमभिदधत् कथयति—'अस्थूलमनण्व-ह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्र-मवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तद-श्नाति कश्चन[1]।' एतावतैकमेवाद्वितीयं तदक्षरमोमिति। यतः **'ओमित्येकाक्षरं ब्रह्मो-पासीत[2]'** इति श्रुतेः।

---

१. छा० उ० १।८।८। २. छा० उ० १।१।१।

अस्यामेवोपनिषदि पञ्चमाध्याये—

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते[1]॥

इत्यनेन वाक्येन खिलकाण्डमारभ्यते। सारतः संक्षिप्तं पूर्वत्रानुक्तं परिशिष्टं खिलं भवति। ऋग्वेदे श्रीसूक्तं खिलान्तर्गतम्। यजुर्वेदे शिवसङ्कल्पः खिलान्तर्गतः। अत्राप्युपसंहाररूपेणानुक्तः सारांशः संगृहीतः।

एतस्य व्याख्याने शङ्कराचार्योऽभिधत्ते—'सर्वोपासनशेषत्वेनोङ्कारो दमं दानं दयामित्येतानि च विधित्सितानि। पूर्णं न कुतश्चिद्व्यावृत्तमर्थाद् व्योम एव 'ॐ' सर्वव्यापित्वेन सिद्ध्यति। आकाशवद्व्यापि निरुपाधिकमेव 'ॐ'। इदं पूर्णमिति ब्रह्म वा इदमग्र आसीदित्यस्यार्थः। उपसंहार आचार्येणोक्तम् 'यः सर्वोपनिषदर्थो ब्रह्म, स एषोऽनेन मन्त्रेणानूद्यते....ओङ्कारदमदानदयाख्यानि....सर्वोपासनाङ्गभूतानि' इति।

भर्तृप्रपञ्चसम्मतस्य वस्तुतो द्वैताद्वैतरूपत्वात्मस्वरूपस्य आत्मनः प्रतिपादनमपि अनयैव श्रुत्योपलभ्यते। किञ्च द्वैताद्वैतात्मककार्यकारणात्मकप्रतिपादनमपि अनयैव ॐकारप्रतिपादिकया श्रुत्योपलभ्यते। तथा हि—एकैव पूर्णता कार्यकारणयोर्भेदेन व्यपदिश्यते। एवञ्च द्वैताद्वैतात्मकमेव ब्रह्म यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव, यथा च जलं सत्यं तदुद्भवाश्च तरङ्गफेनतरङ्गबुद्बुदादयः समुद्रात्मभूता एव आविर्भावतिरोभावधर्मिणः परमार्थसत्या एव, एवं सर्वमिदं द्वैतं परमार्थसत्यमेव जलतरङ्गादि-स्थानीयम्, समुद्रस्थानीयं परं ब्रह्म। एतस्य च खण्डनमाचार्येण सम्यगेव कृतम्।

शाङ्करभाष्ये अङ्गारस्वरूपं प्रतिपादयता उक्तं यद् ब्रह्मोपासनसाधनत्वार्थमोंशब्दः प्रयुक्तः। ओमिति शंसत्योमित्युद्गायति इत्येवमादौ स्वाध्यायारम्भापवर्गयोश्च ओङ्कारप्रयोगो विनियोगादवगम्यते, न च तदर्थान्तरमिहागम्यते। तस्माद् ध्यानसाधनत्वेनैवेहोङ्कारशब्दस्योपदेशः। यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकाः; श्रुतिप्रामाण्याद् ब्रह्मणो नेदिष्ठमभिधानमोङ्कारः। प्रतीकत्वेनाभिधानत्वेन च ब्रह्मप्रतिपत्ताविदं परं साधनम्। विष्ण्वादिप्रतिमाऽभेदेन प्रतीकत्वेन ऊङ्कारो ब्रह्मेति प्रतिपत्तव्यः, 'सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः'[2] इत्यादि वाक्येन प्रतीकत्वेन ब्रह्म प्रतीयते।

वाचकत्वेनापि प्रतीयते ऊँङ्कारो यथा—वेदोऽयमोङ्कारो वेद विजानात्यनेन यद्वेदितव्यम्। तस्माद्वेद ऊङ्कारो वाचकोऽभिधानम्। तेनाभिधानेन यद्वेदितव्यं ब्रह्म

---

१. बृ० उ० ५।१।१। २. प्र० उ० ५।२।

प्रकाश्यमभिधीयमानं वेद, साधको विजानात्युपलभ्यते, तस्माद् ब्राह्मणानामभिधान-त्वेन साधनत्वमभिप्रेतमोङ्कारस्य।

ऋग्यजुः सामादिभेदभिन्न एष ऊङ्कारः। तद्यथा—शङ्कुना सर्वाणि पर्णानि इतश्चायं वेद ऊङ्कारो यद्वेदितव्यं तत्सर्वं वेदितव्यमोङ्कारेणैव वेदेनेन, अतोऽयमोङ्कारो वेदः। प्रयुज्यमाने हि ओङ्कारे सर्वो वेदः प्रयुक्तो भवति।

अस्य वामीयसूक्तस्याष्टाविंशत्तमे मन्त्रे देहात्मनो जीवात्मनः स्वरूपनिरूपण-प्रसङ्गे उभयोर्मध्ये जीवात्मनो यत्पारमार्थिकं रूपम्, तदेवास्मिन् मन्त्रे प्रकाशितम्—

**ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः।**
**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते[1]॥**

अस्मिन् मन्त्रे ऋक्शब्देन ऋक्प्रधानसाङ्गापरविद्यात्मकचतुर्वेदानां निर्देशो विद्यते। **"द्वे विद्ये वेदितव्ये परा चैवापरा च[2]"** मुण्डके एतदुपक्रमं कृत्वा अनन्तर-मुक्तम्—**"तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः[3]"** ऋचोऽक्षरे इत्यस्य पदस्यार्थं-वेदसम्बन्धी अक्षरः। अक्षरशब्दस्यार्थः क्षरणरहितः, अनश्वरः, नित्यः, सर्वव्यापि ब्रह्म। अक्षरशब्दश्च ब्रह्मवाचकः, तथोक्तम्—**"एतद्वै तदक्षरं गार्गि, ब्राह्मणा अभिवदन्ति"[4]** इत्यपि उपनिषदि प्रसिद्धम् ऋचोऽक्षरस्य च प्रतिपाद्यप्रति-पादकभावसम्बन्धः। ऋक्प्रतिपादकभूताक्षरञ्च प्रतिपाद्यभूतम्। एतदेवोम्, तच्च समस्तवेदप्रतिपाद्यम्।

वेदभागेन यज्ञादेः प्रतिपादनेऽपि, तदनुष्ठानेन चित्तशुद्धिसम्पादनक्रमेण वेद-प्रतिपादितयागादेरपि ब्रह्मवेदनसाधनता विद्यते। वेदस्य इतरभागोऽपि ब्रह्मविषयक एव। अत एव बृहदारण्यकोपनिषदि **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यनेन प्रतिपादितम्। यथाऽस्माभिः पूर्वं निगदितं यद् व्योमन् एव ओमिति, तस्यैवाक्षरोद्गीथस्य परममिति विशेषणं परमे व्योमन्[5]'**। उत्कृष्टार्थकपरमेति विशेषणेनाकाशसदृशस्य निर्लेपत्वनीरूपत्व-व्यापि-त्वादिसादृश्यप्रयुक्तं ब्रह्म व्योमन्शब्देनोच्यते लौकिकाकाशस्यापरव्योम्ना निर्देशः परस्य ब्रह्मणः परमव्योमनाम्ना निर्दिश्यते। लौकिकाकाशनाम्ना ब्रह्मवैलक्षण्यदर्शनार्थं परमशब्दस्य व्योमशब्दविशेषणरूपेण निर्देशः। अथ वा व्योमशब्दार्थो विशेषरूपेण सकलरक्षकः। रक्षणार्थकाव्धातुना व्योमशब्दस्य ऊँशब्दस्य निष्पत्तिर्भवति। यथा ब्रह्म सर्वाधिष्ठानम्, तथैवाधिष्ठानरूपेण ब्रह्म सर्वस्य रक्षकम्। अस्मिन्नेवोङ्कारात्मके तत्त्वे समस्तदृश्यप्रपञ्चमध्यस्तम्।

---

१. ऋ० सं० १।१६४।३९। २. मु० उ० १।४। ३. तदेव—१।५।
४. बृ० उ० ३।८।८। ५. तदेव।

अत्रान्यदपि विशेषितम्—यस्मिन्नोङ्कारात्मके ब्रह्मणि देवा अधिविश्वे निषेदुः। अत्रैव सर्वे देवा आश्रिताः। अक्षरात्मकोङ्कारज्ञानं विना वेदस्य निष्प्रयोजनत्वं को नाम निवारयिष्यति ? अक्षरात्मकब्रह्मज्ञानं विना किमपि न भवितुमर्हति, ब्रह्मविदेव स्वरूपेऽवस्थानं प्राप्नोति। सर्वतादात्म्यस्वरूपोङ्कारोपासनयैवाक्षरभावता प्राप्यते। शब्दब्रह्मवादस्यैतदेव तात्पर्यम्—'**ऋचो अक्षरे परमे व्योमन्**'। अतो व्योमात्मकोङ्कारत्वं सर्वथा शास्त्रप्रसिद्धम्। नादात्मिका परात्मिका मूलाधारस्था वागेवोङ्काररूपा। अत एव गीतायामुक्तम्—"**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः**[1]" इति। एतेन स्वतःसिद्धं परं ब्रह्मैव तच्छब्देनोच्यते।

प्रदर्शितेयमृग् व्याकरणदर्शनसिद्धान्तसिद्धस्य शब्दब्रह्मण आधारभूतेति समासेनोच्यते। निरुक्तेऽस्य मन्त्रस्य व्याख्याने त्रिविधोऽर्थ उक्तः, तथा हि—प्रथमं सायणसम्मतार्थं विलिख्योङ्कारस्वरूपं प्रदर्श्यानन्तरं यास्कव्याख्यानत्रयं विलिखामि।

सायणाचार्येणोक्तमस्मिन् मन्त्रे जीवात्मनः पारमार्थिकं स्वरूपमुल्लिखितम्। यतो मुण्डकोपनिषदि शिक्षाकल्पादिसहितस्य वेदचतुष्टयस्यापरविद्याया निर्देशो विद्यते[2]। चतुर्वेदसम्बद्धात्मकाक्षरात्मके परमे व्योमनि द्योतनात्मका देवाः प्रतिष्ठिताः क्षरणरहितोऽविनश्वरं तत्त्वमक्षरम्। एतदर्थं नित्यं सर्वव्यापि एवाक्षरशब्दार्थः। अक्षरशब्दस्य ब्रह्मवाचकत्वम्। '**एतद् वै तदक्षरं गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः**[3]' इत्यादिबृहदारण्यके प्रसिद्धिं लभते। एवमेव '**अथ परा यया तदक्षरमधिगम्यते**[4]'। एतन्मुण्डकवाक्येऽपि अक्षरशब्दस्य ब्रह्मवाचकत्वं सिद्धमेव। अग्रे '**येनाक्षरं पुरुषं वेदसत्यम्**[5]'। अतोऽत्र अक्षरशब्दो ब्रह्मवाचकः, तच्च ब्रह्म सर्ववेदप्रतिपाद्यम्। एतस्यैव ब्रह्मण ऋचोऽक्षरे इति मन्त्रभागेन प्रतिपादनम् अक्षरपदाभिधेयं ब्रह्म 'परमं व्योम' व्योमशब्दस्य भूताकाशोऽर्थः, 'परमव्योम' शब्दस्य परमाकाशो ब्रह्म वाऽर्थः। आकाशस्य यथा निर्लेपत्वम्, रूपरहितत्वं सर्वव्यापित्वं वाऽर्थः, ब्रह्मणोऽपि तथैव निर्लेपत्वं नीरूपत्वं सर्वव्यापित्वञ्च। अतः 'परमव्योम' इत्यस्य शब्दस्य ब्रह्मणो निर्देशे न काप्यापत्तिः, तदेव 'ओम्'। 'आकाशस्तु तल्लिङ्गात्[6]' एतत्सूत्रभाष्येऽपि शङ्कराचार्येण एतस्या एव ऋचो घटकस्य मन्त्रस्य उद्धारः कृतः। एवम् आकाशः परमव्योम, 'ख' इत्यादयः शब्दा ब्रह्मणो वाचकाः, ब्रह्मणात्मकः परमे व्योमनि सर्वे द्योतनरूपा देवा आश्रिता अवतिष्ठन्ते।

'ऋचो अधि निषेदुः' अत्र 'ऋक्' इति शब्देन समस्तवेदस्यैवावगतिरिति। सर्वे च वेदा ब्रह्मणि पर्यवसिता इति '**सर्वे वेदा यत् पदमामनन्ति**[7]' अनेन वाक्येनैतदेव

---

१. श्रीमद्भगवद्गीता—१७।२३। २. मु० उ० १।४-५।
३. बृ० उ० ३।८।८-९। ४. मु० उ० १।५। ५. तदेव—१।२।१३।
६. ब्रे० सू० १।१।२२। ७. क० उ० २।१५।

सिद्धम्, येन सर्वे देवाः स्वरूपं लभन्ते, सर्वे वेदा यस्य प्रतिपादनं कुर्वन्ति, तद् यदि मानवा न जानन्ति, तदा ऋङ्मन्त्रेण तस्य को लाभः ? अर्थाद् ऋगादिशब्दजालं तस्य कृते व्यर्थमेव। ब्रह्मवेदसाधनं वेदो वेदवेद्यं च ब्रह्म। सर्ववेदवेद्यस्य ब्रह्मणो ज्ञानं विना वेदविहितयागादिकर्मणोऽनुष्ठानं वृथैव, एवमेव ऋङ्मन्त्रसमूहस्य तादृशस्य पुरुषस्य कृते व्यर्थमेव।

'ये इत्', 'ये एव' ये एतदक्षरपदवाच्यं ब्रह्म जानन्ति, त एव 'समासते' सम्यक् तिष्ठन्ति, अर्थात् स्वरूपे तिष्ठन्ति। एतादृशस्य पुरुषस्य संसारे पुनरावृत्तिर्न भवति। अथ वा 'ये विदुरित्' ये ब्रह्मस्वरूपं जानन्ति, ब्रह्म ज्ञात्वा तत्रैव 'समासते' समस्तसत्रस्य 'सं=युगपत्' अनुष्ठानं कुर्वन्ति, अर्थाद् ब्रह्मवित् कर्मणोऽनुष्ठानं विनैव सकलकर्मानुष्ठानफलं प्राप्नुवन्ति। ब्रह्मज्ञानेनैव समस्तफलं प्राप्य कृतकृत्यः पूर्णतृप्तो भवति। कर्मफललाभार्थं ब्रह्मज्ञपुरुषस्य कृते कर्मणोऽनुष्ठानस्यावश्यकता न भवति।

यास्केन च मन्त्रस्य त्रिविधा व्याख्या कृता। प्रथमा व्याख्या शाकपूणिसम्मता, द्वितीया व्याख्या शाकपूणिपुत्रस्य, तृतीया व्याख्या चात्मवादिसम्मता। तत्र शाकपूणिमते मन्त्रप्रतिपाद्य ऊङ्कारः, तत्पुत्रमते आदित्यमण्डलान्तर्वर्त्ती हिरण्मयः पुरुषः परमेश्वरः। तृतीयमते च आत्मतत्त्वमेव प्रतिपाद्यम्।

शाकपूणिमते मन्त्रान्तर्गतस्याक्षरशब्दस्यार्थः ऊङ्कारः। ऊङ्कारं विना ऋङ्मन्त्रार्थो व्यर्थः, कस्यापि कर्मणः साधनं तेन न भवति। ऊङ्कार एव परमं व्योम। ऊङ्कारे विविधशब्दसमूहाः पर्यवसिता इति परमं व्योम। भूताकाशश्रेष्ठत्वादोङ्कारः परमं व्योम। ऊङ्कारस्य अकारोकारमकारात्मकस्य व्यक्तमात्रात्रयस्योपशान्तत्वे सर्वशब्दानुस्यूतशब्दसामान्यं विद्यते, तदेव परमं व्योम, तदेव च क्षरणवर्जितत्वाद् अक्षरम्। विशेषावस्थायां क्षरत्वेऽपि सर्वविशेषानुस्यूतशब्दसामान्यमक्षरम्। ऋगादि सर्वे शब्दा एव शब्दसामान्ये व्यवस्थिता। विशेषमात्रमेवानुगतसामान्येऽवस्थितम्। समस्तमृद्विशेषो विशेषानुगतमृत्सामान्ये व्यवस्थितः, दीप्त्यात्मकदेवप्रकाशकः ऋगादिमन्त्रः। शब्दविशेषत्वाच्च मन्त्रस्य क्षरत्वम्। समस्तं क्षरमेवाक्षरे व्यवस्थितम्। अत एव मन्त्रप्रकाश्या देवा मन्त्रेण परमे व्योम्नि अक्षरे अधिनिषण्णास्तिष्ठन्ति। अनेनैवाभिप्रायेण **'यस्मिन् देवा अधि निषेदुः'** इत्युक्तम्। सर्वोऽप्यर्थस्तदर्थवाचकशब्दस्य परिणामो विवर्तो वा ? तथा चार्थमात्रं वाचके शब्दे व्यवस्थितम्। अर्थेष्वेव शब्दः सर्वत्रानुस्यूतो विद्यते। शब्दविशेषोऽपि शब्दसामान्ये व्यवस्थित इति शब्दसामान्यं परममक्षरं व्योम इति सर्वः शब्दविशेष ऊङ्कारात्मके शब्दे व्यवस्थितः। अकारादित्रयस्योपशान्तावोङ्कारो शब्दसामान्ये प्रतिष्ठित इति। अत एव नु **'ऊङ्कार' 'एवेदं सर्वम्'** इति श्रुतावुक्तम्। विभूतिसहितस्य अक्षरात्मकस्य व्योम्नो ज्ञानाभावे ऋगादिमन्त्रेणाभीष्टसिद्धिर्न कदापि सम्भाव्यते। यतः समस्तोऽप्ययं शब्दविशेषश्चैतस्यैवा-

क्षरस्य विभूतिः। अक्षरविभूतिषु दीप्त्यात्मकस्य देवस्य प्रधानत्वात् तस्यैव मन्त्रे निर्देशः।

मीमांसादर्शने मन्त्रात्मको देवः प्रधानभूतोऽर्थवर्गः शब्दविशेषश्चेति ॐकारे शब्दसामान्ये स व्यवस्थितः।

अर्थसमूहोऽर्थानुगतवाचकशब्दविशेषे वाचकः शब्द ॐकारे, ॐकारश्च शब्दसामान्ये व्यवस्थित इति परमव्योमाक्षरः सर्वाधार इति।

सांख्ये अव्यक्तसिद्ध्यर्थमेष एव हेतुः 'भेदानां परिणामात् समन्वयात्' इत्यनेनोक्त इति समन्वयहेतुनैवात्र परमव्योम्नोऽक्षरस्य सिद्धिः मन्त्रे प्रदर्शिता। एष एव ब्रह्मवादो व्याकरणसिद्धान्तस्याधारभूतः। तद्यथा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[1]॥

इति वाक्यपदीयोपक्रमे व्याकरणराद्धान्तप्रदर्शने उक्तम्। एषैव ऋक् शब्दब्रह्मवादाख्यदार्शनिकसिद्धान्तमूलभूता।

देवप्रधानार्थराशिः शब्दराशिश्च परमव्योमाक्षररूपेण यदि न ज्ञायेते, तदा मन्त्रभागस्य व्यर्थतां को नाम निवारयितुमीष्टे? अर्थराशेः शब्दसमूहस्य चाक्षररूपेण दर्शनदशायां द्रष्टॄणामप्यर्थतादात्म्यं जायते। अक्षरताद्रूप्यप्राप्तौ द्रष्टा प्रणवविग्रहात्मनि अनुप्रविष्टः समीकृतो भवति। सर्वानुस्यूतशब्दसामान्यरूपस्य द्रष्टा अपि शब्दानुस्यूतः सन् समीकृतो भवति। विशेषलेशवर्जितः सन् निर्वाणमाप्नोति। निर्विशेषशब्दसामान्यमेव निर्विशेषचित्स्वरूपं सर्वप्रकाशस्वरूपम्।

चित्प्रकाश एव शब्दान्तर्वर्ती सन् भासत इति शब्दोऽप्यर्थप्रकाशको जायते। नात्र सन्देहो यच्छब्दब्रह्मवादी वैयाकरणोऽपि चित्स्वरूपवादी एव। शब्दब्रह्मवादस्य व्याकरणमतस्य शाकपूणिरेव प्रवर्तकः। इदानीमोङ्कारस्वरूपप्रदर्शनोपक्रमे शब्दब्रह्मसिद्धान्तस्य विश्लेषणाद् विरम्यते विस्तरभयात्।

**शाकपूणिपुत्रस्य व्याख्या—**

शाकपूणिपुत्रोऽनया ऋचा संविदात्मकस्य तेजसः प्रकाशं स्वीकृत्य दीप्तिप्रतीकभूतस्यादित्यस्य (अखण्डादितेः पुत्रस्य) यन्मण्डलम्, तन्मध्यवर्तिनो हिरण्मयपुरुषस्य बोधकत्वमङ्गीकरोति; स्तुत्यर्थकाद् ऋच् धातोर्निष्पन्न एष ऋक् शब्दः। अत एव 'यदेनमर्चन्ति' इत्युक्तम्। आदित्यमण्डलस्य सवित्रात्मकस्य सर्व एव तेजसः प्राप्त्यर्थमर्चन्तीति आदित्यमण्डलस्यात्र ऋक्शब्दप्रतिपाद्यत्वम्। आदित्यमण्डलाभिन्न

१. वा० प० १।१।

आदित्यमण्डलमध्यवर्ती हिरण्मयपरमेश्वर एवाक्षरः, स एव च परमव्योम। तस्मादेव सर्वमोतम्। उक्तं छान्दोग्योपनिषदि—**'य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'**[1] इति। अस्यां श्रुतावपि आदित्यमध्यवर्ती पुरुष एव परमेश्वर उच्यते। **'अन्तस्तद्धर्मापदेशात्'**[2] सूत्रे आदित्यमण्डलमध्यवर्ती पुरुष एव परमेश्वरत्वेन व्यवस्थितः। मन्त्रस्थदेवशब्देनादित्यरश्मिसमूह एव वर्ण्यते। रश्मिसमूहस्य द्योतमानत्वाद् देवशब्दाभिधेयत्वम्। एष रश्मिसमूहो द्योतमाने अधिनिषण्णो वर्तते। एतदक्षरापरिज्ञानं विना आदित्यमण्डलात्मचर्चा किं भविष्यति? तन्मध्यवर्तिनः पुरुषस्य यथार्थज्ञानं विना आदित्यज्ञानं न भवितुमर्हति। तज्ज्ञातैव समासते=सम्यग्भावेन स्थितो भवति, अर्थात् स्वस्वरूपे स्थितिं लभते। तेजोमयत्वान्न स पुनरावर्तते।

**तृतीयव्याख्या—**

आत्मवादिनां 'ऋक्' शब्दस्यार्थो शरीरम्। शरीरस्थानीन्द्रियाणि देवशब्दाभिधेयानि विषयाणां द्योतनाद् देवत्वमुच्यते। द्युत् धातोर्देवशब्दो जायते। शरीरस्थितेन्द्रियग्रामाद् विभिन्नविषयज्ञानात् तद् विषयविषयकविशेषविज्ञानसमूहेऽनुस्यूतो निर्विशेषप्रकाश एवाक्षरपदाभिधेयः। अत एव चिन्मात्रस्वरूपात्मनोऽज्ञाने शरीरेण न किमपि भवितुमर्हति? जीवनसाफल्याय निर्विशेषचिन्मात्राक्षरज्ञानमावश्यकम्। तज्ज्ञानेन च द्रष्टुः स्वरूपमात्रेवस्थितिर्भवति।

अत ओङ्कार एव सर्वं सामान्यं ज्योतिषां ज्योतिरिति तदुपासना करणीयेति।

मनुस्मृतावप्युक्तम्—**'एकाक्षरं परं ब्रह्म'**[3] टीकायाञ्च एकाक्षरमोंकारः परं ब्रह्म, परब्रह्मावाप्तिहेतुत्वात्। अग्रे च—"अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः। अक्षरं प्रणवरूपमक्षयं ब्रह्मप्राप्तिहेतुत्वात्।

जैनदर्शनेऽपि 'अर्हत्' इत्यस्य सिद्धस्य अशरीरस्य वा प्रथमाक्षरम् 'अ' इति आचार्यस्य, प्रथमाक्षरम् 'आ' इति उपाध्यायस्य, प्रथमाक्षरम् 'उ' इति मुनेः प्रथमाक्षरं म इति पञ्चभिरक्षरैः 'ॐ' त्रिलोकाकारः। तस्मादोंकारस्य सर्वैरेव दीप्तिरूपत्वमङ्गीकृतमिति।

• • •

---

१. छा० उ० १।६।६।    २. वे० सू० १।१।२०।

३. मनु० २।८३।

# लकारार्थनिर्वचनम्

श्रीरामानन्दन ओझाः

प्राचार्यचरः,

रीवांस्थस्य म० प्र० शासकीयसंस्कृतोपाधिमहाविद्यालयस्य

❀ ❀ ❀

अथ सुप्तिङ्चयो वाक्यमित्यस्य क्रियाकारकसमुदायमात्रमित्यर्थः। क्रियायां च प्रकृतिप्रत्ययाभ्यां भागद्वयं वर्तते। तत्र प्रत्ययभाग एव लकारव्यवहार्य इति तन्निर्वचने नैयायिकवर्या लकारा एव वाचकाः, न तु लादेशास्तिबादयः, तेषाञ्च कृतौ शक्तिर्लाघवात्। आश्रस्यय तिङर्थत्वे त्वाश्रयत्वस्य शक्यतावच्छेदकत्वेन स्वरूपाभिन्नतया नानासम्बन्धावच्छिन्नतया च नानात्वाच्छक्तताबच्छेदकत्वे गौरवाच्च। न चैवं **'रथो गच्छति'** इत्यादावनात्मके कृतित्वासम्भवान्नान्वयापत्तिरिति वाच्यम्, व्यापारे लक्षणां विधाय लकारसाधारणस्य लत्वस्यैव शक्ततावच्छेदकत्वस्वीकारेणादोषात्। तिङां च बाहुल्येन तिप्त्वादीनां बहूनां शक्ततावच्छेदकत्वे गौरवाच्चेत्याहुः, तदसहमानाः प्राचीनवैयाकरणास्तु—**'उच्चारित एव शब्दः प्रत्यायकः, नानुचारितः'** इति भाष्यप्रामाण्येन तिङामेवाश्रये शक्तिः। फलाश्रये व्यापाराश्रये चेत्यर्थः। फलव्यापारयोस्तु धातुलभ्यत्वेन **"अनन्यलभ्यो हि शब्दार्थः'** इति न्यायेन तिङां तत्र शक्तिकल्पनमनुचितमेव। तदर्थाश्च कर्त्तृ-कर्म-सङ्ख्या-कालाः। तत्र सङ्ख्या कर्तृप्रत्यये कर्तरि, कर्म्मप्रत्यये च कर्मणि विशेषणतयाऽन्वेति। कालस्तु व्यापारेऽन्वेति **'क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका'** इति नियमात्।

ननु कर्तृकर्मणोराख्यातार्थत्वे मानाभावः। न च **'यद् यद्बोधकम्, तत्तदर्थवाचकम्'** इति नियमादाख्यातलभ्यकर्तृकर्मप्रतीतिरेव मानमिति वाच्यम्, लक्षणया तत्सम्भवात्। न चाख्यातस्य तल्लक्षकत्वे भावनाभानानुपपत्तिः, तदर्थं तस्य शक्तिकल्पनेनाश्रये लक्षणा, युगपद् वृत्तिद्वयस्य विरोधदर्शनात्। भावनाश्रयत्वेन तत्र लक्षणायां तस्याः प्राधान्यभङ्गापत्तिश्चेति वाच्यम्, तदाक्षेपादेव भानसम्भवात्। न च व्याप्त्यादिज्ञानं विनाऽपि तद्बोधस्यानुभवेन नाक्षेपेणाश्रयबोधोपपत्तिरिति वाच्यम्, समभिव्याहृतचैत्रादिप्रथमान्तपदादेवाश्रयस्य प्रतीतिसम्भवादिति चेत्, न, **'लः कर्मणि च भावे चाकर्मकेभ्यः'**[1] इति सूत्रस्यैव प्रमाणत्वात्। अत्र हि चकारेण **'कर्तरि**

---

1. अष्टा० ३।४।६९।

कृत्' इति सूत्रात्कर्तरीत्यनुकृष्य बोधकतारूपां शक्ति तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य कर्तरि कर्मणि च लकारा विधीयन्ते ।

**अयं भावः**—यथा 'रामान्', 'रामैः' इत्यादौ नकारविसर्गादिनिष्ठशक्तिमादायैव शस्-भिसादीनां प्रवर्तनम्, तथैव तिबादिनिष्ठशक्तिमादायैव लकाराणां कल्पितार्थकत्वम्, स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति स्वीकारात् ।

अत्रायं निष्कर्षः—**'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'**[1] इति निरुक्तात्, **'भूवादयो धातवः'**[2] इति सूत्रस्थभाष्याच्च कर्तृप्रत्ययस्थले वा सर्वत्र व्यापारमुख्यविशेष्यक एव शाब्दबोधः । तथा च **'तण्डुलं पचति देवदत्तः'** इत्यत्र तण्डुलाभिन्नकर्मकविक्लित्यनुकूलदेवदत्ताभिन्नैककर्तृको वर्तमानकालिको व्यापारः । **'पच्यते ओदनः'** इत्यादौ तु देवदत्ताभिन्नकर्तृनिष्ठवर्तमानकालिक एकत्वावच्छिन्नौदनाभिन्नकर्मनिष्ठविक्लित्यनुकूलो व्यापार इति शाब्दबोधः ।

अत एव—

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्**[3] ॥

इति कारिकासङ्गतिरिति दृढं सङ्गिरन्ते ।

**नव्यवैयाकरणास्तु**—**'फले प्रधानं व्यापारः'** इत्याद्युपात्तव्यापारप्राधान्यबोधनन्तु कर्तृप्रत्ययाभिप्रायकमिति स्वीकृत्य, कर्तृप्रत्यये व्यापारमुख्यविशेष्यकः, कर्मप्रत्यये तु फलमुख्यविशेष्यको बोध इति स्वीकुर्वन्ति । अथवा **'फले प्रधानं व्यापारः'** इत्यत्र प्रधानमप्रधानञ्चेत्युभयपदच्छेदं कृत्वा, प्रधानस्य कर्तृप्रत्ययसमभिव्याहारे, अप्रधानस्य च कर्मप्रत्ययसमभिव्याहारे तात्पर्यं साधयित्वोक्तोभयशाब्दबोधे विप्रतिपत्तिं वारयन्ति । तन्मते **'सुप आत्मनः क्यच्'**[4] इति सूत्रस्थभाष्यसङ्गतिरेव शरणम् । भावार्थाधिकरणस्थमीमांसकरीत्या विक्लित्यादि फलमेव धात्वर्थः, न व्यापारः, बहूनां धातूनां शक्तिकल्पनापेक्षयाऽल्पप्रत्ययानामेव शक्तिकल्पने लाघवमिति व्यापारस्य धात्वर्थत्वाभावादनन्यलभ्यत्वेन लकारस्य तत्र शक्तिकल्पनमेव न्याय्यमिति नादर्त्तव्यम्, **'कर्तरि कृत्'**[5], **'लः कर्मणि'** इति सूत्रयोः समानविषयत्वेन कृतामिव लकाराणामपि कर्तृकर्मवाचित्वमावश्यकम्, अर्धजरतीयस्यानौचित्यात् ।

न चाख्यातस्य कर्तृवाचित्वेऽपि भावनाया आक्षेपेण प्रतीतिसम्भवे व्यापारस्य वाच्यत्वाभावेन तस्य प्राधान्यानापत्तिरिति वाच्यम्, घटमानयेत्यादौ जातिः पदार्थं

---

१. निरु० १।१।१ । २. अष्टा० १।३।१ । ३. वै० भू० धा० २ ।
४. अष्टा० ३।१।८ । ५. तदेव—३।४।६७ ।

इति मते यथा जात्याक्षिप्तव्यक्तेरपि प्राधान्यम्, तथैव कर्त्राक्षिप्तभावनाया अपि प्राधान्यापत्तेः। पचतीत्यस्य पाकं करोतीति विवरणद्वारा भावनैव तिङ्वाच्येति नाशङ्कनीयम्, पाकानुकूलकर्तुरपि विवरणदर्शनेनाविशेषात्। **'पक्ता देवदत्तः'** इतिवत् **'पचति देवदत्तः'** इत्यत्राप्यभेदान्वयदर्शनात्कर्तुर्वाच्यत्वमावश्यकं पदप्रतिपाद्यार्थस्य पदबोध्यार्थे प्रकारतया सर्वत्र भानदर्शनात्।

न चाभेदसम्बन्धावच्छिन्नप्रकारताकबोधे समानविभक्तिकत्वं नियामकमिति वाच्यम्, **'सोमेन यजेत'**, **'स्तोकं पचति'**, **'राजपुरुषः'** इत्यादौ भेदबोधानापत्तेः। प्रधानषष्ठ्यर्थं एवानुशासनमाश्रीयते, अन्यथा पिङ्गाक्ष्यादियौगिकानां वैश्वदेवीत्यादि-तद्धितानामपि द्रव्यवाचित्वानापत्तेश्च।

न चैवमाख्यातार्थकर्तृप्रधानबोधे देवदत्तादिभिरभेदान्वयोपपत्तौ प्रथमान्तमुख्य-विशेष्यकशाब्दबोध एवापतति इति नैयायिकोक्तिः साध्वीति वाच्यम्, **'कर्मणा यमभिप्रैति'**[1] इति सूत्रभाष्यसिद्धा 'पश्य मृगो धावति' इत्यत्रैकवाक्यता न स्यात्। मृगकर्तृकधावनस्य दर्शनक्रियायाः कर्मभूतस्य कर्मतयाऽन्यत्रान्वयायोगात्। तथाहि तत्र भाष्यम्—**'क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपीहि क्रिययेप्सिता भवति कया सन्दर्श-नादिक्रियया:'** इति। अन्यथा धावनक्रियाविशेष्यभूतस्य मृगस्य कर्मत्वापत्तौ द्वितीया-पत्तेः। एवञ्च कर्तृकर्मणी तिङर्थं एवेति सिद्धम्।

तदेवं सामान्यार्थं निरूप्य लकारविशेषार्थो निरूप्यते—लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् इति दश लकाराः सन्ति। तदेते **'वर्तमाने लट्'**[2] इत्यादि सूत्रे वर्तमानत्वाद्यर्थेषु नियम्यन्ते। तथाहि—**'वर्तमाने लट्'** इति सूत्राल्लडर्थो वर्तमानकालः। प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम्। तच्च विनष्टाद्यवयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वम्। पचतीत्यादावधि-श्रयणाद्यधःश्रयणपर्यन्तं मध्ये तद् वर्तमानत्वमस्तीति भवति लट् प्रयोगः।

यद्यपि भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्येति निरुक्तात्काल-स्यैव वर्तमानत्वादिकं प्रतीयते; तथापि निरुपाधिकस्य तस्य वर्तमानत्वादिना प्रत्येतु-मशक्यत्वादुपाधिभूतक्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयाऽऽवश्यकत्वात् क्रियायामेव तत्त्वमित्यवधेयम्। न चैवमात्मास्ति, **'पर्वताः सन्ति'** इत्यादावात्मधारणानुकूल-क्रियाया नित्यत्वात्साध्यत्वासम्भवेन तद्धर्मस्य प्रारब्धापरिसमाप्तत्वाभावेन कथं तत्र लट् प्रयोग इति वाच्यम्, तत्तत्कालिकराज्ञां क्रियाया अनित्यतया तद्विशिष्टस्य तस्योत्पादिमत्तया निरुक्तवर्तमानत्वस्योपपादनीयत्वात्।

तथा चात्र भाष्यम्—**'इह भूतभविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेर-धिकरणम्'** इति।

---

१. अष्टा० १।४।३२।  २. तदेव—३।२।१२३।

परतो भिद्यते सर्वमात्मा तु न विकम्पते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते[1] ॥

इति वाक्यपदीयमपि साक्ष्यम् ।

तथा चैवं तम आसीदित्यादौ तमसोऽज्ञानस्य सदा सत्त्वेन भूतकालबोधकप्रत्ययोत्पत्तिः । तच्च वर्तमानत्वादिलडादिद्योत्यं वाच्यं वेति पक्षद्वयम् । अर्थाद्धातोर्वाच्यत्वपक्षे तस्य सर्वलकारेषु साधारण्येन सर्वत्रैव वर्तमानकालबोधापत्तिनिरासाय लडादीनां द्योतकत्वमङ्गीक्रियते । अथवाऽनेकधातूनां तत्र तत्र शक्तिकल्पने गौरवादल्पतरप्रत्ययानामेव शक्तिकल्पने वाचकत्वमपीत्यन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव । अन्यथा त्वेवं रीत्या प्रत्ययानां वाचकत्वविलोपापत्तिः ।

लिडर्थस्तावत्—भूतानद्यतनपरोक्षार्थवृत्तित्वम् ।

अयम्भावः—अद्यतनानद्यतनभेदेन कालो द्विधा विभज्यते । तत्र समासरात्रेः शेषार्धेनागामिन्याश्च रात्रेः पूर्वार्धेन च सहितो यः कालः, सोऽद्यतनः, तद्भिन्नकालोऽनद्यतन इति । स च भूतभविष्यदुभयरूपः । तथा चाद्यतनभिन्नकालवृत्तिः परोक्षा या क्रिया, तद्वाचकाद्धातोर्लिडिति 'परोक्षे लिट्'[2] इति सूत्राल्लभ्यते । परोक्षत्वञ्च साक्षात्करोमीत्येतादृशप्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वम् । न च कस्याश्चिदपि क्रियाया अप्रत्यक्षत्वेन 'परोक्षे०' इति पदं न कस्याश्चिद् व्यावर्तकम्, **'क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्'**[3] इति भाष्येण तस्या अतीन्द्रियत्वसाधनेन सकलक्रियाणां प्रत्यक्षाविषयत्वावगमादिति वाच्यम्, पिण्डीभूतायाः क्रियाया एव तेन भाष्येणातीन्द्रियत्वप्रतिपादनम्, अतस्तदतीन्द्रियत्वेऽपि फूत्कारत्वाद्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवेन परोक्षपदस्य व्यावर्तकत्वसम्भवात् । अत एव 'पश्य मृगो धावति' इत्यत्र दर्शनकर्मणा क्रियाया भाष्योक्ता सङ्गच्छते ।

केचित्तु, अयं पपाचेत्यनुरोधाद् व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र परोक्षत्वम् । अतो नोक्तदोष इति वदन्ति । **'व्यातेने किरणावलीमुदयनः'** इति लिट्प्रयोगस्य व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनन्तु न सुशकम्, बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकरचनात्मकग्रन्थेऽनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन तदर्थकलिटोऽसम्भवेन तदसङ्गतत्वात् ।

लुडर्थस्तु भविष्यदनद्यतनवृत्तित्वम्, 'अनद्यतने लुट्'[4] इति सूत्रात् । भविष्यत्वञ्च वर्तमानप्रागभावप्रतियोगि समयत्वम्, यथा 'श्वो भविता' इत्यादि ।

---

१. वा० प० ३।९।८० ।
२. अष्टा० ३।२।११५ ।
३. महाभाष्यम्–१।३ २ ।
४. अष्टा० ३।३।१५ ।

लृडर्थो हि—भविष्यत्सामान्यवाचकत्वम्, 'लृट् शेषे च'[1] इति सूत्रात्। यथा घटो भविष्यतीति।

लेडर्थस्तु विध्यादिः 'लिङर्थे लेट्'[2] इति सूत्रात्। स च वेद एव प्रयुज्यते।

लोडर्थास्तु—विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनाशिषः। 'आशिषि लिङ्लोटौ'[3], 'लोट् च'[4] इति सूत्रद्वयात्तल्लाभात्।

लङर्थस्तु—'अनद्यतने लङ्' इति सूत्रादनद्यतनभूत एव। यथाऽस्य पुत्रोऽभवदिति।

लिङर्थस्तु—'विधिनिमन्त्रणा०' इत्यादि सूत्राद् विध्यादयः। अत्र विध्याद्यधीष्टान्तेषु चतुर्षु प्रवर्तनाया एव सत्त्वात्प्रवर्तनात्वेनैव वाच्यता स्वीकार्या, लाघवात्। उक्तञ्च—

> अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
> तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
> न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
> विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥

प्रवर्तनात्वञ्च—प्रवृत्तिजनकं यज्ज्ञानं तद्विषयत्वावच्छेदकम्। तच्चेष्टसाधनत्वस्यापीति इष्टसाधनत्वमेव विध्याद्यर्थः। इष्टत्वञ्च समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्। स्वर्गकामो यजेतेत्यत्र स्वर्गकामपदोपस्थापितकामनाविषयत्वं स्वर्गोऽस्तीति तस्येष्टत्वं सुस्थितम्। यद्यपि कृतिसाध्यत्वस्य प्रवर्तकत्वेन प्रवर्तकज्ञानविषयतावच्छेदकत्वं तस्यापि; तथापि यागो मत्कृतिसाध्यो मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वादित्यनुमानेन तस्यावगमान्न तच्छक्यम्, 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायात्।

न च मधुविषसम्पृक्तान्नभोजनादौ प्रवृत्तिविघाताय बलवदनिष्टाजनकत्वज्ञानस्यापि प्रवृत्तिहेतुत्वे तत्रापि शक्तिरावश्यकीति वाच्यम्, द्वेषाभावेन तदन्यथासिद्धत्वात्।

ननु नान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवदनिष्टाजनकत्वं तज्ज्ञानस्य हेतुः, तथा च न बह्वायाससाध्ये प्रवृत्त्यनापत्तिस्तज्जन्यबहुतरदुःखस्य सत्त्वेऽपि बलवत्त्वाभावात्। न चावश्यकद्वेषाभावेन तस्यान्यथासिद्धिरिति वाच्यम्, स्वतन्त्रान्वयव्यतिरेकशालितयोक्तज्ञानस्य हेतुत्वावश्यकत्वाद्द्वेषाभावदशायां तथाविधज्ञानं विना प्रवृत्त्यापत्तेश्चेति चेत्, न, आस्तिककामुकस्य नरकसाधनतादशाज्ञानदशायामप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च। तस्मादिष्टसाधनत्वमेव प्रवर्तना।

---

१. अष्टा० ३।३।१३। २. तदेव—३।४।७। ३. तदेव—३।३।१७३।
४. तदेव—८।१।५२।

अत एव हि—'**पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः**' इति मण्डनमिश्रोक्तिः सङ्गच्छते। '**हेतुहेतुमतोर्लिङ्**[1]' इति सूत्रप्राप्तो हेतुहेतुमद्भावोऽपि लिङर्थः। यथा यो वा ब्राह्मणमवगुरेत्, तं शतेन यातयेत्। अत्रावगोरणं हननार्थं दण्डाद्युद्यमनम्।

भट्टमतानुयायिनस्तु—विधिप्रवर्तनैव, लिङादि श्रवणेयं मां प्रेरयतीति नियमेन प्रतीतेरभिधाख्या प्रेरणापरपर्य्याया व्यापाररूपा लिङादिवाच्या। स च व्यापारः सम्भवाल्लोके प्रवर्तकपुरुषनिष्ठोऽभिप्रायविशेष एव तत्प्रवर्तकत्वञ्च लिङाद्युच्चारयितृत्वम्।

वेदे हि लिङाद्यन्तशब्दस्वरूप एव प्रयोक्तुरभावात्—इत्याहुः, तन्न, स्तनपानादिप्रवृत्ताविष्टसाधनताज्ञानस्य कारणताया आवश्यकतया तत एवोपपत्तौ प्रवर्तमानाज्ञानस्य कारणत्वे मानाभवात्। '**स्वर्गकामो यजेत**' इत्यादौ प्रवर्तनाविषयो यागकरणिका स्वर्गकर्मिका भावनेति बोधस्य परैरभ्युपगमात् प्रवर्तनाविषयत्वमात्रज्ञानात् प्रवृत्यनुपपत्तेरावश्यकस्वर्गसाधनत्वादिज्ञानादेव तत्र प्रवृत्तेः।

**प्राभाकरास्तु**—यागादेराशुतरविनाशित्वेन कालान्तरभाविस्वर्गादिसाधनत्वस्य ग्रहणाभावान्नेष्टसाधनत्वं विध्यर्थः। न च तावद् द्वारानुपस्थितत्वेन परम्परया साधनत्वस्यापि ज्ञानं सम्भवति, योग्यताज्ञानस्य शाब्दहेतुत्वात्। सा चान्वयप्रयोजकरूपा। यथा '**घटेन जलमाहर**' इत्यत्र सच्छिद्रेतरघटत्वम्। सामान्यसाधनत्वेनापि न बोधोपपत्तिः, विशेषबाधे सामान्यज्ञानस्य तदितरप्रकारकत्वनियमात्। तस्मात्कार्यत्वरूपेणापूर्वमेव लिङादिवाच्यमित्याहुः।

**लुङर्थस्तु**—भूतसामान्यम्, '**भूते**[2]' इत्यधिकारे '**लुङ्**[3]' इति सूत्रात्। अत्र भूतत्वञ्च वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम्। अत एव घटसत्तायामपि घटोऽजायतेति प्रयोगः।

**लृङर्थः**—क्रियाया अनिष्पत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्त्वञ्चेति '**लिङ्निमित्ते लृङ्क्रियातिपत्तौ**[4]' इति सूत्रात्। यथा—'**सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्**', '**वह्निश्चेत्प्राज्वलिष्यत्तर्हि ओदनमपक्ष्यत्**' इत्यादौ प्रसिद्धत्वादेष्वेवार्थेषु संक्षेपतो लकाराणां निर्देशः। अर्थान्तरेऽपि '**लट् स्मे**[5]', '**वर्तमानसामीप्ये वर्तमानवद्वा**[6]' इत्यादिना विधानं दृश्यते, तत्तु शरीरविस्तारभयान्न चर्चितमिति शम्।

● • ●

---

१. अष्टा० ३।३।१५६। २. अष्टा० ३।२।८४। ३. तदेव—३।२।११०।
४. तदेव—३।१।१३९। ५. तदेव—३।२।११८। ६. तदेव—३।३।१३१।

# आदिकाव्यरामायणे धातूनां पदव्यत्ययसम्बन्ध्य-नियमितता

डॉ० देसराजशर्मा
प्रवक्ता, संस्कृतविभागे
ठाकुरकेशोदासमहाविद्यालयस्य, ढलियारा (कांगड़ा) हि० प्र०

❋ ❋ ❋

पाणिनिना अष्टाध्याय्यां धातूनां पदव्यवस्था कृता। यस्य धातोरनुदात्तस्वरः "इत्" भवति, यो धातुश्च ङिद् भवति, तेन सहात्मनेपदप्रयोगो भवति[1]। अनेनैव प्रकारेण यस्य धातोः स्वरितस्वर इत्संज्ञको भवति, यो धातुश्च ञिद् भवति, तेन सह क्रियाफलस्य कर्तृगामिनि सत्यात्मनेपदमेव भवति[2]। अन्यधुतुभिः सह परस्मैपदमेव प्रयुज्यते[3]। आदिकाव्ये एतादृशान्यनेकानि पदव्यत्यययुक्तानि क्रियारूपाण्युपलभ्यन्ते। रामायणभाषाया विविधस्तराणां भाषावैज्ञानिकविश्लेषणं कुर्वाणेन डॉ० सत्यव्रतमहोदयेनापि संक्षेपेण पदव्यत्ययः प्रदर्शितः[4]। परमस्मिन् निबन्धे आदिकाव्यपदव्यत्ययस्य विस्तृतरूपेणाध्ययनं कृतमस्ति। येषु धातुषु पदव्यत्यय उपलभ्यते, तान् वयं षड्वर्गेषु विभक्तुं शक्नुमः—

(१) परस्मैपद्यात्मनेपद्यः।
(२) परस्मैपद्युभयपद्यः।
(३) आत्मनेपदी–परस्मैपद्यः।
(४) आत्मनेपद्युभयपद्यः।
(५) उभयपदी–परस्मैपद्यः।
(६) उभयपद्यात्मनेपद्यः।

एषां षड्वर्गधातूनां पदव्यत्ययसम्बन्धिविश्लेषणमधोलिखितप्रकारेणास्ति[5]।

---

१. 'अनुदात्तङित आत्मनेपदम्' (अष्टा० १।४।१००)

२. 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (अष्टा० १।३।७२)

३. 'शेषात् कर्तरि परस्मैपदम्' (अष्टा० १।३।७८)

४. Dr. Satyavrat : The Ramayana a Linguistic study. Page. 204–211.

५. संक्षेपतः प्रत्येकधातोः पदव्यत्ययस्यैकमेव रूपमुदाहृतम्। उद्धरणस्याग्रे रामायणकाण्ड-सर्गपद्यांकसंख्या लिखिता। प्रत्येकधातोः पदव्यत्ययाधिक्यं कोष्ठान्तर्गतसंख्याभिः निर्दिष्टम्।

**१. परस्मैपद्यात्मनेपद्यः—**

अस्मिन् वर्गे एतादृशा धातवः सन्निविष्टाः, ये पाणिनिसम्मतपरस्मैपद्यः; परं रामायणे आत्मनेपद्यः प्रयुक्ताः सन्ति। जृष्[१], धृष्[२], लिङ्ग्[३], सञ्ज्[४], सस्ज्[५], स्फुट्[६], हृष्[७] एते सप्तधातव ईदृशा एव सन्ति।

**२. परस्मैपद्युभयपद्यः—**

एतस्मिन् वर्गे एतादृशा एकनवतिधावतः सङ्गृहीताः सन्ति, ये वस्तुतः परस्मैपद्यः सन्ति; परं रामायणे ये उभयपदीरूपेण प्रयुक्ता दृश्यन्ते। अट्[८], अस्[९], अह्[१०], आप्[११], इण्[१२], इष्[१३], काङ्क्ष[१४], कृत[१५], कृष्[१६], क्रम्[१७], क्रीड्[१८], क्रुश्[१९], क्षुभ्[२०], खाद्[२१], ख्या[२२], गम्[२३], गै[२४], चर्[२५], चल्[२६], जि[२७], जीव्[२८], जागृ[२९], ज्ञा[३०], तप्[३१], (भ्वादि), तॄ[३२], त्यज्[३३], त्रस्[३४], दह्[३५], दा[३६], दुष्[३७], दृश्[३८], द्रु[३९], ध्यै[४०], नन्द्[४१], गम्[४२], नद्[४३], नश्[४४], निन्द्[४५], नृत्[४६], पत्[४७], पा[४८], प्रच्छ्[४९], प्लु[५०], फल्[५१], बन्ध्[५२], भज्[५३], भ[५४], भुज्[५५], भू[५६], भ्रम्[५७], भ्रंश्[५८], मस्ज्[५९], माग्[६०], या[६१], रक्ष्[६२],

---

१. ६।४८।१७। २. ७।२१।२६। ३. २।५८।२६। ४. ३।६।२०
५. २।१००।४।८। ६. ४।२०।१०। ७. २।५७।१३।३।
८. २।९०।१।१२। ९. ४।२०।२५।२। १०. ६।९९।३३।
११. १।११।११।४। १२. ५।१२।४२। १३. १।९।१२।१०।
१४. २।५।१८।७। १५. ७।२२।१३। १६. २।४२।८।३।
१७. २।६१।२४।१२। १८. २।६।१६।४। १९. १।५९।१८।२।
२०. ७।२२।१२। २१. ७।५४।५। २२. ४।३५।२।६।
२३. १।२८।१४।२६। २४. १।६१।९। २५. २।९७।२०।५।
२६. ६।१९।९। २७. ३।२२।२८।४। २८. ५।३८।१०।
२९. २।८०।४। ३०. २।७।२०।४४। ३१. १।१५।४।६।
३२. १।२२।१६।४। ३३. ४।६६।४३। ३४. ६।४९।१६।
३५. ३।६२।६। ३६. १।२।७। ३७. ६।११।५१।
३८. १।२२।५।६३। ३९. ४।१२।२२।१०। ४०. २।४।३३।
४१. १।३२।२६।२। ४२. ३।५३।३४। ४३. ३।२४।४।
४४. ३।४८।२४।३। ४५. ७।६४।१५। ४६. ७।४२।२०।
४७. ३।४५।८। ४८. ४।६०।६।४। ४९. १।५१।४।७।
५०. १।१६।१५।१६। ५१. ६।९९।२९। ५२. ३।४३।३३।
५३. ६।८।१०। ५४. ३।४४।२८। ५५. २।९६।१०।१८।
५६. १।२१।१५।५। ५७. ३।५८।३३।२। ५८. ६।८३।३४।
५९. ३।१९।२१। ६०. २।९३।३३।४। ६१. १।३०।६।४।
६२. १।६०।८।९।

राध्[१], रुद्[२], रुह्[3], लप्[४], लल्[५], वच्[६], वद्[७], वर्ध्[८], वल्[९], वस्[१०], विद्[११], विश्[१२], वृष्[१३], व्यध्[१४], व्रज्[१५], शंस्[१६], शक्[१७], शम्[१८], शुच्[१९], श्रम्[२०], श्रु[२१], सद्[२२], साध्[२३], सृज्[२४], सृप्[२५], स्था[२६], स्ना[२७], स्पृश्[२८], स्मृ[२९], स्वप्[३०], स्फुर्[31], हन्[32], (भ्वादि), हन्[33] (अदादि), हा[३४], हु[३५]—धातव एतादृशाः सन्ति।

**३. आत्मनेपदी-परस्मैपद्यः—**

अस्मिन् वर्गे ते धातवः सन्ति, ये वस्तुत आत्मनेपद्यः; परमादिकाव्ये एते परस्मैपद्य एव प्रयुक्ता उपलभ्यन्ते। इमे त्रयोदशधातवोऽधोलिखिताः सन्ति— आस्[३६], ऊह्,[३७] गर्व (चुरादि),[३८] गुप्,[३९] तर्ज्,[४०] तुण्ड्,[४१] त्रै,[४२] ध्वंस्,[४३] बह्,[४४] यक्ष्,[४५] वश्च,[४६] वाश् (भ्वादि),[४७] शम् (चुरादि)[४८]।

**४. आत्मनेपद्युभयपद्यः—**

एतस्मिन् वर्गे ईदृशा धातवो वर्गीकृताः सन्ति, ये पाणिनिना आत्मनेपद्यो मताः, परं रामायणे ते उभयपद्यः प्रयुक्ताः सन्ति। अधोलिखितेषु सप्तपञ्चाशद् धातुषू-परोक्तप्रकारस्य पदव्यत्ययो दृश्यते:—

---

१. ७।९२।४। २. ५।५८.९।
३. १।६९।८।११। ४. ६।८२।२५। ५. ५।१८।२३।२।
६. १।५७।१८।८। ७. ४।४९।३२।४। ८. ३।६३।११।
९. ६।२२।१३। १०. १।२२।८।६। ११. १।५६।५।३।
१२. १।९।३०।१२। १३. १।२४।१७।४। १४. ५।५५।१६।२।
१५. ३।६९।३४।३। १६. ३।५८।१३।२। १७. ४।११।४८।२।
१८. २।१०६।२०। १९. ४।१८।४६।२। २०. ५।१।७८।२।
२१. २।६।२७।३०। २२. ६।७।१०। २३. ७।७७।१६।
२४. १।१६।२।८। २५. १।४२।७।३। २६. ३।३१।९।४३।
२७. २।१६।४२। २८. ३।४३।३४। २९. ५।६३।२१।३।
३०. ३।२९।७।३। ३१. ३।५७।४।१९। ३२. १।४४।६६।८।
३३. ५।४३।१२। ३४. १।१२।१६।६। ३५. ५।८।९३।
३६. ४।५।१५।३। ३७. २।५५।२०। ३८. २।९।३८
३९. २।६।६३।१७। ४०. ५।२०।३६।२। ४१. ५।३६।१६।
४२. २।९९।१०।७। ४३. ६।२०।१२।२। ४४. ४।२३।१७।
४५. ७।४।१२।२। ४६. ५।४३।९।२। ४७. ६।२६।२९।२।
४८. ६।३६।१९।२।

अय्,[१] अर्थ,[२] आस्,[३] ईक्ष्,[४] ईह्,[५] एष्,[६] कत्थ,[७] कम्,[८] काश्,[९] क्षम्,[१०] गर्ह्,[११] चक्ष्[१२] चेष्ट्,[१३] च्यु,[१४] तप्, (दिवादि),[१५] त्रप्,[१६] त्रै,[१७] त्वर,[१८] दिव,[१९] पद्,[२०] प्लु,[२१] बुध्,[२२] भर्त्स,[२३] भाष्,[२४] भास्,[२५] भ्राज्,[२६] मन्त्र,[२७] मन्,[२८] मुद्,[२९] मृ,[३०] मृग्,[३१] यत्,[३२] युद्ध,[३३] रभ्,[३४] रुच्,[३५] रुध्,[३६] लभ्,[३७] लम्ब,[३८] लस्ज्,[३९] ली,[४०] वन्द्,[४१] वाश्, (दिवादि)[४२] विज्,[४३] विद् (रुधादि),[४४] विद् (चुरादि),[४५] वृत्,[४६] वृध्,[४७] वेप्,[४८] वेष्ट्,[४९] व्यथ्,[५०] शस्,[५१] शी,[५२] सह,[५३] सेव्,[५४] स्पन्द,[५५] स्मि,[५६] स्वञ्ज्[५७]।

**५. उभयपदी-परस्मैपद्यः—**

अस्य वर्गस्यान्तर्गतं ते धातव आयान्ति, ये वस्तुत उभयपद्यः सन्ति; परमादिकाव्य एते केवलं परस्मैपद्य एव प्रयुक्ता दृश्यन्ते। अद्,[५८] कृत्,[५९] क्षिप्,[६०] क्षुद्,[६१] खन्,[६२]

---

१. ६।४०।५ । २. २।१०।२२।२ ।
३. १।२९।६।३ । ४. ३।४८।९ । ५. ७।३४।१८ ।
६. ३।६३।१४ । ७. ६।७१।२५ । ८. २।४०।११।४ ।
९. २।११।१७ । १०. ४।१८.५७।२ । ११. ४।१४।११ ।
१२. ६।८०।१।२ । १३. ६।६१।२० । १४. २।६४।५ ।
१५. २।४०।१०।४ । १६. २।५१।२६ । १७. ३।१७।११ ।
१८. १।४७।२२।१९ । १९. २।३५।२८ । २०. १।६०।२।१२
२१. ४।२।११।१६ । २२. २।९।२९ । २३. ४।१६।१।५
२४. ४।३।६५।३ । २५. २।११।८ । २६. २।५९।११।६ ।
२७. १।३२।१०।१६ । २८. २।१०।१७।२ । २९. १।१।६८।८ ।
३०. ७।२८।४१ । ३१. ७।२९।२६ । ३२. ४।२१।१५ ।
३३. ३।२६।६।३ । ३४. १।१२।३४।३ । ३५. ५।१३।२० ।
३६. ३।६४।११ । ३७. ३।५२।२३।७ । ३८. ६।२।१८ ।
३९. ७।२६।४३ । ४०. ६।१०६।३३ । ४१. ७।३३।८ ।
४२. ७।६।५८।३ । ४३. २।६०।८।३ । ४४. २।४६।७।४ ।
४५. १।१२।२७।५६ । ४६. १।३९।१०।८ । ४७. ७।११३।२ ।
४८. ४।३०।४१।२ । ४९. ५।२४।२।२ । ५०. ६।८०।३६।२ ।
५१. ५।३५।१४।२ । ५२. ६।४९।२३।२ । ५३. २।५५।३।१५ ।
५४. २।३९।९।३ । ५५. २।१२।९ । ५६. २।४।४२।२ ।
५७. २।६७।२।८ । ५८. ६।६०।४३ । ५९. २।५२।९।७ ।
६०. ६।४६।२२।७ । ६१. २।७४।१० । ६२. १।३८।१५।७ ।

गर्ह्,[१] घट्ट्,[२] घुष्,[३] चर् (चुरादि),[४] चूर्ण्,[५] छद्,[६] ज्ञा (चुरादि),[७] तड्,[८] तन्,[९] तप् (चुरादि),[१०] तुद्,[११] तुल्,[१२] द्विष्,[१३] धू (चुरादि),[१४] धृष्,[१५] नुद्,[१६] पच्,[१७] पट्,[१८] पीड्,[१९] पुथ्,[२०] प्रीञ्,[२१] बर्ह् (चुरादि),[२२] भू (चुरादि),[२३] भूष्,[२४] भृ,[२५] मण्ड्,[२६] मूल्,[२७] मृज्,[२८] रुध्,[२९] लस्,[३०] लिह्,[३१] लुप्,[३२] वप्,[३३] वास्,[३४] वृ,[३५] वृज्,[३६] वर्ण्,[३७] श्राण्,[३८] सूच्,[३९] स्तु,[४०], स्फुट्,[४१] ह्वल्,[४२]—एते अष्टचत्वारिंशद् धातव ईदृशा एव सन्ति।

## ६. उभयपद्यात्मनेपद्यः—

अस्मिन् वर्गे एतादृशा धातवः परिगणिताः, ये पाणिनिमतानुसारेणोभयपद्य एव प्रयुज्यन्ते; परं रामायणे ये आत्मनेपद्यः प्रयुक्ता उपलभ्यन्ते। कल्,[४३] कृप्,[४४] छन्द्,[४५] दण्ड्,[४६] दिह्,[४७] रञ्ज् (दिवादि),[४८] वृञ्,[४९] सभाज्[५०]—इमे अष्टौ धातव एतादृशा सन्ति। न केवलं प्रपत्रादिनिर्दिष्टसूत्राण्येव पदविधानं कुर्वन्ति; परमष्टाध्याय्यामन्यान्यपि सूत्राणि सन्ति, ये धातुभिः सह विविधोपसर्गयोगे विशिष्टार्थे च धातूनां पदविधानं कुर्वन्ति। एतादृशानि सूत्राणि भट्टोजिदीक्षितमहोदयेन सिद्धान्त-

---

१. ३।४८।७।२। २. ५।१०।१६। ३. ४।५५।१७।६। ४. ३।४१।३२।८।
५. ६।५७।४७। ६. २।८७।४।१४। ७. ६।५२।१।२।
८. ५।६०।७।१८। ९. ६।६७।२०। १०. २।७९।१७।१४।
११. २।३२।११।२। १२. ७।१६।२५।२। १३. १।१४।८।३।
१४. ६।५५।८९।३। १५. ३।९।११।८। १६. १।१३।३०।८।
१७. २।४३।३।२। १८. ३।३२।१७।९। १९. १।६५।२२।१३।
२०. २।४९।३४।४। २१. २।४२।१७।३। २२. ६।७८।३।
२३. १।१५।९।२। २४. २।३४।१७।३। २५. २।२८।७।८।
२६. ६।३८।१५। २७. ४।२६।१२। २८. ४।७।१४।
२९. १।६५।२१।१९। ३०. ७।२।११। ३१. ३।४५।३६।३।
३२. ६।४८।४४। ३३. ४।६११९। ३४. २।९५।४।२।
३५. २।४०।३०।४। ३६. १।४३।७।८। ३७. ४।५३।६।
३८. ४।२४।२५। ३९. ५।२५।३७। ४०. १।११।२०।१५।
४१. २।१०३।१३।३। ४२. ५।८।५०।६। ४३. २।१११।१।३।
४४. ४।४५।३।२। ४५. २।२०।१३। ४६. २।११०।१४।
४७. ४।१८।२५। ४८. ५।१३।३६। ४९. ३।१२।१।२।
५०. १।३२।३।१०।

कौमुद्या आत्मनेपदपरस्मैपदप्रकरणे सङ्कलितानि सन्ति[१]। आदिकाव्ये एतादृशान्यनेकानि क्रियारूपाण्युपलभ्यन्ते, यत्रात्मनेपदपरस्मैपदयोः विधाने सत्यपि एतानि सूत्राण्यतिक्रमितानि। रामायणप्रयुक्तानां क्रम्, जि, प्रच्छ्, युज्, विश्, स्था, ह्वे, ज्ञा, श्रु-धातूनां कतिपयक्रियारूपाणीदृशान्येव सन्ति।

क्रम् धातुः परस्मैपद्यस्ति; परं प्रपरोपसर्गाभ्यां सहायमात्मनेपदीभवति[२]। इतो विपरीतं रामायणस्य उपाक्रमत्[३], उपाक्रामन्[४], समुपाक्रामन्[५], उपचक्राम[६], यमुपक्रमम्[७], उपचक्रमुः[८], प्रचक्रमुः[९], रूपेषु क्रम् धातुः परस्मैपद एव प्रयुक्तो दृश्यते।

परस्मैपदी सत्यपि जिधातुः वि-परोपसर्गाभ्यां सहात्मनेपद्येव प्रयुज्यते[१०], परं रामायणस्य पराजयेत्[११], विजेष्यति,[१२] विजेष्यसि[१३], रूपेषूपरोक्तोपसर्गयोगे सत्यपि ज़िधातुः परस्मैपद्येव प्रयुक्तोऽस्ति।

आङुपसर्गेण सह नु-प्रच्छ्धातुप्रयोग आत्मनेपदे भवति[१४]; परमादिकाव्यस्य आपृच्छामः[१५] रूपे अस्य नियमस्यातिक्रमणं विद्यते।

वार्तिककारकात्यायनानुसारेण-प्र-उप-स्वरादि-स्वरान्तोपसर्गाणां योगे युज्धातुरात्मनेपदी भवति[१६]; परमितो विपरीतं रामायणस्य प्रयुञ्जीयात्[१७], प्रयुयोज[१८], प्रयोक्ष्यामि[१९], अनुयुञ्जेयुः[२०], नियोक्ष्यति[२१] विनियोक्ष्यति[२२] रूपेषु पदव्यत्यय उपलभ्यते। अनेनैव प्रकारेण न्युपसर्गपूर्वकं विश्धातुरात्मनेपदी भवति[२३]; परमादिकाव्यस्य न्यविशत् रूपे[२४] परस्मैपदमुपलभ्यते। समव-प्रव्युपसर्गाणां योगे स्थाधातुरात्मनेपदमेव भवति[२५]; परमादिकाव्यस्य अवतिष्ठन्ति[२६], अवतिष्ठत्[२७], समातिष्ठत्[२८], व्यतिष्ठत्[२९],

---

१. भट्टोजिदीक्षितः, वैयाकरणसिद्धान्तकौमुदी-तृतीयो भागः, पृ० ५४८-५८८।

२. 'प्रोपाभ्यां समर्थाभ्याम्' (अष्टा० १।३।४२)।

३. ७।२२।३। ४. ७।७६।१०। ५. ६।४८।३७।

६. १।३५।२४, ४।३।२, ७।६८।१७। ७. ५।५७।१, ७।७४।५।

८. ५।६३।२, ६।८०।२१, ७।२।१४, ७।३६।६१। ९. २।३१।९, ६।९४।१६, ७।९।३०।

१०. 'वि-पराभ्यां जेः' (अष्टा० १।३।१९)। ११. ३।५७।१३।

१२. ५।१।१३३। १३. ६।४८।७१।

१४. 'आङि नुप्रच्छ्योः' सिद्धान्तकौमुदीवार्तिकम् (९०९) (अष्टा० ६।१।४२)।

१५. ३।७।५, ७।३७।३१।

१६. क. 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' (अष्टा० १।३।६४)।
ख. 'स्वराद्यन्तोपसर्गा०'(अष्टा०वा० १।३।६४)।

१७. १।४।२। १८. २।२९।१०। १९. ६।६७।३६।

२०. ४।५३।१०। २१. १।१।७५। २२. ३।२०।३१।

२३. 'नेर्विशः' (अष्टा० १।३।१७)। २४. २।९।१६।

२५. 'समवप्रविभ्यः स्थः' अष्टा० १।३।२२)। २६. ६।७८।४३।

२७. ६।५४।१६। २८. ७।७५।१०। २९. ७।१४।२६।

व्यतिष्ठन्[1], अवतस्थतुः[2], प्रतस्थतुः[3], प्रतस्थुः[4], संप्रतस्थुः[5], समुत्स्थास्यन्ति[6] रूपेषू-परोक्तनियमो नानुसृतः।

कात्यायनानुसारेण आङुपसर्गयोगे स्थाधातुः प्रतिज्ञार्थे आत्मनेपदं भवति[7]; परं रामायणस्य आस्थास्ये[8] रूपे प्रतिज्ञार्थे अविद्यमानेऽपि आत्मनेपदं प्रयुक्तमस्ति। उदुपसर्गयोगे स्थाधातुरुत्कण्ठार्थे आत्मपेपदं भवति[9]; परमादिकाव्यस्य उत्तिष्ठते[10], उदतिष्ठत[11] रूपयोः उत्कण्ठार्थे अवर्तमानेऽपि आत्मनेपदप्रयोगमनियमितमस्ति। इतो विपरीतं उत्तिष्ठेत्[12] रूपे उत्कण्ठार्थे विद्यमानेऽपि परस्मैपदं प्रयुक्तमस्ति। उपोपसर्गयोगे स्थाधातुः देवपूजा-संगतिकरण-मित्रकरण-मार्गार्थेष्वात्मनेपदे प्रयुज्यते। एवमकर्मक-स्थाधातुरप्यात्मनेपदमेव भवति[13]। रामायणस्य उपतिष्ठते[14], उपतिष्ठेत[15], उपतिष्ठेताम्[16], उपातिष्ठत[17], उपतस्थे[18], उपतस्थिरे[19], उपस्थास्यते[20] रूपेषूपरोक्तार्थानाम-

१. ४।१२।१४, ४।१२। २. १।२२।८। ३. ६।१८।१९।
४. ३।२२।३२, ६।५७।३२। ५. ७।५४।७। ६. ६।१०८।१०।
७. 'आङ् प्रतिज्ञायामुपसंख्यानम्' (वार्तिकम्—९१२, पाणिनिः—१।३।२२)
८. यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि।
विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ (वा० रा० २।२६।१९)
९. 'उदोऽनूर्ध्वकर्मणि'। ईहायामेव (वार्तिकम्—पाणिनिः १।३।२४)
१०. चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन्।
ज्योत्स्नावितानेन वितत्य लोकानुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥ (वा० रा० ५।२।३५)
११. स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम्।
उदतिष्ठत दुर्धर्षः स कर्मण्यनुष्ठिते ॥ (वा० रा० ६।७३।१३)
१२. अश्वयुक्तो रथो मह्यमुपतिष्ठेत् तु विभावसोः।
तत्स्थस्यामरता स्यान्मे एष मे निश्चितो वरः ॥ (वा० रा० ७।३०।१३)
१४. 'उपान्मन्त्रकरणे'। उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्। अकर्मकाच्च (वार्तिकम्—९१४, पाणिनिः १।३।२५)
१५. परीवारः सहस्राणां सहस्रमुपतिष्ठते। (वा० रा० ६।२८।१८)
१६. किं नु सीताऽथ वैदेही मैथिली जनकात्मजा।
उपतिष्ठेत विवशा रावणेन हृता बलात् ॥ (वा० रा० ५।११।६)
१७. मयाद् यस्योपतिष्ठेताम् निष्पन्दो सागरानिलौ। (वा० रा० ७।३३।१५)
१८. ततस्तत्र मुहूर्तेन नद्यः पायसकर्दमाः।
उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् ॥ (वा० रा० २।८५।३८)
१९. वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः। (वा० रा० २।४४।९, ३।४४।८, ६।४४,८, ७।१०।४१)
२०. हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे। (वा० रा० ४।२।८, ४।३५।१, ५।५५।१९, ६।५७।७२, ६।७८।९१)

भावेऽपि आत्मनेपदं प्रयुक्तमस्ति। इतो विपरीतं उपतिष्ठन्ति[1] रूपे पूजार्थं विद्यते, तथापि समुचितपदप्रयोगं न कृतम्। उपोपसर्गेण सह वाल्मीकिना न सर्वत्र पद-व्यत्यय एवोपस्थापितः; परं पूजार्थयुक्तयोः उपतस्थे[2], उपतिष्ठन्ते[3] रूपयोरात्मनेपद-मपि[4] प्रयुक्तम्।

मूलस्थाधातुना साकमपि प्रत्याशयप्राक्स्थ्यार्थे आत्मनेपदं भवति[5], परमादि-कविना तिष्ठते[6], तिष्ठन्ते[7], तिष्ठस्व[8], तिष्ठध्वम्[9], अतिष्ठत[10], तस्थिरे,[11] रूपेषूपरोक्तार्थ-स्याविद्यमानेऽपि आत्मनेपदं प्रयुक्तम्।

उभयपदी सत्यपि आङुपसर्गपूर्वकत्वे धातुः स्पर्धार्थे आत्मनेपद्येव[12]; परं रामायणस्य आह्वयति[13], आह्वय[14], आह्वयत्[15], समाह्वयति[16], समाह्वयति[17], समुदाह्वयत्[18], आह्वयामास[19] रूपेषु स्पर्धार्थे वर्तमानोऽप्ययं धातुः परस्मैपदे प्रयुक्तोऽस्ति।

ज्ञा-श्रु-स्मृ-दृश्-धातुभिः सह यदा सन् प्रत्ययस्य योगो भवति, तदा एते धातव आत्मनेपदे एव प्रयुज्यन्ते[20]; परमादिकाव्यस्य जिज्ञासन्तौ[21], शुश्रूषति[22], शुश्रूष[23], शुश्रूषते[24], शुश्रूषेयम्[25] रूपेषु सन् प्रत्यययोगे सत्यपि ज्ञा-श्रु-धातू परस्मैपदे प्रयुक्तौ दृश्येते।

अतः स्पष्टं भवति यद् रामायणे पाणिनिसम्मताः सप्तपरस्मैपदीधातव आत्मने-पद्यः, नवतिपरस्मैपदीधातव आत्मनेपदीधातवः, त्रयोदशात्मनेपदीधातवः परस्मैपद्यः,

---

१. मामुपस्थास्यते सीता सर्वाभरणभूषिता। (वा० रा० ६।३७।१९)
२. आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः। (वा० रा० ६।३७।१०)
३. उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् (वा० रा० ५।५१।२३)
४. आदित्यमुपतिष्ठन्ते नियमादूर्ध्ववाहवः (वा० रा० २।८९।७)
५. 'प्रकाशनस्थेयाख्ययोश्च' (पाणिनिः १।३।२३)। ६. ३।३१।१९, ७।१७।१२।
७. १।२०।१७। ८. ३।५१।१९, ६।४९।३३, ७।३४।१९।
९. ६।८८।४३। १०. ७।६०।३।
११. ७।३१।३५। १२. 'स्पर्धायामाङः' (पाणिनिः–१।३।३१)।
१३. ६।१०।१५, ७७, ७।३४।३। १४. ४।१२।१३।
१५. २।८५।१०। १६. ४।११।१३। १७. ७।५५।२७।
१८. ७।२३।१। १९. ७।६१।११।
२०. 'ज्ञाश्रुस्मृदृशां सनः' (पाणिनिः–१।३।५७)। २१. ४।६०।४। २२. ७।७।१४।
२३. २।१८।१९, ६।१०७।२९। २४. २।१६।५२। २५. ३।१०।२२।

सप्तपञ्चाशदात्मनेपदीधातव उभयपद्यः, अष्टचत्वारिंशदुभयपदीधातवः परस्मैपद्यः, अष्टोभयपद्यधातव आत्मनेपद्यः प्रयुक्ताः सन्ति ।

अनेनाध्ययनेन वयं निर्णेतुं पारयामो यद् रामायणकालस्य भाषायामात्मनेपदात् परस्मैपदस्य प्रयोगमधिकलोकप्रियं भवितुमारभत, आत्मनेपदप्रयोगं चोनं भवितुमारभत । संस्कृतानन्तरं पालि-प्राकृतभाषयोरपि आत्मनेपदप्रयोगे न्यूनता विद्यते, परमैपदप्रयोगे चाधिकता वर्तते । पी० डी० गुणेमहोदयकथनेनाप्यस्य तथ्यस्य स्पष्टता भवति[१] ।

भाववाच्ये कर्मवाच्ये च सदैवात्मनेपदप्रत्यया एव प्रयुज्यन्ते[२]; परमादिकाव्यस्य संभ्रियन्तु[३], ह्रीयेत्[४], छियेयम्[५], रूपेषु परस्मैपदप्रत्यायानां प्रयोगोऽप्यात्मनेपदस्य क्षीयमाणप्रवृत्ति प्रकटयति ।

अदिकाव्ये शतृप्रत्ययस्य(१३३७) कृदन्तक्रियारूपाण्युपलभ्यन्ते; परं शानच्-प्रत्ययस्य (४९५) क्रियारूपाण्येव प्राप्यन्ते । अतः सुनिश्चितं भवति यद् वर्तमान-कालिकप्रत्ययप्रयोग आदिकाव्यरामायणे शतृप्रत्यस्य बहुलता वर्तते । शतृप्रत्यय-प्रयोगाधिक्यमप्यादिकाव्ये परस्मैपदप्रयोगस्य वृद्धिमाप्नुवन्तीं प्रवृत्ति परिलक्षयति[६] ।

● ◦ ●

---

१. Although according to Pali Grammaerian like KACCAYANA there are two voices, the Prassapada and attanepada, the Pali literature favours the former, the Prakrits go a step further and drop the Atmanepada Altogether.
(P.D. Gune : An Introduction to Comparative Philology Page-213.)

२. 'भावकर्मणोः' (पाणिनिः—१।३।१३) ।

३. गुरूणां वचनाच्छीघ्रं संभारा संभ्रियन्तु मे ।
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ (वा० रा० १।११।१४) ।

४. कामं त्वमपि पर्याप्तो निहन्तुं सर्वराक्षसान् ।
राघवस्य यशो ह्रीयेत्···· ··· ···· ···· ॥ (वा० रा० ५।३५।'९७) ।

५. (क) परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याऽहं राजभृतैर्दीना ह्रियेयं भृशदुःखिता ॥ (वा० रा० १।१३।७) ।
(ख) हन्तेदानीं सकामा तु कैकेयी बान्धवैः सह ।
ह्रियेयं धर्मकामस्य धर्मपत्नी यशस्विनः ॥ (वा० रा० ३।४७।२८) ।

६. This study is based on the Critical edition of Valmikiramayana bublished from Oriental Institute Baroda.

# व्याकरणशास्त्रे एकवाक्यता

श्रीकोरडसुब्रह्मण्यम्

अनुसन्धानच्छात्रः, संस्कृतविभागे,

आन्ध्रविश्वविद्यालयस्य, वाल्तेयर ।

❀ ❀ ❀

प्रायेण शास्त्रेषु, दर्शनेषु च उपदेश एकवाक्यताम् अधिकृत्यैव क्रियते । पुनरुक्तिं विना लाघवेनोपदेशरूपप्रयोजनमेवात्र हेतुः । तदुक्तं कुमारिलभट्टपादेन—

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह ।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते[1] ।। इति ।

अत्र शास्त्रशब्दस्य सूत्रमित्यर्थः । अन्यप्रदेशगतसूत्रैस्सह एकवाक्यतया सर्वाणि सूत्राणि उपदेशं प्रकुर्वन्तीति श्लोकार्थः ।

व्याकरणशास्त्रे एकवाक्यता कुमारिलेनेत्थं प्रतिपादिता 'इह चैतावता प्रत्ययविधिः परिपूर्यते । 'प्रत्ययः', 'परश्च', 'आद्युदात्तश्च', 'अनुदात्तौ सुप्पितौ', 'धातोः', 'तत्रोपपदं सप्तमीस्थम्', 'कृदतिङ्', 'वाऽसरूपोऽस्त्रियाम्', 'वर्तमाने लट्', 'कर्तरि कृत्', 'लः कर्मणि च भावे चाकर्मकेभ्यः', 'लस्य तिबादयः', 'अनुदात्तङित आत्मनेपदम्', 'शेषात् कर्तरि परस्मैपदम्', 'युष्मदस्मदुपपदादिषु मध्यमादयः', 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः', 'तान्येकवचनद्विवचनबहुवचनान्येकशः', 'बहुषु बहुवचनम्', 'द्व्येकयोर्द्विवचनैकवचने' इति । पराणि च संज्ञापरिभाषादिरूपेण लोपागमवर्णविकारादिशास्त्राणि सर्वाण्येकं वाक्यम्[2]' इति ।

लाघवेनोपदेशार्थमेव पाणिनिना एकवाक्यता स्वीकृता अष्टाध्याय्याम् । स्वोपज्ञं गुणवृद्ध्यादिपदानि परिकल्प्य पाणिनिः पारिभाषिक्या भाषया लौकिकीं भाषां साधितवान् । इदं च 'स्वं रूपं शब्दस्याशब्दसंज्ञा[3]' इति सूत्रेण स्पष्टीभवति । तथाहि.... लोके शब्देनार्थो गृह्यते, अत्र तु शब्दशास्त्रे शब्दस्य स्वरूपमेव ग्राह्यम्, न त्वर्थः । एतेन 'अग्नेर्ढक्[4]' इत्यादिसूत्रेषु 'अग्निशब्देनाकारादिवर्णक्रमविशिष्टः शब्द एव ग्राह्यः, तस्मादेव ढगित्यादिरूपेण वाक्यार्थः । तेन चाग्नेयादिरूपसिद्धिः । ये तु गुणवृद्ध्यादिसंज्ञाशब्दाः, तेषां विषये तु अर्थ एव ग्राह्यः, न तु शब्दः ।

---

१. तन्त्रवार्तिकम्–३।४ । २. तदेव–३।४ । ३. अष्टा० १।१।६७ ।
४. अष्टा० ४।२।३३ ।

इदं च सूत्रं सर्वस्यापि शास्त्रस्य अत्यन्तोपयोगि, तेषु तेषु सूत्रेषु गत्वा सूत्रवाक्यैरेकवाक्यतां प्राप्य तत्तत्संज्ञासंज्ञिशब्दानामर्थबोधं जनयन् पाणिनेः पारिभाषिकीं भाषां स्फुटतरं बोधयति।

अष्टाध्याय्यां सूत्रं षड्विधं पश्यामः। संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारभेदात्। सर्वथा लाघवमेवैतावतां सूत्राणां निर्माणे मुख्यो हेतुः। विशिष्य संज्ञापरिभाषाधिकारसूत्राणां पौनरुक्त्यं विना विधिसूत्रवाक्यैस्सहान्वयेनैकवाक्यतां परिकल्प्य पाणिनिः स्वोपज्ञां प्रदर्शितवान्। सूत्ररचनायां च पाणिनिः प्रायशः प्राधान्यमनुसृत्य संज्ञा-परिभाषाधिकार-विधि-नियमातिदेशसूत्राणि यथाक्रमं विरचितवान्। विधिशास्त्रं च मुख्यम्, कार्यसाधकत्वात्। विधिसूत्रगतसंज्ञापदज्ञानार्थं तत्तच्छन्दशास्त्रीयनियमार्थं चोपयुज्यन्ते इति कृत्वा संज्ञापरिभाषासूत्राणां गुणसूत्राणीति व्यवहारः।

गुणसूत्रवाक्यानां विधिसूत्रवाक्यैस्सह एकवाक्यतया महावाक्यार्थबोधेन सम्पूर्णार्थावगतिः, तद्द्वारा लक्ष्यसंस्कारश्च जायते। एतेन न केवलगुणसूत्रवाक्यानाम्, न वा केवलविधिसूत्रवाक्यानां सम्पूर्णार्थबोधकत्वं कार्यसाधकत्वं वेति सिद्ध्यति। केवलगुणविधिसूत्रवाक्यानामवान्तरवाक्यत्वात्, वाक्ये पदानामिव महावाक्यगतावान्तरवाक्यानां सम्पूर्णार्थबोधकत्वाभावात्।

एवं च गुणसूत्रवाक्यानां विधिसूत्रवाक्यैस्सह परस्पराकाङ्क्षावशेन एकवाक्यतापरिकल्पिता सूत्रकृता। तत्र पक्षद्वयमुक्तं भाष्यकृता। यथोद्देशपक्षः, कार्यकालपक्षश्चेति[1]।

पाणिनिना यस्मिन्देशे गुणसूत्राण्युच्चारितानि, तस्मिन्नेव देशे सूत्रार्थबोधानन्तरम्, तत्तत्संज्ञापरिभाषासंबद्धविधिसूत्राणामत्रोपस्थितिः। ततश्च प्रत्येकं विधिसूत्रवाक्यैः गुणसूत्रवाक्यानामेकवाक्यता। तद्यथा—'वृद्धिरादैच्[2]' इति वृद्धिसंज्ञासूत्रम्। आदैचो वृद्धिसंज्ञा इति सूत्रार्थः। अष्टाध्याय्यां यानि विधिसूत्राणि वृद्धिपदाङ्कितानि, तानि सर्वाण्यपि वृद्धिपदार्थज्ञानरूपसंस्काराय इदं सूत्रं प्रत्यागच्छन्ति। तथाहि—'वृद्धिरेचि[3]' इति वृद्धिविधायकं सूत्रम्। 'संहितायाम्[4]' 'एकः पूर्वपरयोः[5]' इति सूत्रे अधिकृते। 'आत्[6]' इति पदमनुवर्तते। 'संहितायामादेचि परे पूर्वपरयोरेका वृद्धिः स्यात्' इति विधिसूत्रवाक्यं सम्पन्नम्। उक्तवाक्यगतवृद्धिपदज्ञानं च 'वृद्धिरादैच्' इति

---

१. महाभा० १।१।११।
२. अष्टा० १।१।१।
३. तदेव–६।१।८८।
४. तदेव–६।१।७२।
५. तदेव–६।१।८४।
६. तदेव–६।१।८९।

विधिसूत्रवाक्येन संज्ञासूत्रस्थल एव जायते। तस्माद् विधिसूत्रवाक्यं संज्ञासूत्रस्थलं नीयते वृद्धिपदसंस्काराय। तत्र च विधिसूत्रवाक्यस्य 'आदैच्' इति पदेन सह पदैकवाक्यता। तथा च 'संहितायाम् आदेचि पूर्वपरयोः एको वृद्धिः आदेशः स्यात्' इति महावाक्यं सिद्धम्। ऐतेन च 'गङ्गौघः' इत्यादिषु वृद्धिः।

परिभाषाविषयेऽप्येवमेव। तथा हि **'रायो हलि'**[1] इति विधिसूत्रम्। **'अष्टन आ विभक्तौ'**[2] इति सूत्रात् 'आ विभक्तौ' इति पदे अनुवृत्ते। हलि विभक्तौ रैशब्दस्य आकारः स्यादिति विधिसूत्रवाक्यं सिद्धम्। 'हलि' इति पदस्य सप्तम्यन्तस्य संस्कारार्थं विधिसूत्रम्, **'तस्मिन्निति निर्दिष्टे पूर्वस्य'**[3] इति परिभाषासूत्रप्रदेशं नीयते। सा च परिभाषा सप्तम्यन्तेन विधीयमानं कार्यं वर्णान्तराव्यवहितस्य 'पूर्वस्य' भवतीति सूचयति। तथा च तत्परिभाषार्थवाचकपूर्वस्येतिपदेन सह विधिसूत्रवाक्यस्य पदैकवाक्यार्थः सिद्धः। तेन च रैशब्दाद् हलि विभक्तौ परे पूर्वस्य आकार आदेशः स्यादिति महावाक्यार्थः सिद्धः। तेन च 'रैः' इत्यादिरूपसिद्धिः।

यथोद्देशपक्षे सपादसप्ताध्यायीस्थगुणसूत्राणामेव विधिसूत्रवाक्यैरेकवाक्यता, **'पूर्वत्रासिद्धम्'**[4] इति नियमात्। त्रिपादीस्थविधिसूत्राणां सपादसप्ताध्याय्यामसिद्धत्वात्।

कार्यकालमित्यस्य च कार्येण विधायकसूत्रेण काल्यते आकृष्यत इत्यर्थः। यानि यानि गुणसूत्राणि विधिसूत्रसंस्कारापेक्षितानि, तानि सर्वाण्यपि विधिसूत्रप्रदेशमानीयन्ते। ततश्च विधिसूत्रवाक्येन सह गुणसूत्रवाक्यानामेकवाक्यता। संज्ञासूत्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः; किन्तु विधिसूत्रवाक्येन सहैव।

अधिकारसूत्राणामपि प्रयोजनं लाघवमेव। तत्र कानिचन अधिकारसूत्राणि अत्यधिकेषु विधिसूत्रेषु गत्वा स्वेषां विश्वतोमुखत्वं स्पष्टीकुर्वन्ति। समासेषु महाविभाषाधिकारः **'पदस्य'**[5], **'अङ्गस्य'**[6] इत्यादीनि। एतान्यपि अधिकारसूत्राणि विधिसूत्रवाक्यैस्सहैकवाक्यतया कार्यसाधकोपयोगीनि।

निषेधसूत्रवाक्यानामपि विध्येकवाक्यतयैव वाक्यार्थबोधः। निषेधवाक्यानि च विधिवाक्यशेषभूतानि। तदुक्तं हरिणा—

> **नियमः प्रतिषेधश्च विधिशेषस्तथा सति।**
> **द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः**[7] ॥ इति।

---

१. अष्टा० ७।२।८५। २. तदेव—७।२।८४।
३. तदेव—१।१।६६। ४. तदेव—८।२।१।
५. तदेव—८।१।१६। ६. तदेव—६।४।१।
७. वा० प० २।३४९।

यथा सामान्यविशेषवाक्ययोरङ्गाङ्गिभावेनैकवाक्यता, तथा नियमविध्योः निषेध-विध्योश्च शेषशेषिभावेन एकवाक्यता सङ्गच्छते। द्वितीयाध्यायोक्तलुकः शेषत्वेन षाष्ठमलुकं जानन्तीति श्लोकतात्पर्यम्।

पूर्वमीमांसायां शेषशेषिभावमधिकृत्य साधिता विधिनिषेधयोरेकवाक्यता। स एवोपायोऽत्रापि स्वीक्रियते। तथाहि 'सुपो धातुप्रातिपदिकयोः'[1] इति सूत्रेण धातु-प्रातिपदिकावयवयोस्सुपोः लुग्विहितः। 'अलुगुत्तरपदे'[2] इति सूत्रेण उत्तरपदे परे सुपो लुङ् निषिद्धः। अत्र विधिसूत्रस्य निषेधसूत्रं शेषभूतम्। शेषशेषिभावेन चानयोरेक-वाक्यता। तथा च 'धातुप्रातिपदिकयोस्सुपो लुग्भवति, न तूत्तरपदे' इति महा-वाक्यार्थः सिद्ध्यति।

प्रथमतो निषेधवाक्यज्ञाने जाते तत एव विधिवाक्यानां प्रवृत्तिरुचिता इति प्रतिपादितं भाष्यकारैः। लोकन्यायश्चात्रोट्टङ्कितो वृद्धैः—'यो हि भुक्तवन्तं प्रति ब्रूयात् मा भुङ्क्था इति किं तेन कृतं स्यात्' इति। विधिसूत्रस्य प्रवृत्त्यनन्तरंनिषेधोऽनुचितः, निष्फलश्च, परं पूर्वमेवोचितः, सफलश्चेति तदाशयः।

नियमसूत्राणां च 'कृत्तद्धितसमासाश्च'[3] इत्यादीनां 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[4] इत्यादिविधिसूत्रापेक्षया शेषत्वमुक्तं भवति। तेन तयोरेकवाक्यता। तथा च 'धातुम्, प्रत्ययम्, प्रत्ययान्तञ्च वर्जयित्वाऽर्थवच्छब्दस्वरूपम्, कृत्तद्धित-समासाश्च प्रातिपदिकसंज्ञानि स्युः' इति महावाक्यार्थः सिद्ध्यति।

पस्पशाह्निके व्याकरणशास्त्रनिर्माणविचारणां कुर्वता भाष्यकारेण 'उत्सर्गाप-वादरूपेण लक्षणं कर्तव्यम्' इति सूचितम्। अयमभिप्रायः—सामान्यविशेषसूत्रयोः परस्पराकाङ्क्षावशाद् उत्सर्गसूत्रस्य सामान्यरूपस्य, अपवादसूत्रस्य विशेषरूपस्य च एकवाक्यता। सा च विधिनिषेधसूत्रयोरिव वर्तते। तथाहि—'कर्मण्यण्'[5] इति सूत्रेण कर्मण्युपपदे धातोरण् विहितः। 'कुम्भकारः' इत्यादिरूपसिद्धिः। 'आतोऽनुपसर्गे कः'[6] इति सूत्रेण आदन्ताद्धातोः कर्मण्युपपदे प्रत्ययो विहितः। 'गोदः' इत्युदाहरणम्। तथा च 'गोदः' इत्यादिरूपसिद्धये उक्तयोर्द्वयोरपि उत्सर्गापवादसूत्रयोरेकवाक्यता। 'आदन्ताद्धातोः कर्मण्युपपदे कः स्यात्, न त्वण्' इति महावाक्यार्थः सिद्ध्यति।

हरिणाऽप्युक्तम्—

> अनेकाख्यातयोगेऽपि वाक्यं न्यायापवादयोः।
> एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम्[7] ॥ इति।

---

१. अष्टा० २।४।७१। २. तदेव—६।३।१। ३. तदेव—१।२।४६।
४. तदेव—१।२।४५। ५. तदेव—३।२।१। ६. तदेव—३।२।३।
७. वा० प० २।३४८।

उत्सर्गापवादवाक्ययोर्भिन्नक्रियासम्बन्धेन भिन्नवाक्यत्वेऽपि एकवाक्यतैवेष्यते कैश्चिद्वैयाकरणैरिति भावः। सामान्यविशेषवाक्ययोः शेषशेषित्वं च तेनैवोक्तम्। तथा हि—

विशेषविधिनाऽर्थित्वाद्वाक्यशेषोऽनुमीयते।
विशेषवन्निवर्त्येऽर्थे तस्मात्तुल्यं व्यपेक्षणम्[1] ॥ इति।

सामान्यवाक्याकाङ्क्षया विशेषवाक्यस्य वाक्यशेषत्वं दृश्यते। तस्माद् विशेषवाक्य इव निषेधविषयेऽपि आकाङ्क्षा तुल्यैवेति तात्पर्यम्।

एवं च व्याकरणशास्त्रं एकवाक्यतां पुरस्कृत्यैव निर्मितम्। तत्र पदसाधुत्वनिर्णये यथोचितं सूत्राणामेकवाक्यता। परं भाषायाः संस्कारे सर्वेषां सूत्राणाम् एकवाक्यता इति वक्तुं पारयामः।

• • •

---

१. वा० प० २।३५१।

# शाब्दिकाभिमतस्थानपदार्थविमर्शः

डॉ० श्रीपतिरामत्रिपाठी
अध्यापकः, व्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

एतत् सर्वविदितमस्ति यद्वैयाकरणानां निकाये शब्दानां नित्यत्वं तदीयार्थानां तदीयसम्बन्धानाञ्च नित्यत्वमस्ति। तथा चोक्तम्–'सिद्धे शब्दार्थसम्बन्धे[1]', 'लोकतः प्रयुक्ते शास्त्रेण धर्मनियमः क्रियते' इत्यादि। अत्र सिद्धशब्दो नित्यार्थकः। शब्दा अपि नित्याः, तेषामर्थाश्च नित्याः। नित्यानां शब्दानां नित्यानामर्थानां सम्बन्धाश्च नित्याः। उक्तञ्च वाक्यपदीये ब्रह्मकाण्डे—'नित्या शब्दार्थसम्बन्धा समाम्नाता महर्षिभिः[2]'।

किञ्च—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[3]॥
शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत[4]॥
शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धिनी।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते[5]॥

तच्च शब्दतत्त्वं ब्रह्म, अक्षराणां वर्णानां निमित्तत्वादुपादानत्वाच्च अक्षरमित्युच्यते। कथं ब्रह्मणोऽक्षराणां निमित्तत्वमिति चेत्, इत्थम्—'प्रत्यक्चैतन्ये ज्ञानरूपेऽन्तरविद्यया सन्निवेशिताः पदवाक्यरूपा वर्णा परप्रत्यायनार्थं प्रयत्नेनाभिव्यज्यन्ते। सेयं वर्णव्यक्तिर्वर्णसिद्धान्तरूपा ब्रह्मरूपस्यात्मनोऽभिष्यन्द इत्युच्यते, इत्येवं ब्रह्मोपादानिता वर्णव्यक्तिर्मृदुपादानिका घटव्यक्तिरिति ज्ञायते'। तथा चोक्तम्—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम्।
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि सन्निविष्टाम्॥

पूर्वार्द्धे सूक्ष्मत्वादिना विहिताया वाच उत्तरार्धेऽन्यत्ववादिना पुनर्विधानान्वादेशः। एवमेकस्य सूक्ष्मस्य ज्ञानात्मकस्य शब्दतत्त्वस्य ब्रह्मणः परावाग्रूपस्य विवर्तभूतास्तिस्रो वाचस्तदर्थाश्चेति शब्दार्थोभयोपादानत्वं ब्रह्मणः शब्दतत्त्वस्य सिद्धम्।

---

१. महाभाष्यम्—पस्पशाह्निकम्; २. वा० प० १।२३; ३. तदेव—वा० प० १।१।
४. तदेव—१।१२०। ५. तदेव—१।११८।

तदुक्तम्—

> **परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।**
> **हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा**[1] ॥ इति ।
> **स्वरूपज्योतिरेवान्तः परावागनपायिनी**[2] ॥ इति च ।

वाक्यपदीयस्य हेलाराजीये स्वोपज्ञटीकायामनादिनिधनेति श्लोकोक्तविवर्त-लक्षणन्तु—एकस्य तत्त्वात् (स्वरूपात्) अप्रच्युतस्य अधिष्ठानस्य आरोप्ये स्ववेदप्रति-भासपुरस्सरं योऽसत्यस्याधिष्ठानविभागेन च प्रतीयमानस्यारोप्यस्य धर्मोपग्रहः, स विवर्त इत्युच्यते, स्वप्नविषयप्रतिभासवत् । एवञ्च शब्दतत्त्वं ब्रह्मापि स्वरूपादप्रच्युतं सत् स्वाभिधारूपया शक्त्याऽर्थाकारेण प्रतिभासत इति बोध्यम् ।

**'स्थानिवदादेशोऽनल्विधौ'**[3] इति सूत्रे भाष्ये पस्पशाह्निके च शब्दानां नित्यत्व-विषये बहुशो विवेचितम् "नित्याः शब्दाः, नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैः भवितव्यमनपायोपजनविकारिभिः । एवञ्च स्थान्यादेशस्थले नित्यत्वाच्छब्दानां स्थान्यादेशत्वमनुपपन्नम् । यतो हि नाम योऽभूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते—**'यत्सतो नाम विनाशः स्यात् । असतो वा प्रादुर्भाव इति'** । **'नासतो विद्यते भावो नाभावो विद्यते सतः'**[4] इति भगवद्गीतावचनात् । तत्र सर्वविकार इति प्रदीपप्रतीकमादाय अस्तेर्भूरित्यादौ यो भूत्वेत्यादिभाष्यस्य प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वमिति तात्पर्यम्, उत्तरञ्च तत्र कार्याविपरिणामाद्वा सिद्धमित्याद्युक्तम् । कार्या बुद्धिः, सा परिणम्यते ।"

एवञ्चात्रत्यं सिद्धान्तमुररीकृत्य लघुशब्देन्दुशेखरे नागेशभट्टेन व्याकरणस्य साध्वनुशासनत्वं तु शब्दनित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या मृजिप्रसङ्गे मार्जिः साधुर्भवतीत्यादि वृद्धिसंज्ञासूत्रस्थभाष्यप्रामाण्येन—'यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत्साध्वित्यर्थापत्तिकल्प्यवाक्येन बोध्यम् । कार्यशब्दवादे तु पूर्वभाष्योन्नीतानादि-तात्पर्यवशाच्छास्त्रस्य वस्तुतः शब्दोत्पादकत्वासम्भवात्, ताल्वादेरेव शब्दोत्पाद-कत्वेन साधूनामसाधूनाञ्च शब्दानां सिद्धतया शास्त्रस्य साधुत्वपर्यन्तं तात्पर्यकल्पनेन नित्य शब्दवाद इव मृजिप्रसङ्गे मार्जिः साधुर्भवतीत्यवश्यं वक्तव्यम् ।

नैयायिकानां मते शब्दानामनित्यत्वेन योग्यविभुविशेषगुणानां स्वोत्तरगुण-नाश्यत्वनियमादच्परत्वासम्भवेन साधुत्वकल्पनं नोचितमिति पक्षे निमित्तसन्निधा-नासम्भवान्मृजिप्रसङ्ग इति भाष्यासङ्गत्या पूर्वापरीभावकल्पनद्वारा **'इकारोच्चारणे यकार उच्चारणीयः, पूर्वपूर्वदृष्टप्रयोगात्'** इत्यनुमानेन साध्वनुशासनं विधेयमिति बुधाः ।

किञ्च आर्द्धधातुकस्येड्वलादेरिति सूत्रे शब्दनित्यतासिद्धान्तसंरक्षणार्थमागमो नामापूर्ववर्णोपजन इति भाष्यपरिभाषणात्—**'आद्यन्तौ टकितौ'**[5] इत्यादि सूत्रार्थ-

---

१. उद्द्योते पृ० ३३; २. तदेव–पृ० ३३;
३. अष्टा० १।१।५६; ४ गीता—२।१६ । ५. अष्टा० १।१।४६ ।

ज्ञानाच्च तत्तदागमविधायकशास्त्रैः 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'[1] इति परिभाषायास्तद्गुणीभूता इति बीजांशकथनस्य व्याख्याप्रसङ्गे तद्विशेषणीभूतास्तदवयवीभूता इत्यर्थकरणाच्छास्त्रेणागमिनामागमाद्यवयवोत्पादने अनागमकानां सागमका आदेशा इत्यर्थकल्पने स्थानिवद्भावेनेडादौ सिच्त्वस्याक्षतता सम्पादनार्थं कृतमस्ति। 'आर्द्धधातुकस्येति'[2] सूत्रे इडित्यत्र 'इः टः' आद्यवयवो यस्येति बहुव्रीहिणार्धधातुकस्य स्थाने इकारादिरादेश इति आद्यन्तौ टकिताविति सूत्रस्थभाष्यमेकदेश्ययुक्तिरेव।

किन्तु; नित्येषु शब्देष्वागमविधानान्यथानुपपत्त्यार्थापत्तिमूलकवाक्यान्तरकल्पनयैवेड्रहितवृद्धिप्रसङ्गे सेड्वृद्धिः कर्त्तव्येत्यर्थो न तु पूर्वोक्तरीत्या स्थानषष्ठीं प्रकल्प्येकाराद्यवादेशो विधेय इत्यर्थः। इत्संज्ञकटकयोराद्यन्तसंज्ञायामाह—उदात्तत्वानुपपत्तिरूपं दूषणं तु तत्रैव भाष्ये स्पष्टम्। उक्तञ्च परिभाषेन्दुशेखरे—आर्द्धधातुकस्येडागमेत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्यार्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्वुद्धि कर्त्तव्येति। एवञ्चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः।

स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात्। किञ्चैवं सति स्थानिवुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्येति परिभाषया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या लावस्थायामडिति भाष्योक्तसिद्धान्तासङ्गतिः।

स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषायाः प्रवृत्तौ तिसृणामित्यत्र परत्वात् तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासङ्गतिः। एरुरित्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः। आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इत्यचः परस्मिन्पूर्वविधावित्यादेर्नासङ्गतिः। एतत्सर्वं सिद्धान्तजातं समाश्रित्य महामहोपाध्यायशास्त्रार्थमहारथीपण्डितप्रवरशिवकुमारशास्त्रिणामन्तेवासिनो जयदेवमिश्राः शास्त्रार्थरत्नावल्यां शब्दनित्यतावादप्रतिष्ठापनाय "स्थानपदार्थेऽवच्छेदकानिरूपितावच्छेदकतानिरूपितोच्चारणत्वावच्छिन्ना या साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता, तदवच्छेदकधर्मावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता, तदवच्छेदकतावच्छेदकतारूपः प्रथमावच्छेदकताश्रयः स्थानी चरमावच्छेदकताश्रय आदेशः 'इको यणचि'[3] इत्यादिना हि अजव्यवहितपूर्वत्वविशिष्टेककर्मकोच्चारणं साधु इद ज्ञानं भ्रमः, अर्थात् साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतावद् अजव्यवहितपूर्वत्वविशिष्टयण्कर्मकोच्चारणं साधु इदं ज्ञाने प्रमा, अर्थात् साधुत्वप्रकारकप्रमात्मकज्ञानीय-

१. परिभाषेन्दु० १२; २. अष्टा० ७।२।३५। ३. अष्टा० ६।१।७७।

विशेष्यतावदिति बोध्यते। तथा च भ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारता-निरूपितोच्चारणत्वावच्छिन्नविशेष्यतावच्छेदकता कर्मत्वनिष्ठा, तदवच्छेदकता इङ्-निष्ठा, तदाश्रय इक्स्थानीसाधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्न-प्रकारतानिरूपितोच्चारणत्वावच्छिन्नविशेष्यतानिरूपितावच्छेदकता कर्मत्वनिष्ठा, तन्निरूपितावच्छेदकता यण्निष्ठा, तदाश्रयो यण् आदेशः। इक्स्थाने यण् स्यादित्यत्र स्थानपदार्थैकदेशावच्छेदकतायां षष्ठ्यर्थवृत्तित्वसम्बन्धेनेक्पदार्थस्यान्वयः।

स्थानपदार्थचरमावच्छेदकतायाश्च स्वनिष्ठवृत्तित्वसम्बन्धावच्छिन्नाधारता-निरूपिताधेयतासम्बन्धेन यण् पदार्थेऽन्वयः। नन्वेवमिङ्निष्ठस्थानितानिरूपितादेशता-वान् गुण इति व्यवहारापत्तिः, गुणकर्म्मकमुच्चारणं साधुत्वप्रकारकप्रमात्मकज्ञानीय-विशेष्यतावदित्यर्थस्याद्गुण इत्यनेन बोधितत्वात्। यणि च तादृशव्यवहारप्रयोजक-यावत्पदार्थस्य गुणेऽपि सत्वादिति चेत्, न, उच्चारणत्वावच्छिन्नविशेष्यताया अग्रिमो-च्चारणत्वावच्छिन्नविशेष्यतायां स्वावच्छेदकोच्चारणत्वावच्छिन्नत्व-स्वप्रयोजकशास्त्र-प्रयोज्यत्वोभयसम्बन्धेनान्वयः। गुणकर्मकोच्चारणत्वावच्छिन्नविशेष्यतायाश्च इक्-कर्मकोच्चारणत्वावच्छिन्नविशेष्यताया द्वितीयसम्बन्धाभावात्।

ननु विकल्पस्थले 'जराया जरसन्यतरस्याम्'[1] इत्यादौ जराकर्म्मकोच्चारणेऽपि साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यताया एव सत्वेन, जराशब्दस्य स्थानित्वाना-पत्तिरिति चेत्, न, अवच्छेदकतानिरूपितावच्छेदकतानिरूपकविशेष्यताविशिष्ट-विशेष्यतावच्छेदकतावच्छेदकताया एव स्थानपदार्थत्वेनादोषात्। वैशिष्ट्यञ्च—स्वा-वच्छेदकोच्चारणत्वावच्छिन्नत्व-स्वप्रयोजकशास्त्रप्रयोज्यत्व-स्वनिरूपितप्रकारताविशिष्ट-प्रकारतानिरूपितत्वसम्बन्धैः। प्रकारतावैशिष्ट्यञ्च—प्रकारतायां स्वावच्छेदकं यत् साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वम्, तद्घटकं यत् साधुत्वम्, तत्प्रकारक-प्रमात्मकज्ञानीयविशेष्यतात्वं तदवच्छिन्नत्वैतदन्यतरसम्बन्धेन इको यणचित्यादौ इक्कर्मकोच्चारणे साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतावद् यण्कर्मकोच्चारणं प्रमात्मकज्ञानीयविशेष्यतावदित्याद्येव शब्दनित्यतापक्षे बोध्यते।

तथा च प्रथमज्ञानीयोच्चारणत्वावच्छिन्नविशेष्यता इङ्निष्ठावच्छेदकता-निरूपितकर्मत्वनिष्ठावच्छेदकतानिरूपिका तद्वैशिष्ट्यं यण्कर्मकोच्चारणं साधुत्व-प्रकारकप्रमात्मकज्ञानीयविशेष्यतावदित्याकारकद्वितीयज्ञानीयोच्चारणत्वावच्छिन्नविशे-ष्यतायां यतो द्वयोरुच्चारणत्वावच्छिन्नत्वमस्ति, एकशास्त्रप्रयोज्यत्वमप्यस्ति। पूर्व-विशेष्यतानिरूपितप्रकारतायाः स्वावच्छेदकं यत् साधुत्वप्रकारकभ्रमात्मकज्ञानीय-विशेष्यतात्वम्, तद्घटकं यत्साधुत्वम्, तत्प्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्न-रूपान्यतरसम्बन्धेन विशिष्टा प्रकारता तन्निरूपितत्वञ्चास्तीति। एतदग्रे जराया जरसन्य-

1. अष्टा० ७।२।१०१।

तरस्यामिति सूत्रस्थजराजरसित्युभयोः साधुत्वाज्जरानिष्ठस्थानितानिरूपितादेशतावान् जरसिति व्यवहारवद् जरानिष्ठस्थानितानिरूपितादेशतावान् जरा शब्द इति व्यवहारापत्तिस्तादृशव्यवहारप्रयोजकस्योभयत्र समत्वादिति वाच्यमित्युक्तम्। तदुत्तरे तद्विशिष्टत्वं तदादेशत्वमिति स्वीकारात्।

वैशिष्टयञ्च—स्वनिष्ठावच्छेदकतानिरूपितकर्मत्वनिष्ठावच्छेदकतानिरूपक-विशेष्यताविशिष्टविशेष्यतावच्छेदकतावच्छेदकताश्रयत्वस्वनिष्ठविषयताप्रयोजकषष्ठयन्त-पदघटितशास्त्रघटकप्रथमान्तपदप्रयोज्यविषयताश्रयत्वैतदुभयसम्बन्धेन विशेष्यता वैशिष्ट्यं विशेष्यतायां पूर्वोक्तसम्बन्धत्रयेणेत्याहुः।

अभिनवचन्द्रिकाव्याख्याकारास्तु—स्थानपदार्थश्च वृत्तिविशेष्यतावच्छेदकता-वच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्न-विशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेद-कता। स्थानपदार्थतावच्छेदकवृत्तित्वान्वयिनिरूप्यनिरूपकभावः षष्ठ्यर्थः। तथा च 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्यादौ दर्भनिरूपितवृत्तित्ववती या विशेष्यता-वच्छेदकतावच्छेदकता, तादृशावच्छेदकताकं यद् दर्भकरणकं प्रस्तरणमिष्टसाधनत्व-प्रकारकप्रमाविषय इत्याकारकं ज्ञानम्, तादृशज्ञानीयविशेष्यतावच्छेदकं यत् प्रस्तरणत्वम्, तदवच्छिन्नविशेष्यताकमिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं यज्ज्ञानं शरकरणकप्रस्तरणमिष्टसाधनत्वप्रकारकप्रमाविषय इत्याकारकं ज्ञानम्, तादृशज्ञानीय-विशेष्यतावच्छेदकतावच्छेदकता शरेष्विति लक्षणसमन्वयः।

एवमिको यणचीत्यादावपि इङ्निरूपितवृत्तित्ववती या विशेष्यतावच्छेदकता-वच्छेदकता इक्कर्मकोचारणमिष्टसाधनत्वप्रकारकभ्रमविषय इत्याकारकज्ञानीया, तादृशज्ञानीयविशेष्यतावच्छेदकं यदुच्चारणत्वम्, तदवच्छिन्नविशेष्यताकं यदिष्ट-साधनत्वप्रकारकप्रमाविषयत्वप्रकारकं ज्ञानं यण्कर्मकोच्चारणमिष्टसाधनत्वप्रकारक-प्रमाविषयः, इत्याकारकं ज्ञानम्, तादृशज्ञानीयविशेष्यतावच्छेदकं यदुचारणत्वम्, तदवच्छिन्नविशेष्यताकं यद् यण्कर्मकोच्चारणमिष्टसाधनत्वप्रकारकविशेष्यताकं यद् यण्कर्मकोच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषय इत्याकारकमिष्टसाधनत्वप्रकारकं ज्ञानम्, तादृशज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतावान्यणित्यादि बोधः।

न च 'जरायाः' इत्यादिविकल्पस्थले स्थानपदार्थत्वानुपपत्तिः, विकल्पस्थले स्थानिनोऽपि साधुत्वेन जराकर्मकोच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषय इत्या-कारकज्ञानस्याभावादिति वाच्यम्, स्थानपदस्य वृत्तिविशेष्यतावच्छेदकतावच्छेदकता-केष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतायामिष्ट-साधनत्वप्रकारकभ्रमविषयत्वप्रकारकत्वे च खण्डशक्तिस्वीकारेण विकल्पस्थले चेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकत्वरूपखण्डस्थमोपस्वीकारेणादोषात्। शराणां स्थाने दर्भाः प्रस्तरिता इत्यादावपि स्थानपदार्थोपपत्तिरित्याहुः।

अन्ये त्वभाव एव स्थानपदार्थः, प्रतियोगितयाऽभावान्वयिप्रयोज्यत्वं षष्ठ्यर्थः अभावस्य च स्यादिति लिङर्थेष्टसाधनत्वेऽन्वयः। तथा च इको यणचीत्यादौ इक्प्रयोज्यत्वाभाववदिष्टसाधनत्ववान् यणिति बोधः। विकल्पस्थले स्थानपदार्थाभावस्य विकल्पपदार्थाभावेनान्वयः। तथा जराया जरसित्यादौ जराप्रयोज्यत्वाभावाभाववदिष्टसाधनत्ववान् जरसिति बोधः। तथा च अभावाभावस्य प्रतियोगिरूपत्वेन विकल्पस्थले स्थान्यपीष्टसाधनमादेशोऽपीष्टसाधनमित्युभयोरपि साधुत्वं सिध्यतीत्याहुः।

अत्र कैयटोपाध्यायास्तु **'षष्ठी स्थानेयोगा'**[1] इति सूत्रस्य प्रदीपे स्थानपदार्थनिर्वचनप्रसङ्गे मतद्वयमुपस्थापयन्ति। तद्यथा—अस्तेर्भूरित्यत्राप्यस्यां परिभाषायां सत्यां स्थाननिमित्तसम्बन्धोऽवसीयते। स्थानमर्थ इति केचिदाहुः। तिष्ठन्त्यस्मिन् शब्दाः (आदेशभूताः) इति स्थानम् **'अधिकरणे ल्युट्'**। अर्थे च शब्दास्तिष्ठन्ति। तेनास्तेरर्थे भूरित्यर्थः।

अन्ये त्वाहुः—**'अस्जो रोपधयो०'**[2] इत्यादौ रोपधादीनामानर्थक्यादभावसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते। तेनास्तेः प्रसङ्गेऽस्ते प्राप्तौ भूः प्रयुज्यते इत्यर्थः सम्पद्यते। स्वाभाविकोऽस्तेरप्रयोगे आर्द्धधातुके भूशब्दस्य प्रयोगोऽनेन प्रकरणेनान्वाख्यायत इति कैयटसम्मतोक्तमेत्र प्रसङ्गार्थमाश्रित्य स्थानशब्दस्य कौमुदीकारैर्भट्टोजिदीक्षितैर्मन्ये 'स्थानेऽन्तरतम०' इति सूत्रार्थे प्रसङ्गे सति सदृशतम आदेशो भवतीत्युक्तम्। शब्देन्दुशेखरे च मूल एव दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति निदर्शनेन प्रसङ्गार्थत्वं स्थानशब्दस्य व्याख्यातम्।

अत्र नागेशभट्टास्तु 'तुल्यास्ये०'[3] इति सूत्रस्थभाष्ये 'सिद्धे त्वास्ये तुल्यदेशप्रयत्नं सवर्णमिति वार्तिकव्याख्यानावसरे स्वोद्द्योतटीकायां स्थानपदार्थं योगरूढित्वेनाङ्गीकुर्वन्ति। वैयाकरणप्रसिद्धिमभिलक्ष्य सर्वजनसाधारण्येन प्रथितं स्थानपदार्थं व्याख्यान्ति। तद्यथा देशपदेन तात्वादिस्थानमुच्यते। स्थानशब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगिताल्वादिरुच्यते। तत्र यद्यपि अकारादीनां गुणमात्रजनिका नासिका, स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धेः, तथापि ञादीनां स्वरूपस्य न केवलं ताल्वादिना, नापि केवलं नासिकयाऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां नासिकापि स्थानमित्यादि वाक्यैस्ताल्वादीनामेव स्थानपदार्थत्वं स्वीकुर्वन्ति; किन्तु तेषामपि शब्दानित्यत्ववारणाय पूर्वोक्त एव पन्था आश्रयितव्य इत्यलं विस्तरेण।

● ● ●

---

१. अष्टा० १।१।४९।  २. तदेव–६।४।४७।  ३. तदेव–१।१।९।

# अन्विताभिधानाभिहितान्वयवादयोः स्वरूपम्

श्रीसुधाकरदीक्षितः
प्राध्यापकः, न्यायविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी

❀ ❀ ❀

अधुना वादविशेषमधिकृत्य किञ्चित् प्रस्तोतुं प्रयते। अस्माकं शास्त्रेषु तत्त्वविवदिषया यो हि वाक्यप्रयोगः, स एव प्रमाणतर्कसाधनोपालम्भवादशब्दाभिलाप्यः। अयं हि गुरु-सब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयते। अत एवायं पवित्रतमो वादः परमेश्वरस्य श्रीकृष्णस्य स्वरूपम्। यथा च गीतायाम्—

सर्गाणामादिरन्तश्च मध्यश्चैवाहमर्जुन।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्[1]॥ इति।

तत्त्वनिर्णयेच्छया प्रवृत्ते वादे यः सिद्धान्तः पर्यवसन्नो भवति, सोऽपि वादशब्देनाख्यायते! प्रकृतेऽन्विताभिधानस्य अभिहितान्वयस्य च यः सिद्धान्तः, स एव तत्तद्वादपदाभिधेयः।

अस्य वादद्वयस्याविर्भावस्थलं शाब्दबोधविषयको विचारः। अयं बोधो वाक्यबोधसमनन्तरं जायत इति सर्वानुभवसिद्धम्। वाक्यं च न पदसमूहमात्रम्, गौरश्वः पुरुषो हस्तीति परस्परं निराकाङ्क्षाणामपि पदानां समूहस्य वाक्यत्वापत्तेः; किन्तु परस्पराकाङ्क्षाविशिष्टानां पदानां समूह एव वाक्यम्। अत एव शब्दशक्तिप्रकाशिकायां जगदीशो वदति—'मिथः साकाङ्क्षशब्दस्य व्यूहो वाक्यं चतुर्विधम्[2]' इति।

एवंविधवाक्यस्य बोधानन्तरं जायमानो बोधः शाब्दबोध इत्यपि जगदीशो मनुते—

वाक्यभावमवाप्तस्य सार्थकस्यावबोधतः।
सम्पद्यते शाब्दबोधो न तन्मात्रस्य बोधतः[3]॥ इति।

अस्याः कारिकाया विवरणं स्वयं जगदीश एवं करोति—'सार्थकस्य प्रकृतिप्रत्ययादेः वाक्यतामापन्नस्यैव स्वार्थोपस्थितिद्वाराऽन्वयबोधकत्वम्, न तु प्रत्येकस्य निराकाङ्क्षस्य वा' इति।

---

१. श्रीमद्भगवद्गीता—१०।३२।
२. शब्दशक्तिप्रकाशिका—शब्द० नाम० १३;   ३. तदेव—शब्द० नाम० १२।

विवरणेऽस्मिन् वाक्यस्यान्वयबोधकत्वं प्रतिपादयन् जगदीशः शाब्दबोधस्यान्वयबोधरूपतां स्पष्टमङ्गीकरोति, तेन च कस्तावद् बोधः शाब्दबोध इति प्रश्नस्य समाधानं स्फुटं लभ्यते। तच्चेदम्—'**परस्पराकाङ्क्षाविशिष्टः शब्दसमूहो वाक्यम्, तस्य बोधसमनन्तरं वृत्तिज्ञानसहकारेण स्वार्थोपस्थितौ जातायां तेषामर्थानां परस्परान्वयविषयको यो बोधः सम्पद्यते, स एव हि अन्वयबोधापरपर्यायः शाब्दबोधः**' इति समाख्यां भजते। अत एव शाब्दबोधस्य प्रमान्तरवैलक्षण्योपपादनप्रसङ्गेन जगदीशः स्पष्टं भणति—

**साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा[1]॥** इति।

**अयमत्र निष्कर्षः**—शाब्दबोधेऽन्विताः परस्परं संसृष्टाः पदार्था भासन्ते। तत्र पदार्थास्तु पदैरेव वृत्तिज्ञानसहकारेणोपस्थापिताः; केवलं तेषां पारस्परिकोऽन्वयः संसर्गो वाक्येन बोध्यमानोऽभिनवः।

**अत्रैवायं प्रश्नः**—अस्य हि अन्वयस्याभिनवस्य शाब्दबोधविषयतामवाप्तस्यावगमः कुतस्त्यः?

अत्र समाधानप्रकारो द्विविधः, एकः पदैरेवान्वयावगम इति, अपर आकाङ्क्षादिबलेनान्वयावगम इति। तत्र पदैरेरान्वयावगमं ये समाचक्षते, तेऽन्विताभिधानवादिनः, अन्वितानाम् अन्वयविशिष्टानामर्थानां पदैरभिधानस्य तैः स्वीकारात्। ये चाकाङ्क्षादिबलेनान्वयाधिगममभिप्रयन्ति, तेऽभिहितान्वयवादिनः, तेषां मते पदैरभिहितानां शुद्धानामेव पदार्थानां पश्चात् प्रकारान्तरेणान्वयावगमस्याभ्युपेतत्वात्।

**अन्विताभिधानवादः—**

मीमांसकः प्रभाकरः स्वीचकारान्विताभिधानवादम्। तदनु वादोऽयं तदनुयायिभिः शालिकनाथमिश्रप्रभृतिभिर्बहुधा विवृतः समर्थितश्च। सङ्क्षेपश्चायमस्य—प्रकारान्तरेणोपस्थितानामन्वयानां शाब्दबोधविषयत्वेऽभ्युपगते पदार्थानामपि प्रकारान्तरेणोपस्थितानां शाब्दबोधविषयत्वं दुष्परिहरं स्यादेव, अतोऽन्येऽपि पदानां शक्तिं स्वीकृत्य कार्यत्वावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति पदत्वेन कारणत्वमङ्गीकर्त्तव्यम्। पदैरन्विता अर्थाः पदैः कथं ज्ञायेरन्? शुद्धानामर्थानां पूर्वमज्ञातत्वादिति प्रश्नस्तु पदेषु द्विविधशक्तिस्वीकारेण समाधेयः। सा चैका स्मारिका, अपरा चानुभविकी। अनन्वितेषु शुद्धेष्वर्थेषु पदानां स्मारिका शक्तिः, अन्वितेषु चार्थेषु तेषामानुभविकी शक्तिः।

---

१. शब्दशक्तिप्रकाशिका—शब्द० नाम० ३।

अत्राप्ययं विशेषोऽवधेयः—स्मारिका शक्तिर्ज्ञाता सती आनुभविकी च स्वरूप-सती शाब्दबोधे कारणमिति। तेन च स्मारिकया शक्त्या पूर्वमनन्वितानामर्थानामुपस्थितौ सत्यां पश्चादानुभविक्या शक्त्या अन्विता अर्थाः पदैरेव बोध्यन्त इति स्वीकारेण न किञ्चिदनुपपन्नम्।

अथैवं प्रभाकरमतेऽयं शाब्दबोधक्रमः—

१—पदश्रवणम्।

२—स्मारकशक्तिमहिम्नाऽनन्वितार्थोपस्थितिः।

३—अनुभावकशक्तिमहिम्ना पदैरेवान्वितार्थबोधः।

एतेषु चान्वितार्थेषु कश्चनैकः प्रधानीभूतपदार्थो गुणीभूतपदार्थान्तरव्यतिषिक्तो वाक्यार्थतामापद्यते।

प्रभाकरः पदार्थानामन्वयं वाक्यार्थं नाचष्टे; किन्तु गुणीभूतपदार्थान्तरव्यतिषिक्तं प्रधानं पदार्थं वाक्यार्थमाचष्टे। अस्यैव वाक्यार्थस्य बोधः शाब्दबोधनाम्नाऽभिधीयते। एवमन्वितेष्वप्यर्थेषु शक्तिस्वीकारेण प्रभाकरोऽन्विताभिधानवादी। प्रभाकरमते पदैरेव शाब्दबोधापरपर्यायो वाक्यार्थबोधः सम्पद्यते। शालिकनाथः प्रकरणपञ्चिकायां स्पष्टं वदति—

पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा।
तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम्[1]॥ इति।

अन्यच्च—

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्[2]॥ इति च।

**अभिहितान्वयवादः—**

प्रामुख्येन कुमारिलभट्टा अभिहितान्वयवादिनः। एषां मते पदैः शुद्धस्य पदार्थमात्रस्याभिधानं स्वार्थसमर्पणमात्रेण क्षीणशक्तिकैः पदैः पदार्थस्वरूपातिरिक्तविशिष्टार्थस्याभिधातुमशक्यत्वात्। द्विविधशक्तिस्वीकारपुरस्परं तथा कल्पने गौरवं स्फुटम्। अतः पदार्थसंसर्गविषयको वाक्यार्थबोधोऽन्वयबोधापरपर्यायो न पदेन, नापि पदसङ्घातेन; किन्तु पदाभिहितैरनन्वितावस्थैः पदार्थैर्लक्षणया बोध्यते। अनन्वितावस्थाः पदार्थाः स्वीयाम् अन्वितावस्थां लक्षयन्तीति तात्पर्यम्। **'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः'** इति वदन्तो भट्टा एवात्र प्रमाणम्। एवं प्रभाकरमते वाक्यार्थबोधं प्रति पदानां कारणत्वम्, भट्टमते तु पदार्थज्ञानस्य ज्ञातपदार्थस्य वा कारणत्वमिति स्पष्टं भवति।

१. प्रकरणपञ्चिका—पृ० ३७७; २. तदेव—पृ० ४०१।

पदार्थानां वाक्यार्थबोधकत्वे जैमिनिसूत्रं प्रमाणम्। तच्चेदम्—'**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्**'[1]।

सूत्रस्यास्य '**अर्थस्य तन्निमित्तत्वात्**' इत्यंश एवं विव्रियते—अर्थस्य वाक्यार्थप्रत्ययस्य तन्निमित्तत्वात् पदार्थज्ञाननिमित्तकत्वादिति। अत्र शास्त्रतात्पर्यविदां शबरस्वामिनां भाष्यमपीदं प्रमाणम्—'**पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थमवगमयन्ति**' इति।

भट्टा एव हि श्लोकवार्त्तिकेऽपि स्पष्टं वदन्ति—

**अत्राभिधीयते यद्यप्यस्ति मूलान्तरं न नः।**
**पदार्थानान्तु मूलत्वं युक्तं तद्भावभावतः**[2]॥ इति।

तद्भावभावतः—पदार्थेषु सत्सु वाक्यार्थोदयादित्यर्थः।

एवं भट्टमतानुसारं पदार्थैः लक्षणया वाक्यार्थोऽत्रगम्यत इति सुव्यक्तम्। पदार्थैर्वाक्यार्थावगमस्वीकारादेव भट्टमते यत्र नास्त्येकस्यापि पदस्य ज्ञानम्, अर्थाश्च मानान्तरेणावसिताः, तत्रापि परस्परसंसृष्टपदार्थसमुदायात्मको वाक्यार्थः सम्पद्यते तद्विषयकबोधश्च भवति। तथा च कारिकेयं सुप्रसिद्धा—

**पश्यतः श्वेतिमारूपं ह्रेषाशब्दञ्च शृण्वतः।**
**खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः॥** इति।

अस्याः कारिकाया अयमर्थः—यत्राव्यक्तं श्वेतरूपमनवधारिताश्रयविशेषतया प्रत्यक्षदृष्टम्, प्रत्यक्षह्रेषाशब्देनाप्रतिपन्नगुणविशेषोऽश्वश्चानुमितः, प्रत्यक्षखुरनिक्षेपशब्देन चाज्ञातकर्तृविशेषं धावनमनुमितम्, तत्र श्वेतोऽश्वो धावतीत्यन्वयबोधो जायत इति।

अस्मिन् भट्टाभिमतेऽभिहितान्वयवादेऽपरोऽपि विशेषो नूनमवधेयो भवति। स चायम्—पदानां शुद्धार्थाभिधायकत्वं किमात्मकम्? अनुभावकत्वरूपम्, स्मारकत्वरूपं वा? तत्र न प्रथमः कल्पः, अनधिगतार्थगन्तृत्वमेवानुभावकत्वम्, तच्च न पदेषु घटते, नापि द्वितीयः कल्पः, तत्तांशस्य बोधेऽनुल्लेखात्। तत्तांशस्य प्रमोषकल्पनायां तु तत्कारणकल्पने सर्वत्र तन्नैयत्यकल्पने च महद्गौरवं सुव्यक्तमेव। अतोऽत्राभिधायकत्वं स्मृत्यनुभवविलक्षणबोधजनकत्वरूपमेवाङ्गीकरणीयम्। तथा सति प्रकृते पदार्थेषु पदाभिहितत्वं स्मृत्यनुभवविलक्षणपदजन्यज्ञानविषयत्वरूपमिष्टम्।

अनेन रूपेण पदाभिहिताः पदार्था आकाङ्क्षायोग्यतासत्तिमन्तो वाक्यतात्पर्यानुपपत्त्या विशिष्टरूपं स्वान्वयमनुभावयन्त्यतो भट्टमते वाक्यार्थो लक्ष्य इत्याख्यायते। पदबोध्यत्वं शक्यत्वं पदार्थबोध्यत्वं लक्ष्यत्वमिति भट्टैरभ्युपगमात्।

---

१. जै० सू० १।१।२५। २. श्लो० वा० ११०–१११।

पदार्थबोध्यत्वं लक्ष्यत्वमिति कथनेन वाक्यार्थबोधोपयोगिनीयं लक्षणा लक्षाणान्तरेभ्यो विलक्षणेति व्यक्तं भवति। तच्चेदं वैलक्षण्यम्—'गङ्गायां घोषः' इत्यादिषु लाक्षणिकवाक्येषु तु गङ्गापदाभिहितेन प्रवाहरूपपदार्थेन संयोगसामीप्यादि-सम्बन्धवशात् तीरादिः लक्ष्योऽर्थः स्मर्यते, तेन तीरे गङ्गापदलक्ष्यत्वं गङ्गापदाभिहित-पदार्थस्मार्यत्वरूपं पर्यवस्यति, लक्ष्ये वाक्यार्थे तु नास्ति पदार्थस्मार्यत्वम्; अपि तु पदार्थानुभाव्यत्वं पदार्थबोध्यत्वं लक्ष्यत्वमित्यनुपदमेवोक्तत्वात्।

एवञ्च पदार्थेन पदार्थलक्षणायां पूर्वसम्बन्धज्ञानमपेक्ष्यते, लक्ष्यस्य पदार्थस्य स्मार्यत्वात्। वाक्यार्थलक्षणायान्तु पूर्वसम्बन्धज्ञानं नापेक्ष्यते, वाक्यार्थस्यानुभाव्यत्वेन पूर्वसम्बन्धज्ञानापेक्षाया अभावात्। अत एव पदार्थलक्षणायान्तु पूर्वसम्बन्धज्ञानस्यैव नियामकत्वं स्वीक्रियते; परं वाक्यार्थलक्षणायामाकाङ्क्षायोग्यतासत्त्यादीनां नियाम-कत्वमङ्गीक्रियते।

निष्कर्षश्चायम्—पदशक्तेः पदार्थोपस्थापन एवोपक्षयाद् उपस्थितानां पदार्थाना-मन्वयरूपसंसर्गानुभावकत्वेन पदार्थैर्वाक्यार्थो लक्ष्यत इति भट्टमतं सूपपन्नं भवति। वाक्यार्थलक्षणाप्रकारश्चायम्—यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदेन प्रवाह-रूपोऽर्थोऽभिधीयते, तथैव घटमानयेत्यादिषु घटादिपदैरनन्वितावस्थाः पदार्था अभिधीयन्ते; यथा च प्रवाहसामीप्यवशेन तत्र तीरं लक्ष्यते, तत्रैवात्राकाङ्क्षादिसह-कारेण पदार्थानामन्वितावस्था लक्ष्यते। वैषम्यं तु एतावदेव—तीरादिः लक्ष्यमाणः पदार्थः पदार्थान्तरे घोषादौ अन्वेति, परमत्र लक्ष्यमाणो वाक्यार्थोऽन्वययोग्यस्य वाक्यार्थान्तरस्यासन्निहिततया वाक्यार्थान्तरे नान्वेतीति। एतेन हि भट्टानां मते वाक्यार्थरूपेण भासमानोऽभिनवः संसर्गः पदार्थैर्बोध्यते, न पदैरिति पर्यवसितं भवति।

**नैयायिकमतम्**—नैयायिका अपि सति पदज्ञाने शक्तिज्ञानसहकारेणानन्वितानां पदार्थमात्राणां स्मरणम्, अन्तरं च तेषां परस्परान्वयस्य पदद्वयसमभिव्याहारात्मका-काङ्क्षया भानमिति मन्वते। अत एव गदाधरो वदति व्युत्पत्तिवादे—**'शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते'**[1] इति।

शक्तिवादेऽपि अन्वयस्याकाङ्क्षाभास्यत्वं प्रतिपादयन् गदाधरो गदति—'अन्विताभिधानवादिभिस्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितिहेतुतायाः सामान्यत एव क्लृप्ततया वृत्तिज्ञानादन्वयानुपस्थितौ तस्य शाब्दबोधविषयत्वासम्भवे-नान्वयांशे शक्तिग्रहः शाब्दबोधेऽवश्यमपेक्षणीय इति मन्यते, परं नैतदयुक्तम्, सामा-न्यतस्तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितत्वेन हेतुतायां स्वीकृतायां धेनुपदं धानकर्मत्वे शक्तं गवि च शक्तमिति स्वतन्त्रवृत्तिज्ञानाद् विशेष्य-विशेषणभावानापन्न-

---

१. व्युत्पत्तिवादः।

त्वेन धेनुपदोपस्थितयोः पदार्थ-पदार्थतावच्छेदकयोः पदार्थतावच्छेदकप्रकारताकपदार्थनिष्ठविशेष्यताकत्वेन वाक्यार्थमर्यादया शाब्दबोधापत्तिः दुर्निवारा स्यादेव। अतस्तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकोपस्थितित्वेन हेतुता अगत्या स्वीकार्या। एवञ्च तदन्वयकबोधस्य किञ्चिद्धर्मप्रकारेण तद्विषयकत्वाभावाद् वृत्तिज्ञानात्तदनुपस्थितावपि तदन्वयकः शाब्दबोधः सम्भवत्येव।

न चैवं नियामकाभावेन 'द्रव्यं घटः' इत्यादौ यथा द्रव्य-घटयोरभेदो भासते, तथैवाबाधितानां यावतां संसर्गाणां संयोगसमवायादीनामपि भानं स्यादिति वाच्यम्, कयोश्चित् पदयोः केनचित् सम्बन्धेन स्वार्थान्वयबोधसाकाङ्क्षतयाऽव्यवहितोत्तरत्वसंसर्गेण एकपदविशिष्टापरपदत्वज्ञानात्मकस्याकाङ्क्षाज्ञानस्यैव पदार्थान्वयभाननियामकत्वस्वीकारेण ययोः पदयोः नानासम्बन्धेन स्वार्थान्वयबोधे आकाङ्क्षा, तज्जन्यशाब्दबोधे 'द्रव्यं घटवदिति वाक्यं संयोगेन द्रव्ये घटान्वयबोधेच्छया प्रयुक्तमित्याद्याकारकान्वयविशेषतात्पर्यकज्ञानरूपसहकारिकारणबलादेवान्वयविशेषभाननियमोपपत्तेः स्वीकारेण दोषाभावात्। अन्वयांशे शक्त्युपगमेऽपि तस्य तस्य पदार्थस्यान्वयविधया क्वचित् कस्यचिद् भानं क्वचित् कस्यचिदभानमित्यनियमेन सामान्यरूपेणैवान्वयस्य शक्यकोटावन्तर्भावणीयतयोक्तस्यैवान्वयविशेषभाननियामकत्वमित्यवश्यमङ्गीकरणीयत्वात्।

**उपदर्शितविभिन्नमतसिद्धतथ्याकलनम्—**

यथेदानीं कानिचन मतानि सङ्क्षेपेणोपन्यस्तानि, तदनुसारं 'पदार्थाः पदैः स्मार्यन्ते' इत्यत्र नैयायिकानां प्राभाकराणां च साम्यम्; परमेतावान् विशेषः—**प्राभाकराणां** मते पूर्वं स्मारिकया शक्त्याऽनन्वितावस्थाः पदार्थाः स्मार्यन्तेऽनन्तरमानुभविक्या शक्त्याऽन्वितावस्थास्ते बोध्यन्ते। **नैयायिकानां** मते तु पदेषु विद्यमानया एकयैव स्मारिकया शक्त्याऽनन्वितावस्थाः पदार्थाः केवलं स्मर्यन्त इति।

**भाट्टा** अपि यद्यपि पदैरनन्वितावस्थानां पदार्थानां बोधं स्वीकुर्वन्ति; परं स बोधो न हि स्मरणात्मकः, नाप्यनुभवात्मकः; किन्तु तदुभयविलक्षणस्तेन नैयायिकप्राभाकराभ्यां सहात्रार्थे भाट्टानां वैमत्यं स्पष्टम्, ताभ्यां पदैरनन्वितावस्थानां पदार्थानां स्मरणस्वीकारात्।

एवं स्थिते केनचनांशेन नैयायिकसिद्धान्तोऽन्विताभिधानवादसामीप्यं भजते, केनचनांशेन चाभिहितान्वयवादसामीप्यम्।

शक्तिवादे गदाधरकृतेऽन्विताभिधानवादः खण्ड्यते, नाभिहितान्वयवादः, तेन नैयायिका अभिहितान्वयवादिन इति प्रतीयते; परमत्रेदं विचारणीयम्—प्रसङ्गेऽस्मिन् अभिहितशब्देन को वाऽर्थः स्वीकृत इति? यदि हि अभिधावृत्तिमाश्रित्यायं शब्दोऽनुभवात्मकबोधविषयमभिधातुं प्रवृत्त इति मन्यते, तदा नैयायिकमतानुकूल्ये सत्यपि

अभिहितान्वयवादिभट्टमतविरोधः स्फुटस्तेनाभिधावृत्त्या पदैरनन्वितानामर्थानाम् अनुभवात्मकबोधस्यास्वीकारात् । यदि तु भट्टमतानुसारमत्राभिहितपदं स्मृत्यनुभवविलक्षणबोधविषयमर्थं बोधयितुमेव प्रवृत्तमिति स्वीक्रियते, तदा नैयायिकानामभिहितान्वयवादित्वं सङ्कटाकुलं भवति, तैः स्मृत्यात्मकबोधस्यैव पदैः स्वीकारात् ।

अत्र जयन्तभट्टानामभिमतमवश्यमवधेयम् । ते वदन्ति—'यदि वाक्यस्य वाक्यार्थे व्युत्पत्तिस्तदान्विताभिधानम्, पदस्य पदार्थे व्युपत्तावभिहितान्वयः' इति । तथा सति पदानां पदार्थे व्युत्पत्तिरिति भट्टनैयायिकाभ्यां स्वीकृततयोभयोरभिहितान्वयवादित्वं समञ्जसं भवति ।

अथापीदं चिन्तनीयम्—नैयायिकाः पदैरनन्वितानां पदार्थानां स्मरणं मन्यमाना अपि तेषाम् अन्वयविशेषस्य निर्धारणं पदैरेव तात्पर्यबलेन पश्चाद् भवतीति स्पष्टं मन्यन्ते । तथा सति नैयायिका अपि कथं नान्विताभिधानवादिन एव स्वीकार्या इति । यद्यत्रोच्यते—अन्वितानामर्थानां पदैः तात्पर्यबलेन बोधस्वीकारेऽपि नान्विताभिधानवादो नैयायिकमतसिद्धः, तैः अन्वितानामभिधावृत्त्या भानानभ्युपगमाद् इति; अस्तु, तथा स्वीकृतेऽपि नैयायिका अन्वितप्रतिपत्तिवादिनो नान्विताभिधानवादिन इत्येव विशेषः स्यात् । अभिहितान्वयवादस्तु कथं तेषामभिमत इति नूनं विचारणीयकोटौ प्रविशति । तथा च जयन्तभट्टा अवादिषुः—

अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठता ।
तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः ॥
तेनान्विताभिधानं हि नास्माभिरिह मृष्यते ।
अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते[1] ॥ इति ।

• • •

१, न्यायमञ्जरी-षष्ठमाह्निकम् प्र० प्रकरणम्-पृ० १६० ।

# विभिन्नदर्शनानां नये प्रत्यक्षप्रक्रिया

**श्रीकौस्तुभानन्दपाण्डेयः**

एम्० ए० (दर्शनवर्गे)

अनुसन्धाता-संस्कृतविभागीयः, कुमायूँविश्वविद्यालये, नैनीताल ।

❀ ❀ ❀

सर्वप्रमाणोपजीव्यत्वात्, सर्वसिद्धान्तसम्मतत्वाच्च प्रत्यक्षप्रमाणमङ्गीकृतं सर्वैरपि दार्शनिकैः । आस्तिकनास्तिकोभयसम्मतं च प्रत्यक्षप्रमाणम् । तत्र चार्वाकोऽपि व्यतिरिक्तान् प्रमाभेदानस्वीकृत्य सर्ववादिप्रतिवादिनां मध्ये मतैक्यमादधाति, तस्य प्रत्यक्षैकप्रमाणत्वात् । प्रत्यक्षमात्रं हि चार्वाकमिति[1] तस्याभिमतमुपस्थाप्यते दार्शनिकैः । बौद्धदर्शने कल्पनापोढमभ्रान्तं प्रत्यक्षमिति[2] स्वीक्रियते । आर्हताः प्रत्यक्षपरोक्षभेदेन प्रत्यक्षमपरोक्षकोटौ स्थाप्य विशदः प्रत्यक्षमिति तल्लक्षयन्ति[3] । सांख्यदर्शने प्रतिविषयाध्यवसायो दृष्टमिति तल्लक्षणम्[4], इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षमिति योगभाष्यकर्तुर्मतम्[5] । इन्द्रियसन्निकर्षोत्पन्नं ज्ञानमव्यपदेशमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमित्यक्षपादः[6] । परवर्तिनैय्यायिका वैशेषिकाश्च ईश्वरजीवप्रत्यक्षसाधारणं तथा अनुमानादिषु चातिव्याप्तिवारणाय **'अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्'** इत्याहुः[7], अनुमित्यादिषु ज्ञानाकरणकज्ञानविरहात् ।

प्राभाकरमीमांसकशालिकनाथमिश्रेण साक्षात्प्रतीतिरिति प्रत्यक्षं लक्षितम्[8] । भाट्टमीमांसकपार्थसारथिमिश्रस्तु शाबरभाष्यकारेण धर्मनिमित्तपरीक्षार्थं प्रयुक्तं प्रत्यक्षमिन्द्रियसम्प्रयोगजन्यत्वेनैव स्वीकरोति[9] । कुमारिलमतमनुसृत्य मानमेयोदये इन्द्रियसन्निकर्षजं प्रत्यक्षं ग्रन्थकारो मन्येते[10] ।

---

१. सर्वदर्शनसंग्रहः, पृ० ४, न्यायमञ्जरी, प्र० मा०, पृ० २६ ।

२. न्यायबिन्दुः, पृ० ८ ।

३. प्रमाणमीमांसा, पृ० २४ ।

४. सांख्यतत्त्वकौमुदी, का० ५, पृ० १०२ ।

५. यो० द०, तत्त्ववैशा० व्या० मा० १।१।७ ।

६. न्या० द० १।१।४ ।

७. न्या० सि० मु०, पृ० २०७ ।

८. प्रकरणपञ्चिका, पृ० १४६ ।

९. शास्त्रदीपिका, पृ० ५४ ।

१०, मानमेयोदयः, पृ० ११ ।

शाब्दिकानां नयेऽपि प्रत्यक्षं सूत्रितम्[1] अद्वैतवेदान्तिनां तत्साक्षादपरोक्षाद् ब्रह्म इति श्रुतेः चैतन्यमेव प्रत्यक्षप्रमा[2], विशिष्टाद्वैतिनः साक्षात्प्रतीतिरेव प्रत्यक्ष-प्रमाणमभिवदन्ति[3]। लक्षणभेदेऽपि सर्वतन्त्रसम्मतं हि प्रत्यक्षप्रमाणम्।

**अत्र प्रत्यक्षप्रक्रियागता भेदकाः प्रस्तूयन्ते—**

प्रत्यक्षं पुरस्कृत्य प्रत्यक्षप्रक्रियापरीक्षार्थं तत्रेन्द्रियाणां प्राधान्येन सहकारित्व-मात्रेण च कारणत्वमाप्यते। न्याय-वैशेषिक-मीमांसकाश्च इन्द्रियं प्रामुख्येन, सांख्ययोगौ सहकारिसाधनत्वेन, अद्वैतवेदान्तिनो विशिष्टाद्वैतिनश्च वृत्तिद्वारा पृथक्पृथग्रूपेण प्रत्यक्षोत्पत्तिमालोचयन्ति, तत्र सामान्यसिद्धान्ताभावात्। शाब्दिकाः सांख्यमतवादिनः, कुत्रचिच्च अद्वैतवेदान्तानुसारिणः, बौद्धार्थस्वीकारे च विशेषवादिनः। बौद्धानां मतं भिन्नमेव, तेषां निर्विकल्पकमेव ज्ञानम्, इन्द्रियाणां चाप्राप्यकारित्वम् आर्हताः कुत्रचिद् न्यायमतवादिनः, क्वचिच्च भिन्नमतय एव। एवं प्रत्यक्षप्रक्रियाविषये दार्शनिकानां मतैक्यं नास्त्येव। तदेवास्मिन्निबन्धे क्रमशो विविच्यते।

**चार्वाकमते प्रत्यक्षप्रक्रिया—**

चार्वाकमते प्रत्यक्षमेव प्रमाणम्। मन एव इन्द्रियम्, अन्तःकरणस्य बहिरिन्द्रिय-तन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्तिर्न जायत इति माधवाचार्येणापि बहिरिन्द्रिय-सहकारित्वमात्रेण मन इन्द्रियभावश्चार्वाकमते समर्थितम्[4]। पृथिव्यादीनां चतुर्णां भूतानां देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते[5]। मन एव हि इन्द्रियम्, सर्वप्राणिसाधारणत्वात्। शरीरावयवमेव हि मनः, न तु द्रव्यम्। चक्षुःश्रोत्रादयस्तु मनसो विषयसंयोगाय एवापेक्ष्यन्ते। चक्षुद्वारा मनः साहाय्ये ज्ञानं चाक्षुषम्, श्रोत्रद्वारा मनः साहाय्ये ज्ञानं श्रावणमिति कथ्यते। चार्वाकमते ज्ञानं क्रियैवास्ति, न तु गुणः। चैतन्यविशिष्टदेह एवात्मा, ज्ञानाधिष्ठानं च स एव[6]। स एवात्मा कर्त्ता भोक्ता चेति मन्यते। तेषां मते ज्ञानेन्द्रियाणि तत्त्वतः कर्मेन्द्रियाण्येव, ज्ञानस्य क्रियाधर्मत्वाद् गुणरहितत्वाच्च। करणानि ज्ञानं मनसि समर्पयन्ति, तस्यैव ज्ञानप्रकाशकत्वात्। आत्मा हि व्यापकः। इन्द्रियाणि बाह्यसूत्रस्वरूपाणि[7]।

तत्र बहिःस्थानाद् मनः केन्द्रं प्रति प्रवर्तमानानि सूत्राणि ज्ञानेन्द्रियाणि, मनः केन्द्रस्थानाद् बहिर्निर्गत्य बाह्यदेशे विकेन्द्रितान्येव सूत्राणि कर्मेन्द्रियाणि[8]।

---

१. 'अपरोक्षे च' पा० सू० ३।२।११९।
२. वेदान्तपरिभाषा, पृ० २०।
३. न्यायपरिशुद्धिः, पृ० ६८।
४. स० द० सं०, पृ० १३।
५. तदेव, पृ० ४।
६. तदेव, पृ० ४।
७. चार्वाकदर्शन, आनन्दझा, पृ० १६१।
८. तदेव, पृ० १६९।

चार्वाकदर्शने प्रथमक्षणे ज्ञानेन्द्रियात्मकेन सूत्रेण विषयाणां प्रत्यक्षे विषय-सन्निधानम्, ततः शरीरावयवभूते मनसि तत्समर्पणम्, ततश्च शरीर एव चैतन्य-क्रियोत्पादनम्, मनस एव विलक्षणक्रियाशीलत्वात् प्रत्यक्षज्ञानं सम्भवति[1]। अभावप्रत्यक्षस्थले भावरहितस्य प्रभावः चक्षुरादिसूत्रस्य बाह्यमूले भवति, तदनन्तरम् इन्द्रियसूत्रे कम्पनं भवति, तदनुरूपं कम्पनं च मनस इन्द्रियेणापि गृह्यते, फलतः शरीरात्मनि तदभावस्याभावस्य चैतन्यात्मकक्रिया जायते, तदेवाभावप्रत्यक्षम्[2]।

चार्वाकमते प्रोक्तज्ञानक्रिया अनुमित्यादीनां परोक्षज्ञानानामपि सैव, सर्वविध-प्रतीतीनां तत्र प्रत्यक्षैकप्रमाणव्यपदेशात्। तत्र चार्वाकस्य तु एकेनैव प्रत्यक्षेण सर्व-प्रमागतार्थत्वात् तत्रत्या ज्ञानप्रक्रियाऽपि समानैव।

**बौद्धमते प्रत्यक्षप्रक्रिया—**

बौद्धमते कल्पनापोढमभ्रान्तमिति प्रत्यक्षमङ्गीकृतम्[3]। कल्पनामत्वं च अभिलापसंसर्गप्रतिभासप्रतीतिरहितत्वम्। अभ्रान्तमर्थक्रियाक्षमे वस्तुरूपे विपर्यस्त-मुच्यते, अर्थक्रियाक्षमं च वस्तुरूपं सन्निवेशोपाधिधर्मात्मकम्[4]। बौद्धमते निर्विकल्पक-मेव प्रत्यक्षप्रमाणम्, तत्तु स्वलक्षणमेव। धर्मकीर्तिना स्वयमेव निगदितं यत् सर्वाण्येव हि वस्तूनि दूरादस्फुटानि समीपे च स्फुटानि दृश्यन्ते, तान्येव स्वलक्षणानि[5]। नैयायि-कानां मते इन्द्रियाणां प्राप्यकारित्वं सन्निकृष्टार्थग्राहकत्वेन स्वीक्रियते; किन्तु बौद्धमते निर्विकल्पकमात्रमेव प्रत्यक्षसम्मतत्वेन इन्द्रियाणामप्राप्यकारित्वमङ्गीकृतम्।

बौद्धमते इन्द्रियाणि बाह्यजगतः सन्निकर्षेण तस्मादेकसंस्कारविशेषं प्राप्नुवन्ति, तदेव सन्तान इति कथ्यते। सन्तानेन सह तानीन्द्रियाणि चित्तं प्रबुद्ध्य तस्मिन्नेव चेतसि चैतन्याभिव्यक्तिं कुर्वन्ति। तदनन्तरमेव हि चेतसि नानाप्रकारकज्ञानानामुदयो-सम्भवति। आचार्यधर्मकीर्तिना प्रत्यक्षस्य क्षण एको ग्राह्यः, अध्यवसेयस्तु प्रत्यक्षबलो-त्पन्नेन निश्चयेन सन्तान एव इति कथनेन संतान एव हि प्रत्यक्षस्य प्रापणीयं मतम्। क्षणस्य प्रापयितुमशक्यत्वात्[6]। ग्राह्यप्रापणीयभेदेन प्रमाणस्य विषयो हि द्विविधम्। तत्र ग्राह्यो यदाकारमुत्पद्यते, प्रापणीयश्च यमध्यवस्यति। ततः प्रापणीयेनैव सन्तानद्वारा प्रत्यक्षत्वसम्भवः[7]।

इन्द्रियाणामप्राप्यकारित्वनियमेन प्रत्यक्षे निर्विकल्पकमेव ज्ञानं सम्भवति, प्रमाणसिद्धवस्तुजन्यत्वेन निर्विकल्पकमेव प्रत्यक्षं मतम्। तत्तु स्वलक्षणमेव। स्वलक्षण

१. चार्वादर्शन, पृ० १७१। २. चा० द०, पृ० १७३।
३. न्या० वि०, पृ० ८, स० द० स० पृ० ९८ प्रमाणसमु० प०।
४. न्या० वि०, पृ० ८। ५. तदेव–पृ० १६। ६. न्या० वि०, पृ० १६।
७. तदेव–पृ० १६।

विषयकमेव ज्ञानं प्रत्यक्षम्, अर्थजस्यैव प्रत्यक्षत्वात्। अर्थस्य च परमार्थतः सत एव तज्जनकत्वाच्च[1]।

सविकल्पकं तु निर्विकल्पेन गृहीतमर्थं नामजात्यादियोजनमेव। बौद्धमते नाम-जात्यादिज्ञानं स्वरूपमात्रेण सत्यम्, पश्चात्काले प्रकाशमागते नामजात्यादयस्तु कल्पनामात्रम्, तस्मादेव तन्न प्रत्यक्षम्। मानमेयोदये कल्पनापोढपदेन सविकल्पानां निरास इति ग्रन्थे उक्ताभिप्रायं प्रदर्शितम्[2]। सर्वदर्शनसंग्रहेऽपि सविकल्पकं निरस्तम्[3]।

नैय्यायिकानां जातिस्वीकारेण सिद्ध्यते तत्रानुगतप्रतीतिव्यवहारकार्यकारण-भावश्च, अतो नैय्यायिकमतं तुच्छमिदम्। बौद्धास्तु गोव्यक्तौ अनुगतप्रतीत्यादि-उप-पादनार्थं अतद्व्यावृत्तिस्वरूपमपोहं मन्यन्ते, तदेव स्वलक्षणम्[4]। कार्यकारणभावप्रति-पादनार्थञ्च तत्तत्कार्यानुकूलकुर्वद्रूपत्वरूपेण अनुगतत्वमेव हि आवश्यकम्। तस्मादेक-क्षणे एव स्वलक्षणानुरोधेन निर्विकल्पकमेव प्रत्यक्षप्रमाणम्, तदेव पारमार्थिकं च।

योगाचारास्तु विज्ञानमेवैकं तत्त्ववादिनः। तेषां मते बुद्धिः स्वयमेव स्वात्म-रूपप्रकाशिका प्रकाशवदिति मन्यते, बुद्धेः ग्राह्यग्राहकयोर्वैधुर्यात्[5]। अहमाकारक-मेवालयविज्ञानम्। नीलाद्याकारेषु पदार्थेषु अन्तरविज्ञानमेव बाह्याकारेण यद् गृह्यते, तदेव प्रवृत्तिविज्ञानम्[6]। विज्ञानवादिनां मते ज्ञानातिरिक्तं वस्तुसत्त्वैव नाङ्गीक्रियते।

बौद्धमते इन्द्रियाणि हि जडानि। चक्षुः-मनः-श्रोत्राणि दूरादेव स्वस्वविषयाणां ज्ञाने प्रभवन्ति। विषयेण सहैतेषां बाह्यसन्निकर्षो नावलोक्यते। अन्यानीन्द्रियाणि तु विषयसन्निकृष्टान्येव प्रत्यक्षत्वे प्रभवन्ति। षडेव इन्द्रियाणि मतानि सौगतमते ज्ञान-ग्राहकाणि। बौद्धदर्शने घ्राणरसनस्पर्शान्येव प्राप्यकारीणि, चक्षुः श्रोत्रे चाप्राप्य-कारिणी। इन्द्रियाणां प्राप्याप्राप्यकारित्वं **'अप्राप्ताक्षिमनःश्रोत्राणि त्रयमन्यथा'** इति अभिधर्मकोशेऽपि दिग्दर्शितम्[7]। प्रमाणसमुच्चये आचार्यदिङ्नागेन एतन्मत-समर्थने कथितम्—चक्षुःश्रोत्रे यदि विषयं प्राप्य गृह्णीतः, तदा यदिदं दूरे शब्दः, दूरेऽर्थ इति व्यवहितग्रहणम्, तन्न स्यात्, न स्याच्च अधिकपरिमाणादीनां पर्वतादीनां ग्रहणम्, प्राप्यकारिषु त्वग्रसनादिषु अस्य नियमस्यादर्शनादिति[8]। तत्र व्यवहितस्य अधिकपरिमाणस्य च ग्रहणाननुभवादिति पाणिनीयव्याकरणे प्रमाणसमीक्षायां मतमिदं समर्थितम्[9]। सविकल्पस्य प्रत्यक्षतया निषेधवचनमयुक्तमित्यपि तत्रैव प्रदर्शि-

१. तर्कभाषा, पृ० ७२।
२. मानमेयोदयः, पृ० २९।
३. स० द० सं०, पृ० ९६।
४. तर्कभाषा, पृ० ९६
५. स० द० सं०, बौद्धदर्शन, पृ० ७०।
६. तदेव, पृ० ८२।
७. अभिधर्मकोशः, २।४३।
८. प्रमाणसमु०, पृ० १०१।
९ पा० व्या० प्र० स०, पृ० ४५।

तम्। वस्तुतस्तु बौद्धानामर्थक्रियाकारित्वमेव सविकल्पकनिराकरणे न सम्भवति, तत्रैवार्थक्रियाकारित्वसम्भवात्।

**जैनमते प्रत्यक्षप्रक्रिया**

आचार्यहेमचन्द्रेण विशदः प्रत्यक्षमिति प्रत्यक्षप्रमालक्षितम्। तत्र शब्द-लिङ्गादिज्ञानं प्रमाणान्तरम्, तस्मान्निरपेक्षत्वं हि वैशद्यलक्षणम्[1]। आर्हतमते सम्यग्ज्ञानं पञ्चविधं भवति, मतिश्रुतावधिमनःपर्यायकेवलभेदेन[2]। तत्र मतिश्रुतज्ञान-मिन्द्रियनिमित्तजं मनःपर्यायकेवलज्ञानं चेन्द्रियानिमित्तजं भवति। मतिरूपप्रत्यक्ष-ज्ञानोत्पत्तौ अवग्रह-ईहा-अवायः-धारणा चेति क्रमाणि सन्ति निमित्तानि[3] तत्तदिन्द्रि-येष्वेव संवेदनमवग्रहः, संवेदनेन 'किमिदमिति विवक्षा जायते', तदा ध्वनिरिदमिति ज्ञानान्तरं 'कस्येदं ध्वनिरिति' ईहा मन्यते, तत्तु आचार्यहेमचन्द्रेण अवग्रहीतविशेषा-काङ्क्षणमोहेति सूत्रे लक्षितम्[4]। ततस्तृतीयक्षणे ध्वनिरिदमस्यास्तीति अवायावस्था प्राप्यते, तदेव ईहितविशेषनिर्णय इति निगद्यते[5]। ततश्च मनसो निश्चयाकारेण जायमानं ज्ञानं धारणा कथ्यते, तत्तु स्मृतिहेतुरिति निगद्यते[6]। अनया एव प्रत्यक्षानु-भवं जायते। द्वितीयं हि श्रुतज्ञानम्। श्रुतप्रत्यक्षे आप्तोपदेशादेव प्रत्यक्षसिद्धिः। श्रुतज्ञानपूर्वमतिज्ञानेनावश्यमेव भाव्यम्[7]। व्यावहारिकमिदं प्रत्यक्षम्।

परमार्थे हि विषये परोक्षज्ञानं त्रिविधम्, तत्तु अवधिज्ञानम्, मनःपर्याय-ज्ञानं केवलं चेति मन्यते। तत्र दूरदेशस्थस्थूलसूक्ष्मविषयाणां जीवात्मनः कर्माण्युपक्षये यत्किञ्चिद्रूपेण जायमानं ह्यवधिज्ञानम्। ईर्ष्यादिविनिर्मुक्ते अपरेषां मनोविज्ञानम्, अतीतानागतानां विषयाणां च ज्ञानं मनःपर्यायम्[8]। कर्मादिवासनानां पूर्णोपक्षयं गते अर्हतानामेव स्वरूपोपलब्धिजन्यं ज्ञानं च केवलम्, माधवाचार्येण अन्यज्ञानासंसृष्टं तपःक्रियाविशेषान्यर्थं सेवमानानां तपस्विनां ज्ञानं केवलमिति स्पष्टमुक्तम्[9]।

आचार्यहेमचन्द्रेण मुख्यसांव्यावहारिकभेदेन प्रत्यक्षं द्विविधं कथितम्[10]। प्रोक्तप्रत्यक्षं तु मुख्यप्रत्यक्षम्। तावत् सांव्यावहारिकं दृश्यते। येन प्रवृत्तिनिवृत्तिरूप-प्रयोजनं सिद्ध्यते, तदेव सांव्यावहारिकम्। इन्द्रियमनोभेदाद् द्विविधम्। इन्द्रियप्राधा-

---

१. प्र० मी०, पृ० ९-१०।
२. सर्व० द० सं०, पृ० १३७।
३. प्र० मी०, पृ० २।
४. तदेव सू० २७, पृ० २१।
५. तदेव -सू० २८, पृ० २१।
६. तदेव-सू० २९, पृ० २२।
७. स० द० सं०, पृ० १३८ मतिजनितं स्पष्टं ज्ञानं श्रुतम्।
८. स० द० सं०, पृ० १३८।
९. तदेव-पृ० १३८।
१०. प्र० मी०, पृ० १०।

न्याद् मनोबलाधानाच्चोत्पद्यमानं हि इन्द्रियजः। मनस एव जायमानो मनोनिमित्तः[1]। स्वसंवेदनरूपं प्रत्यक्षमिन्द्रियं मनोयोगिप्रत्यक्षे चान्तर्भवति, तस्मादेव तन्न पृथक्परिगणितम्[2]।

ज्ञानग्राहकाणि—स्पर्शरसगन्धरूपशब्दग्राहकाणि स्पर्शनरसघ्राणचक्षुःश्रोत्रेन्द्रियाणि द्रव्यभावभेदानि द्विविधानि प्रोक्तानि[3]। तत्र नामकर्मोदयनिमित्तानि हि द्रव्येन्द्रियाणि, तदावरणादीनामुपशमार्थनिमित्तानि भावेन्द्रियाणि[4]। तत्र कतिचिदिन्द्रियाणि जीवप्रत्यक्षेऽपेक्षित्तानि इत्यपि प्रमाणमीमांसाकारेण उद्दिष्टम्। स्पर्शनरसनेन्द्रिये कृमि–अपादिका–नूपूरक–गण्डपद–शंख–शुक्तिका–शम्बूका–जलूकाप्रभृतीनां त्रसानाम्। स्पर्शनरसनघ्राणानि पिपीलिका-रोहणिका-उपचिका-कुन्थु-तुबरक-त्रपुष-बीज-कर्पासास्थिका-शतपदी-अयेनक-तृणप-काष्ठहारकादीनाम्। स्पर्शन-रसन-घ्राण-चक्षूंषि-भ्रमर वटर-सारङ्ग-मक्षिका-पुत्तिका-दंश-मशक-वृश्चिक-नन्द्यावर्त-कीटक-पतङ्गादीनाम्। सह श्रोत्रेण तानि मत्स्य-उरग-भुजग-पक्षि-चतुष्पदानां तिर्यग्योनिजानां सर्वेषां च नारकमनुष्यदेवानामिति[5]।

प्रत्यक्षज्ञानाय ज्ञानविशेषप्रयोजकानि पञ्चेन्द्रियाणि एव मतानि। चेष्टाविशेषाणामानन्त्येन वाक्पाणिपादपायूपस्थलक्षणानि प्रत्यक्षत्वे न प्रयोजकानि[6]। जैनमते मनसः सर्वार्थग्राहित्वं सूच्यते[7]। तदपि द्रव्यभावभेदाद्द्विविधमेव। तत्र द्रव्यमनो मनस्त्वेन परिणतानि पुद्गलद्रव्याणि, भावमनस्तु अर्थग्रहणोन्मुखो व्यापारविशेष एव[8]।

प्राप्याप्राप्यकारित्वविषये चक्षुरिन्द्रियं विहाय चतुर्णामेवेन्द्रियाणां प्राप्यकारित्वमभिमतम्[9]। चक्षुरिन्द्रियस्य तु काचादिव्यहितस्यापि पदार्थस्योपलब्ध्या प्राप्यकारित्वं नेति साधितं प्रमाणमीमांसायाम्[10]। रूपादिविषयनियमितव्यापारत्वेन नातीन्द्रियेष्वर्थेषु प्रत्यक्षसम्भवः,[11] तथापि समाधिबललब्धजन्मकं योगिनां बाह्यार्थस्य वेदकत्वेनैव तदपि प्रत्यक्षमेव सिद्धम्[12]। अभावप्रत्यक्षस्थले तु इन्द्रियसन्निकर्षाभावाद् भूतलमेवाभावस्वरूपं तदतिरिक्तं घटाद्यभावो न प्रत्यक्षम्[13]।

---

१. प्र० मी०, पृ० १६।
२. तदेव–पृ० १६।
३. प्र० मी०, पृ० १६, सू० २१।
४. तदेव पृ० १७।
५. तदेव–पृ० १७।
६. प्र० मी०, पृ० १७।
७. तदेव–पृ० १७, न्या० भा० १।१।९।
८. प्र० मी०, पृ० १८।
९. आव० नि० ५, तत्त्वार्थसू० १।१९।
१०. प्र० मी०, पृ० २३।
११. तदेव-पृ० ११।
१२. तदेव–पृ० १२।
१३. तदेव–पृ० ९।

**सांख्ययोगनये प्रत्यक्षप्रक्रिया—**

सांख्यानां मते प्रतिविषयाध्यवसायो दृष्टमिति प्रत्यक्षस्य लक्षणम्[1]। सांख्ययोगौ प्रत्यक्षप्रक्रियामाश्रित्य नैय्यायिकादिभ्यो भिन्नमतवादिनावेव। अस्मिन्मते एकादशेन्द्रियाणि बुद्धिरहङ्कारश्च मिलित्वा करणानि त्रयोदशविधानि[2]। तेषु कर्मेन्द्रियाणामाहरणम्, बुद्धिरहङ्कारमनसां धारणम्, ज्ञानेन्द्रियाणां च प्रकाशनं प्रयोजनम्[3]। बाह्यविषयाणां ज्ञाने बाह्येन्द्रियाण्येव प्रभवन्ति, अन्तःकरणं तु वर्तमानातीतानागतानां विषयाणां ज्ञाने कारणम्।

रूपादिप्रत्यक्षे चित्प्रतिबिम्बिता बुद्धिः अहङ्कारस्य मनसश्च साहाय्येन चक्षुद्वारेण बहिर्निर्गत्य रूपेण संयुज्य तदाकारं गृह्णाति, पुनः विषयमिन्द्रियमार्गेण मनसि समर्पयति, मनश्चाहङ्काराय अहङ्कारश्च बुद्धौ विषयं प्रदर्शयति, अचेतना बुद्धिर्हि तदर्थग्रहणाय न प्रभवति; किन्तु तत्प्रतिबिम्बितचेतनपुरुषछायापत्त्या विषयज्ञानं प्रत्यक्षं भवति[4]। प्रत्यक्षाय इन्द्रियं हि द्वारम्, तस्मादेव इन्द्रियद्वारेण चित्तस्य बाह्यवस्तूपरागेण जायमाना विषयाकारपरिणामात्मिका वृत्तिरेव योगदर्शनेऽपि प्रत्यक्षत्वेन गृह्यते[5]। चित्तवृत्तौ विषयाकारपरिणामेन **'घटमहं जानामि'** इति घटप्रत्यक्षप्रकारः।

प्रत्यक्षप्रक्रियायां चक्षुषः विषये संयुज्य निर्विकल्पकरूपेणैव विषयज्ञाने सामर्थ्यम्। ततो मनसः संकल्पविकल्पव्यापारसम्भवेन निश्चयाकारवृद्धौ जायमानं विषयस्य निश्चयात्मकमेव विषयज्ञानं हि तत्त्वेन प्रत्यक्षम्। वाचस्पतिमिश्रेण तद्व्यापारमित्थंरूपेण निदर्शितम्—**'यथा हि ग्रामाध्यक्षः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति। विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये। तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति। मनश्च संकल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायाम्'**[6] इति।

ननु बुद्धिस्तु जडमेव, प्राकृतत्वात्, अतः प्रत्यक्षं दुर्वारम्, जडस्य निष्क्रियत्वात्, तन्न, चैतन्यस्वाभावात्मकेन पुरुषेण प्रतिबिम्बिता बुद्धिरालोचने प्रभवत्येव। द्विविधं ह्येतद् बिम्बप्रतिबिम्बनं सांख्यदर्शने मतम्। तत्र वाचस्पतिमिश्राभिमते बुद्धिरेव चित्प्रतिबिम्बं गृह्णाति, बुद्धेरेव कर्तृत्वस्वभावात्, पुरुषस्य च निर्लेपत्वात्, निर्गुणत्वात्

---

१. सां० त० कौ०, का० ५।
२. तदेव–का० ३२, पृ० २५७।
३. तदेव–पृ० २५८।
४. सां० त० कौ०, का० ५, पृ० १०६।
५. यो० द०, १.७।
६. सां० त० कौ०, का० ३६, पृ० २६७।

निष्क्रियत्वाच्च। अत एव बुद्धितत्त्वं पुरुषच्छायापत्त्या एव ज्ञानसुखादिग्रहणे प्राकृतत्वाद- चेतनमपि चेतनाद् भवतीति।[1] सांख्यभाष्यकारेण विज्ञानभिक्षुणा वाचस्पतिमिश्रकृतं प्रतिबिम्बभावं न दर्शितम्। तस्य मते हि पुरुषे एव बुद्धितत्त्वप्रतिबिम्बनं सङ्गतम्। पुरुषस्य स्वच्छधर्मत्वाद् बिम्बग्रहणसामर्थ्याच्च समस्तानां वस्तुदृष्टीनां पुरुषे एव प्रतिबिम्बनं सम्भवति[2]। वस्तुतस्तु निष्क्रियत्वाद् दर्पणस्वरूपत्वात् छायारहितत्त्वाच्च पुरुषे बुद्धेः प्रतिबिम्बनमेव सङ्गतं प्रतीयते।

पाणिनीयव्याकरणे प्रमाणसमीक्षायां सांख्यमतेन प्रत्यक्षोत्पत्तौ अष्टक्षणानां परिगणनं कृतमस्ति। तत्र प्रथमक्षणे महत्तत्त्वस्य अहंतत्त्वेन सह संयोगः, द्वितीयक्षणेऽहं तत्त्वस्य मनसा सह संयोगः, तृतीयक्षणे मनस इन्द्रियेण सह संयोगः, चतुर्थक्षणे इन्द्रियस्य घटादिविषयेण सह संयोगः, पञ्चमक्षणे इन्द्रियेण विषयस्य मनसे समर्पणम्, षष्ठक्षणे तस्य विषयस्य मनसा अहङ्काराय समर्पणम्, सप्तमक्षणेऽहङ्कारेण बुद्धौ समर्पणम्, अष्टमे क्षणे च बुद्धौ आत्मनः प्रतिबिम्बनम्, अथवा तस्या बुद्धेरात्मनि प्रतिबिम्बनमिति भवति प्रत्यक्षोत्पत्तिकालः[3]। अत्र द्विविधमेव प्रतिबिम्बनं दर्शितम् तत्तु 'बुद्धौ आत्मनः', 'बुद्धेरात्मनि' पदेष्ववगन्तव्यम्।

प्रत्यक्षात्मको व्यापारः क्रमशः सन्निहितश्चेति द्विविधः। तत्र सन्तमसान्धकारे विद्युत् सम्पातमात्राद् व्याघ्रमतिसन्निहितं पश्यति, तत्र युगपदेव वृत्तिचतुष्टयघटनात्। मन्दालोके च सम्मुग्धाकारमालोचनम्, यथाशरसिञ्जितं चौरं दृष्ट्वा अध्यवसायपूर्वकं तद्देशपलायनं क्रमशो व्यापारः[4]। सांख्यमते भावानामप्यनुपलम्भोऽष्टधा भवति, तत्रेन्द्रियदौर्बल्यमेव प्रधानं कारणम्[5]।

प्रत्यक्षत्वे हीन्द्रियाणां सहकारित्वमेवापेक्ष्यते, न तु प्राधान्यम्। न्यायमता- नुसारमयं विशेषोऽत्र। इन्द्रियसाहाय्यञ्च यथा नानाछिद्रघटनान्तरवर्तिप्रकाशस्य बहिर्निःसृत्य विषयाणां प्रकाशने छिद्राणामावश्यकत्वम्. अथवा जलाशयस्थस्य जलस्य क्षेत्रेषु तदाकारपरिणमने प्रणाल्यावश्यकत्वम्, तद्वदेव इन्द्रियाणां सहकारित्वम्[6]।

इन्द्रियाणां प्राप्याप्राप्यकारित्वमपि प्रदर्श्यते। सर्वेन्द्रियाणि हि विषयदेशं प्राप्येव प्रयत्क्षज्ञाने सहकारीणि। योगदर्शनेऽपि इन्द्रियाणां प्राप्यकारित्वमेव स्वीकृतम्[7]।

---

१. स० का०-का० ५०, १०६। २. सां० प्र० भा०–१।१।३।

३. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ० १९–२०।

४. सां त० कौ०, ३०, पृ २५०। ५. तदेव, का० ७,पृ० १३७।

६. सां त० कौ पृ० १५०, उद्धृतं सुषमाकारमतम्।

७, यो० भा०, १।८ तत्त्ववैशा०।

मनसः प्राप्यकारित्वमपि सांख्ययोगनये स्वीक्रियत एव[१]। न्यायमञ्जर्यामपि सांख्यमते भौतिकत्वेऽपीन्द्रियाणां प्राप्यकारित्वं साधितम्[२]।

सांख्यशास्त्रे बाह्यसत्त्वाभावानां शृङ्गगगनकुसुमादीनामनेकवारं चर्चा प्राप्यते। अनुपलम्भमात्रेण वस्तुनोऽभावो न ज्ञायते। अस्ति च सावयवत्वेन महत्त्वेन च शृङ्गादीनामपि शशादौ प्रत्यक्षयोग्यतेति। ग्रन्थदिशा भावोऽयं प्रबन्धे[३] स्फुटीकृतः।

**मीमांसकमते प्रत्यक्षप्रक्रिया—**

**मीमांसका** नैय्यायिकानामिव इन्द्रियार्थसम्प्रयोगजन्यत्वेन प्रत्यक्षमङ्गीकुर्वन्ति। मीमांसकैरपि ज्ञानमात्मन एव धर्मो मतम्। तदनुसारेणैव नैय्यायिकवदात्मनो मनसश्च संयोगः, मनस इन्द्रियाणां संयोगः, इन्द्रियविषयसंयोगश्च भवति आत्मनि ज्ञानोत्पादः, तदेव प्रत्यक्षम्[४]। न्यायवैशेषिकसिद्धान्तेन श्रोत्रस्याकाशत्वम्, शब्दस्त्वाकाशगुणः, एतेषां मते कर्णशष्कुल्यवच्छिन्नं दिग्विभाग एव श्रोत्र इत्यत्र विशेषः[५]। तत्र सन्निकृष्टेऽर्थे विशदावभासे विज्ञानजन्यत्वं हि इन्द्रियस्वभावम्[६]।

**भाट्टमीमांसका**श्चक्षुरादीनि षडिन्द्रियाणि प्रत्यक्षे स्वीकुर्वन्ति। तत्र कनीनिकान्तरगतं तैजसमिन्द्रियं चक्षुः, जिह्वाग्रग्रस्तो यासं रसनम्, नासान्तर्वर्तिनं पार्थिवांशं घ्राणम्, कर्णोदरवर्तिदिग्विभागं श्रोत्रम्, वायवीयं स्पर्शोपलम्भकमिन्द्रियं त्वगिन्द्रियम्, मनसश्च शरीरावच्छेदेन इन्द्रियत्वं मन्यन्ते[७]। यत्र वेदान्तिनो मनस इन्द्रियत्वं नेच्छन्ति, तत्रैव मीमांसका आन्तरं मन इन्द्रियं सुखादिज्ञाने इच्छन्त्येव[८]। मीमांसकाः पञ्चेन्द्रियाणां प्राप्यकारित्वं साधयन्ति, मनसश्चाप्राप्यकारित्वं ह्येतेषां सम्मतम्[९]। चाक्षुषप्रत्यक्षे चक्षुरिन्द्रियं पृथुतरपृथिवीधरादिदर्शनात् तावदेवाकारवद्भवति, तस्य तेजःप्रसरणस्वभावाद् दूरतरग्रहेष्वपि बाह्यतेजसा दूरतरस्थितानां शनैश्चरादिग्रहादीनामपि ग्रहणे प्रभवति। चक्षुषो दूरर्शने नैय्यायिका वेगातिशयं साधयन्ति, तन्न युक्तम्। वेगमात्रेण तदनन्तयोजनानां ग्रहणमसम्भाव्यमेव[१०]। एतानि चक्षुरादीन्द्रियाणि प्रत्यक्षेण न गृह्यन्ते, तेषामनुद्भूतरूपस्पर्शत्वात्।

---

१. यो० मा०, पृ० १०।
२. न्या० म०, पृ० ४९।
३. पा० व्या० प्र० स०, पृ० ९४।
४. मी० द० पा० १, सू० ४१।
५. शा० दी०, पा० १, सू० ४।
६. तदेव, पृ० ५३।
७. मानमेयोदयः, पृ० ११।
८. शा० दी०, ११४।
९. मी० द०, शाबरमा०—१।१।१३।
१०. मानमेयोदयः, पृ० १४।

तत्र सन्निकर्षस्तु द्विविधः—संयोगः, संयुक्ततादात्म्यञ्च[1]। तत्र चक्षुस्त्वगिन्द्रियाभ्यां पृथिव्यप्तेजसां संयोगेन ग्रहणम्। त्वक्संयोगेन वायोर्ग्रहणम्। चक्षुसंयोगेन दिङ्नभस्तमसां ग्रहणम्। शब्दस्य श्रोत्रसंयोगाद् ग्रहणम्। आत्ममनसोः जन्यसंयोगाद् विभुत्वेऽपि, कालस्य युगपदादिप्रत्यस्य तस्य सर्वेन्द्रियजन्यत्वात् सर्वैरपीन्द्रियैः संयोगाद् ग्रहणं भवति। रूपादीनां ग्रहे तु संयुक्ततादात्म्यसन्निकर्षः। जातिगुणकर्मादीनां ग्रहेऽपि संयुक्ततादात्म्यसन्निकर्ष एव[2]।

**प्राभाकरास्तु** संयोग-संयुक्तसमवाय-समवायभेदात् त्रयः सन्निकर्षवादिनः[3]। तत्र रूपत्वशब्दत्वयोरभावात्तत्र संयुक्तसमवेतसमवायसमवेतसमवायश्च नैयायिकवद् न गृह्येते। अभावस्य भावरूपेणैव विशेष्यविशेषणभावोऽपि न स्वीक्रियते[4]। रूपादिग्रहणे आलोकसहकृतानि इन्द्रियाणि निमित्तानि। तत्र शालिकनाथमिश्रेण इन्द्रियाणां निमित्तत्वं साधितम्[5]। बाह्यरूपादीनां प्रत्यक्षे सन्निकर्षचतुष्टयं कारणम्[6]। प्रत्यक्षोत्पत्तिक्रमश्च-आत्ममनस्सन्निकर्षस्ततो मन इन्द्रिसन्निकर्षः, ततो द्रव्येन्द्रियसन्निकर्षः, ततश्च रूपेन्द्रियसन्निकर्षश्च भवति। तत एव रूपादीनां प्रत्यक्षत्वम्[7]। मनः सम्बन्धापेक्षा तु सर्वविधप्रत्यक्षेऽपेक्ष्यते। मनसः सुखादीनां ग्रहणे सन्निकर्षद्वयं कारणम्–आत्ममनस्संयोगाख्यः सन्निकर्षः, सुखादिमनस्सन्निकर्षश्च संयुक्तसमवायलक्षणः मन्यते[8]।

प्रत्यक्षज्ञानं निर्विकल्पकसविकल्पकभेदेन द्विविधम्। तत्र शब्दागमशून्यं सम्मुग्धाकारज्ञाने निर्विकल्पकम्, शब्दस्मरणसहकृते जात्यादिविशिष्टविषये च सविकल्पकम्। वार्तिककृताऽपि बालमूकादिसदृशं जात्यादिकल्पनाशून्यं ज्ञानं निर्विकल्पकं मतम्[9]। सविकल्पे तु 'वेणुमानयम्', 'गोपोऽयम्' 'श्यामोऽयम्', 'गोविन्दोऽयम्' इति द्रव्यजातिगुणकर्मसंज्ञारूपाणि पञ्चकल्पना जायन्ते[10]। मीमांसकानां प्रत्यक्षप्रक्रिया अधिकांशेन नैयायिकानां समानैव। विशेषस्तु प्रदर्शित एव।

**शाब्दिकमते प्रत्यक्षप्रक्रिया—**

वैयाकरणैरिन्द्रियार्थसन्निकर्षजन्यचित्तवृत्तौ चैतन्यप्रतिबिम्बनं प्रत्यक्षप्रमा, तत्करणं च प्रत्यक्षप्रमाणमिति ग्रहीतम्[11]। यथा कूपादिजलं नालिकातो निर्गत्य केदारान्

---

१. मानमेयोदयः, पृ० १५।
२. तदेव, पृ० १५।
३. प्रक० पं०, पृ० १३४।
४. मानमेयोदयः, पृ० ११।
५. प्रक० पं०, पृ० १५२।
६. अत्र सन्निकर्षश्च प्रत्यक्षोत्पत्तिकालः। इन्द्रियार्थसन्निकर्षस्तु द्वयं त्रयं वा साधितमेव।
७. प्रक० पं०, पृ० १५४।
८. तदेव, पृ० १५३।
९. श्लो० वा०, १६९।
१०. मानमेयोदयः, पृ० २६।
११. वै० सि० ल० म०, टी० द्व०, पृ० २४७।

प्रविश्य तदाकारं गृह्णाति, तद्वदेव तैजसमन्तःकरणं चक्षुरादिप्रणालिकया विषयदेशं गत्वा विषयाकारं भवति। तद्विषयाकारग्रहणमेव वृत्तिपरिणामो वेति कथ्यते। सेयं वृत्तिर्बाह्यविषयाभेदेन बौद्धस्यार्थस्य भवति, अस्यामेव वृत्तौ चैतन्यप्रतिबिम्बद्वावेण अथवा वृत्तिद्वारेण विषयाणामेव साक्षिरूपे चेतने प्रतिबिम्बनम्, वृत्तिजन्यं फलमेव प्रकटतारूपा प्रमा। प्रमासाधनत्वेन वृत्तिरेव प्रत्यक्षप्रमाणम्[1]। शाब्दिकमते प्रत्यक्षोत्पत्तिः प्रबन्धे इत्थंरूपेण कृतमस्ति—'आत्मना बुद्धिः संयुज्यते, बुद्ध्या सहाहङ्कारः, ततस्तेन मनः, तेन च सहेन्द्रियाणि, तैश्च सह विषय इति पञ्चमक्षणे प्रत्यक्षज्ञानोत्पत्तिः[2]। शाब्दिकमते सांख्यदर्शनवद् एकादश इन्द्रियाणि मन्यन्ते, तत्र ज्ञानेन्द्रियाण्येव मनसा सह प्रत्यक्षत्वे कारणम्[3]।

इन्द्रियप्राप्यकारित्वं शाब्दिकैरपि प्रदर्शितम्। तत्र चक्षुरिन्द्रियस्यैव प्राप्यकारित्वम्, अन्येषां ज्ञानेन्द्रियाणां तु श्रोत्रवदप्राप्यकारित्वमेव शाब्दिकैरभिमतम्। चक्षुरिन्द्रियं विषयदेशं गत्वा विषये संयुज्य तद्विषयप्रकाशने प्रभवति[4]। तत्र महाभाष्यकारेण 'अपक्रामति ततस्माद्दर्शनमिति' उक्तम्[5]। आचार्यभर्तृहरिणापि चक्षुषःप्राप्यकारित्वं साधितम्[6]। वैयाकरणानां प्रत्यक्षप्रक्रिया सांख्ययोगवेदान्तमतानुषङ्गिनी विद्यते[7]।

**न्यायवैशेषिकनये प्रत्यक्षप्रक्रिया—**

प्रत्यक्षप्रक्रियामाश्रित्य न्यायवैशेषिकदार्शनिका इन्द्रियं प्राधान्येन कारणत्वेन स्वीकुर्वन्ति। न्यायमते इन्द्रियमेव प्रत्यक्षे प्रयोजकं बोध्यम्, तस्य प्राप्यकारित्वनियमात्। प्रत्यक्षप्रमास्थले आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियं विषयेण च[8]। तत एव प्रत्यक्षोत्पतिः। मतेऽस्मिन् प्रत्यक्षप्रक्रियानुरूपेणैव इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकमिति प्रत्यक्षनिर्वचनं कृतम्[9]। आत्ममनसः सन्निकर्षस्तु असाधारणं कारणम्; किन्तु मन इन्द्रियसन्निकर्ष एव आत्ममनसः सन्निकर्षस्य अन्यथासिद्धत्वेनासाधारणं कारणं मतम्। न्यायभाष्यकारेणापि मन इन्द्रियसन्निकर्षो विशिष्टकारणत्वेन गृहीतम्[10]। मनःसम्बन्धापेक्षा तु सर्वप्रमासाधारणम्। इन्द्रियमनः-

---

१. वै० सि० ल० म०, पृ० ३३६।
२. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ० ३९।
३. तदेव, पृ०, ५६।
४. तदेव, पृ० ४२।
५. म० भा० २।३, सू० २८।
६. वा० प०, १-८।
७. यो० द०, ७।३६।
८. तर्कसंग्रहः, दी०, पृ० ११९।
९. न्या० द०, पृ० १।१।४।
१०. न्या० भा०, पृ० २७।

संयोगस्तु प्रत्यक्षमात्रं प्रत्यसाधारणम्; किन्तु इन्द्रियार्थसन्निकर्षस्तु अत्यसाधारणरूपेण प्रत्यक्षप्रमायामेव सम्भवति केवलम्।

ईश्वरप्रत्यक्षे लक्षणसंगतिं विधातुं प्रोक्तलक्षणमतिव्याप्त्यव्याप्तिदूषणरहितं कर्तुं ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति ईश्वरप्रमासाधारणं लक्षणं नैयायिका वैशेषिकाश्च मन्यन्ते[1]।

नैयायिकमते चक्षुरादीन्द्रियाणि शरीरसंयुक्तानि, न तु तदवयवानि। तेषां मते इन्द्रियाणि षडेव। तत्र चक्षुः तेजोरूपं, श्रवणं व्योमरूपम्, घ्राणेन्द्रियं पार्थिवम्, रसनेन्द्रियं सलिलरूपम्, त्वगिन्द्रियं स्पर्शरूपं चेति मन्यन्ते। तत्र चक्षुषैव रूपज्ञानम्, स्पर्शनेनैव स्पर्शज्ञानम्, घ्राणेनैव गन्धज्ञानम्, रसनेनैव रसज्ञानम्, मनसैव सुखादिज्ञानमिति न्यायाचार्यभासर्वज्ञस्यापि सम्मतिरत्रोपस्थातुं शक्यते[2]। तथा च अक्षिपात्रस्थितं मध्यकृष्णश्वेतपिण्डात्मकं न नेत्रेन्द्रियम्; अपि तु तस्मादेव निर्गत्य विषयदेशसन्निकृष्टरश्मय एव हि तत्, चक्षुषस्तत्रैव प्राप्यकारित्वनियमात्। दूरस्थितान् विषयानपि वेगातिशयादेव रश्मयो व्याप्नुवन्ति, तदैव प्रत्यक्षं भवति[3]।

न्यायमते सर्वेन्द्रियाणि हि प्राप्यकारीणि। श्रीजयन्तभट्टः सर्वेन्द्रियाणां प्राप्यकारित्वं समर्थितवान् न्यायमञ्जर्याम्[4]। महर्षिगौतमेनापि 'दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः[5]' इत्यस्मिन् सूत्रे चक्षुषः प्राप्यकारित्वं स्पष्टमुक्तम्। भाष्यकारेणापि प्रमाणस्य तत्त्वविषयादिति ग्रन्थे 'व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः, व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात इति भाष्ये चक्षुषःप्राप्यकारित्वं निःसन्देहं मतम्'[6]। वैशेषिकदर्शनेऽपि इन्द्रियाणां प्राप्यकारित्वं साधितम्[7]।

चक्षुरिन्द्रियस्यैव अर्थदेशगमनम्, अन्येन्द्रियाणां तु स्वदेश एव विषयग्रहणसामर्थ्यम्। तत्र घ्राणस्य स्वदेशस्थस्यैव भवति सन्निकर्षः, रसनेन्द्रिये रसस्य भवति सन्निकर्षः, स्पर्शनमपि त्वगिन्द्रियदेशप्राप्यम्। श्रावणप्रत्यक्षे कदम्बमुकुलन्यायेन, वीचीतरङ्गन्यायेन वा शब्दधारा जायत इति श्रावणप्रत्यक्षत्वप्रकारः[8]। सुखदुःखादिप्रत्यक्षे तु आत्ममनःसन्निकर्ष एव, मनसापि इन्द्रियत्वात् प्रत्यक्षज्ञानं जायते।

---

१. न्या० सि० मु०, पृ० २०७।
२. न्यायसारः, पृ० १२।
३. मानमेयोदयः, पृ० १४।
४. न्या० म०, पृ० ५१।
५. न्या० द०, ३।१।५१।
६. न्या० द० वा० भा०, ३।१।५१।
७. न्यायकन्दली, पृ० २३।
८. त० सं० दी०, पृ० ११९।

इन्द्रियार्थयोः सन्निकर्षः संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेषणविशेष्यभावभेदेन षड्विधो भवति[1]। तेनैव द्रव्य-गुण-जाति-शब्द-शब्दत्व-अभावसमवायानां क्रमशो ग्रहणम्[2]। न्यायवैशेषिकमते येनेन्द्रियेण यद्वस्तुग्रहणं जायते, तेनेन्द्रियेणैव तद्गतजातिः, तदभावसमवायौ च गृह्यन्ते[3]।

उक्तं षड्विधं प्रत्यक्षं लौकिकं तु सामान्यलक्षण-ज्ञानलक्षण-योगजभेदात् त्रिविधम्[4]। तत्र अतीतानागतव्यवहितविप्रकृष्टनां विषयाणां प्रत्यक्षे सामान्यलक्षणम्, तत्रेन्द्रियसन्निकर्षाभावात्। असन्निकृष्टचन्दनखण्डे सौरभज्ञानं ज्ञानलक्षणेन मन्यते[5]। लक्षणशब्देन स्वरूपमवगन्तव्यम्, तच्च विश्वनाथेन इन्द्रियसम्बद्धविशेष्यज्ञानप्रकारकं कथितम्[6]। योगजस्तु युक्तयुञ्जानभेदतो द्विविधं भवति। तत्र युक्तस्य मनसा योगज-धर्मसहायेनाकाशपरमाण्वादीनां निखिलपदार्थानां ज्ञानं सर्वदैव भवति। युञ्जानस्य चिन्ताविशेषसहकृतेन ज्ञानं भवति[7]।

सर्वैरपि प्रभेदाः पुनः सविकल्पकनिर्विकल्पकभेदद्वयेनान्तर्भूतेति मन्यते। तत्र निष्प्रकारकं निर्विकल्पकम्, तस्य वस्तुस्वरूपमात्रावभासकत्वात्[8]। विशिष्टं नामजात्यादि-योजनासहितं सविकल्पकम्[9]। इन्द्रियसन्निकर्षातिरिक्तमपि कारणं प्रत्यक्षाय, तदा-लोकमुद्भूतरूपत्वञ्च[10]। आचार्यजयन्तभट्टः प्रत्यक्षोत्पत्तिक्रमनिर्धारणे चतुष्टयत्रयद्वय-सन्निकर्षानभिवदति। तत्र बाह्ये रूपादिप्रत्यक्षे प्रथमक्षणे आत्ममनःसन्निकर्षः, ततो मन इन्द्रियसन्निकर्षः, ततश्च इन्द्रियार्थसन्निकर्षः, चतुर्थक्षणे ज्ञानोत्पत्तिः सुखादिप्रत्यक्षे त्रयसन्निकर्षापेक्षा, तत्र चक्षुरादिव्यापाराभावात्। आत्मनि तु योगिनो द्वयोरात्ममन-सोरेव संयोगाज्ज्ञानमुपजायते, तृतीयस्य ग्राह्यस्य ग्राहकस्य तत्राभावात्[11]।

नैयायिकमते मनः परमाणुरूपं नित्यद्रव्यं चाभिमतम्, तस्मादेवास्मिन्मते प्रत्यक्षात्मिका वृत्तिर्परिणामो वा नाङ्गीक्रियते, मनसो विषयाकारपरिणामाभावात्[12]। एवमेव बुद्धिपरिणामोऽपि नाभिमन्यते, तस्य ज्ञानरूपगुणत्वात्[13]।

---

१. तर्कभाषा, पृ० ७३। २. तदेव, पृ० ७८ कारिका, अक्षजा इत्यादि।
३. तर्ककौमुदी, पृ० १०।
४. न्या० सि० मु०, का० ६३, पृ० २५०। ५. तदेव, मयूखटी०, पृ० १५४।
६. न्या० सि० मु० प्र० प०। ७. तदेव, पृ० २६१। ८. तर्कभाषा, पृ० ७८।
९. न्यायसारः, पृ० २०१। १०. तर्कभाषा, पृ० ७१।
११. न्या० म०, प्र० भा०, पृ० ७०। १२. तर्कसंग्रहः, प्र० ख०।
१३. न्या० द०, अ० १, सू० १५।

न्यायमते इन्द्रियं ह्यसाधारणं प्रत्यक्षाय, तस्मादेव तत्र सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्, तत्करणमिन्द्रियम्, तस्मादिन्द्रियमेव प्रत्यक्षप्रमाणमिति सिद्ध्यते[1]। दीपिकायामप्यसाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणं स्वीकृतम्[2]।

**अद्वैतवेदान्तनये प्रत्यक्षप्रक्रिया—**

'यत् साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः चैतन्यमेव प्रत्यक्षप्रमा इति गृहीतमद्वैत-मतानुयायिभिः प्रत्यक्षप्रमास्वरूपम्[3]। विषयाणि हि जडस्वरूपाणि। चित्प्रतिबिम्बितं चैतन्यमेव विषयदेशैक्यं गृहीत्वा तत्रान्तःकरणवृत्तिसाहाय्येनानावृताज्ञानेन विषय-प्रकाशने प्रभवति। अद्वैतनये चतुर्थक्षणे विषयप्रकाशनं भवति। तत्र प्रथमक्षणे मनस इन्द्रियप्रणाल्या विषयेण सम्बन्धः, ततो मनसो विषयाकाराकारितवृत्तिः, विषयाकृतवृत्तौ चैतन्यप्रकाशेन ततस्तत्रोपहिताज्ञानस्य नाशः, ततश्च विषयप्रकाशनमिति प्रत्यक्षज्ञान-प्रकाशनम्[4]। वेदान्तमते अन्तःकरणस्य विषयाकारपरिणाम एव वृत्तिरित्युच्यते[5]। यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं गृह्णाति, तथैवान्तःकरणमपि इन्द्रियद्वारेण विषयेण सह संयुज्य तद्वदेव भवति। तदेवान्तःकरणस्य वृत्तिरित्यभिधीयते। वृत्तौ चैतन्यप्रभावात् तत्रस्थाविद्या दूरीभवति, ततो विषयप्रकाशनेन प्रत्यक्षं ज्ञानं सम्भवति।

वेदान्तमते चैतन्यमेव ज्ञानस्वरूपमिति तदा सन्निकर्षाणां किं प्रयोजनमिति जिज्ञासायां संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्यवृत्तौ विनियोगः कथ्यते[6]। वृत्तिश्च चतुर्धा—संशय-निश्चय-गर्व-स्मरणभेदात्। तत्र मनोबुद्धिरहङ्कारचित्तानां क्रमश एव तत्तद्वृत्तिरिति वेदान्तपरिभाषायामुक्तम्[7]। उक्तसन्निकर्षद्वारा वृत्त्यवच्छिन्नं चैतन्यमेव प्रत्यक्षम्।

अनुमित्यादिषु नान्तःकरणवृत्तिविषयदेशे सम्भवति, तत्र चक्षुस्सन्निकर्षा-भावात्। रविकिरणवद् शोधप्रकरणमन्तःकरणस्य सम्भवति, तस्य तैजसत्वात्। तैजसमन्तःकरणं तु इन्द्रियछिद्रान्निर्गत्य क्षेत्राकारपरिणतं जलं तडागाद्यथा न भिद्यते, तथैव विषयाकारितं तैजसमन्तःकरणमपि मूलान्तःकरणाद् नान्यमेव।

वेदान्तमते चैतन्यं हि उपाधिभेदेन त्रिविधम्—विषयचैतन्यं, प्रमाणचैतन्यम्, प्रमातृचैतन्यञ्चेति। तत्र प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद एव ज्ञानगत-

---

१. तर्कसंग्रहः, पृ० ११९।
२. त० सं० दी०, पृ० १२०।
३. वे० प०, पृ० २०।
४. वे० प०, प्र० परि०।
५. तदेव, पृ० ३९।
६. तदेव, पृ० ७३।
७. तदेव, पृ० ७४।

प्रत्यक्षत्वं सिद्ध्यति। घटाद्यवच्छिन्नं च प्रमातृचैतन्यमिति व्यपदिश्यतेऽद्वैतनये[1]। उपाधिभेदादेव चैतन्यं त्रिविधं मतम्, वस्तुतस्तु चैतन्यमेकमेव। भिन्नदेशस्थितत्वेनैव हि उपाधिः भेदप्रयोजकः; किन्तु एकदेशस्थितत्वेन स एवाभेदप्रयोजको भवति। तस्मादेव प्रत्यक्षत्वे उपधेयचैतन्ययोर्न भेदव्यवहारः। यथा मठान्तर्वर्तिघटावच्छिन्नाकाशो मठावच्छिन्नाकाश एक एव, तद्वदेव विषयावच्छिन्नचैतन्यं प्रमाणचैतन्यं उपाधिभेदेनापि अभिन्नमेव[2]।

वेदान्तनये इन्द्रियजन्यत्वं प्रत्यक्षत्वं निमित्तं नास्ति; किन्तु योग्य-वर्तमान-विषयकत्वे सति प्रमाणचैतन्यं विषयचैतन्याभिन्नत्वमेव निमित्तम्। यथा **'सोऽयं देवदत्तः'** इति ज्ञाने बहिः निःसृतान्तःकरणवृत्तिद्वारेण देवदत्तावच्छिन्नवृत्त्यवच्छिन्नचैतन्ययोरभेदं गृह्यते।

वेदान्तनये प्रकारान्तरेण इन्द्रियजन्यं तदजन्यं चेति प्रत्यक्षं द्विविधम्, यथा सुखादिज्ञाने जायमानं ज्ञानं इन्द्रियाजन्यम्, मनसोऽनिन्द्रियत्वात्[3]। पञ्चेन्द्रियाणां स्वस्वविषयसंयोगेन इन्द्रियजन्यं ज्ञानम्।

इन्द्रियाणां प्राप्यकारित्वविषये मतन्त्विदम्—घ्राण-रासन-त्वगिन्द्रियाणां स्वस्वस्थानस्थितस्यैव गन्धरसस्पर्शग्रहणम्। तत्रैव प्राप्यकारित्वनियमात्। चक्षुःश्रोत्रे तु विषयदेशं गत्वैव स्वस्वविषयग्रहणे सम्भवतः। श्रोत्रस्य विषयदेशगमनमत्र विशेषः, तस्य परिच्छिन्नत्वात्, **'भेरीशब्दो मया श्रुतः'** इति अनुभवे श्रोत्रेन्द्रियं विषयदेशगमने प्रभवति। न्यायमतेन वीचीतरङ्ग-कदम्बमुकुलन्यायेन वा शब्दग्रहणं नोचितम्, कर्णशष्कुल्यामनन्तशब्दोत्पत्तिकल्पनागौरवात्। अत एवात्र त्रीण्येवेन्द्रियाणि स्वदेशस्थस्यैव विषयप्राप्यकारीणि। चक्षुःश्रोत्रे तु विषयदेशं गत्वैव प्राप्यकारीणि[4]।

**विशिष्टाद्वैतमतम्—**

विशिष्टाद्वैतसम्प्रदाये **'साक्षात्कारिप्रमाप्रत्यक्षम्'** इति प्रत्यक्षप्रमाणलक्षणम्[5]। विशिष्टाद्वैतिनः सत्ख्यातिवादिनः। अत एव सर्वं यथार्थमेव ज्ञानमत्र स्वीक्रियते[6]। शुक्तौ रजतमिदमिति स्थले, असन्निकृष्टरजतमपि रजतांशे प्रत्यक्षमेव, तत्क्षणभाविज्ञानानुरोधात्। न्यायशास्त्रवदत्रापि सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षं द्विविधमेव; किन्तु मतेऽस्मिन् द्विविधेष्वपि ज्ञानेषु विशिष्टविषयकमेव ज्ञानम्[7]। तत्र निर्विकल्पकं गुणसंस्थानादिविशिष्टप्रथमपिण्डग्रहणम्। सविकल्पकं तु सप्रत्यवमर्श-

---

१. वे० प०, पृ० ४१। २. तदेव, पृ० ७९। ३. तदेव, पृ० ४२-४३।
४. वे० प०, पृ० १४४। ५. न्यायपरिशुद्धिः, पृ० ७०।
६. मानमेयप्रकाशिका, पृ० ३। ७. श्रीभाष्यम्, पृ० ३५।

गुणसंस्थानादिविशिष्टद्वितीयादिपिण्डज्ञानम्[१]। बौद्धमते जात्यादिकं न गृह्यते, तन्न युक्तम्। यद्यपि प्रथमदर्शने अस्येदं सामान्यमयं तु विशेष इति नावधार्यते, द्वितीयादिदर्शने तु भवत्यत्रधारणम्। अत उभयमेव विशिष्टविषयकमेव ज्ञानम्[२]। एकजातीयद्रव्येषु प्रथमपिण्डग्रहणं निर्विकल्पकम्, द्वितीयादिपिण्डग्रहणं तु सविकल्पकमुच्यते। गवादिकं पश्यतो यदयमीदृशः कोऽपि पुशरिति भवति प्रत्यवमर्शरहितं ज्ञानम् तन्निर्विकल्पकं सजातीयकमपरं पश्यतः 'अयमपि स एवेति' इति द्वितीयपिण्डदर्शनं पूर्वानुभवजनितसंस्कारोद्बोधसहकृतेन प्रत्यवमर्शसहितं तत्सविकल्पकम्[३]।

ज्ञानप्रकारस्तु—आत्मा मनसा संयुज्यते, मन इन्द्रियेणेन्द्रियमर्थेन इति न्यायशास्त्रवदेव[४]। तत्रेन्द्रियाणां प्राप्यकारित्वविषये श्रीहरिजीवनदासशास्त्रिणेत्थं निरूपितम्—वृत्तिद्वारा सन्निकर्षो वेदान्तमते कथित एव। तत्र चक्षुषो वृत्तिरेव घटादिविषयदेशं गत्वा तद्ग्रहणं करोति; अन्यानीन्द्रियाणि तु स्वदेशप्राप्तार्थग्राहकाणि। वायोः श्रोत्रदेशप्राप्त्या भवति शब्देन श्रोत्रस्य सन्निकर्षः। दूरस्थगन्धस्य वायुवशात्समीपे आगते घ्राणेन्द्रियस्थसन्निकर्षः। त्वगिन्द्रियं च स्वसम्बद्धवस्तुप्रकाशने प्रभवतः, इदं तु अनुभवानुरोधादेव ज्ञायते[५]। अतः पञ्चेन्द्रियाण्येव प्राप्यप्रकाशकारीणि[६]।

एवं रीत्या दार्शनिकाः प्रत्यक्षप्रक्रियामाश्रित्य भिन्नमतय एव। तत्र न्यायवैशेषिक-मीमांसादर्शनेषु इन्द्रियार्थसन्निकर्षणं प्रत्यक्षेऽभिमतम्। मीमांसकानां प्रक्रिया अंशरूपेण भिन्ना। चार्वाक-बौद्ध-जैनमतेषु प्रक्रियेयं प्रदर्शितैव। सांख्य-योगनये सेयं प्रक्रिया समानैव। शब्दिकाः सांख्ययोगवेदान्तप्रणालीमनुसृत्य बौद्धार्थस्वीकारे विशिष्यन्ते। इन्द्रियाणां प्राप्याप्राप्यकारित्वविषये तत्र मतविशेषाणि दर्शितानि निबन्धेऽस्मिन्। एवं सन्निकर्षेऽपि विभेद एव। प्रत्यक्षोत्पत्तौ अपेक्षितक्षणभेदोऽपि मतप्रदर्शनसमये दर्शितं विवेचनसमये निबन्धेऽस्मिन्। एवं निबन्धे तत्र तत्र प्रत्यक्षप्रक्रियाघटकभेदो ऊह्य इति शम्।

• • •

---

१. यतीन्द्रमतदीपिका, पृ० ५।
२. तदेव-पृ० ५।
३. मानमेयप्रकाशिका, पृ० २२।
४. यती० म० दी०, पृ० ५।
५. मानमेयप्रकाशिका, पृ० २३-२४।
६. यती० म० दी०, पृ० ५।

# यामलतन्त्रस्वरूपविमर्शः

श्रीशीतलाप्रसाद उपाध्यायः
अनुसन्धाता,
सांख्ययोगतन्त्रागमविभागस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी

❀ ❀ ❀

सामान्यतया भारतवर्षे आस्तिक-नास्तिकभेदेन द्वादशदर्शनानि प्रसिद्धानि। तत्र जीवजगद्ब्रह्मणां स्वरूपलक्षणे याथातथ्येन निर्णीते स्तः। तत्तत्प्रवर्तकमहर्षिभिर्महतोत्साहेन विचारशास्त्रस्य दृढ़ां स्थापनां कृत्वाऽवयवभूतपदार्थानां निर्णयेन सह ब्रह्म-ईश्वर-अपूर्व-नैरात्म्य-अनेकान्तवाद-शरीरात्मवादादिमतसंस्थापनद्वाराऽयमर्थः सम्पादितो विचारित उपोद्बलितश्च; किन्तु तत्र लेशेनापि शिवशक्तिपदार्थयोः, प्रकाशविमर्शरूपयोश्चर्चा नायाति। नापि वर्गमातृकायां सर्वातिशायिप्रकर्षः प्रख्यापितो विचारितो वा। विचारशास्त्रप्रक्रमदृष्ट्या महतीयं त्रुटिः प्रतिभाति विपश्चिदपश्चिमानाम्। अतः शिवशास्त्रप्रणेतृभिः शिवशक्तीति पदार्थद्वयं स्फुटीकृत्य अस्या महत्त्यास्त्रुटेः परिमार्जनं व्यधायि। गच्छत्सु कालेषु शैवशाक्तदर्शनस्य प्रतिष्ठा साधकजनेषु उपवृंहिता। क्रियारूपेण जनजीवने प्रतिव्यक्तिमहत्त्या श्रद्धया युक्ता समाकृता च। तत्र शैवदर्शने विशरुद्रभैरवभेदेन तिस्रो विधा भेद-भेदाभेद-अभेदात्मना निरूपिताः।

शैवेषु शाक्तेषु चाद्वैतागमदर्शनेषु प्रकाशशब्दः शिवतत्त्ववाचकत्वेन, विमर्शशब्दश्च शक्तितत्त्ववाचकत्वेन प्रसिद्धः। शिवपारम्यवादिनः शैवाः, शक्तिपारम्यवादिनः शाक्ता इत्येव प्रधानभेद एतेषु दर्शनेषु दृश्यते। प्रक्रियान्तरं प्रायः समानमेव। अनयोर्दर्शनयोः सर्वसम्मत्या षट्त्रिंशत्तत्त्वानि स्वीकृतानि। तेषु तत्त्वेषु शुद्ध-अशुद्ध-मिश्रभेदेन तत्त्वानां विभाजनमपि प्राप्यते। शाक्तदर्शनेऽपि शक्तिपारम्यमेव महता कण्ठेन समुद्घोष्यते। अनयोर्दर्शनयोः संज्ञा आगमस्तन्त्रं वा चिरात् समादृता दृश्यते।

अभिनवगुप्तपादेन श्रीतन्त्रालोके प्रथमे आशीर्वादात्मके मङ्गलश्लोक उक्तम्—

**विमलकलाश्रयाभिनवसृष्टिमहाजननी भरिततनुश्च पञ्चमुख्यगुप्तरुचिर्जनकः।**
**यदुभययामलस्फुरितभावविसर्गमयं हृदयमनुत्तरामृतकुलं मम संस्फुरतात्**[1]॥ इति।

मम आत्मनो हृदयं जगदानन्दादिशब्दवाच्यं तथ्यं वस्तु, सम्यग्देहप्राणादिप्रमातृतासंस्कारन्यक्कारपुरःसरसमावेशदशोल्लासेन दिक्कालाद्यकलिततया स्फुरतात् कालत्रयावच्छेदशून्यत्वेन विकसतादित्यर्थः। तच्च कीदृक्? इत्युक्तम्—

१. श्रीतन्त्रालोके, प्रथमाह्निके, प्रथमः श्लोकः।

इति । "तत्" आद्यार्थंव्याख्यास्यमानं च तत् "उभयं" तस्य यामलम्, "तयोर्यद्यामलं रूपं स संघट्ट इति स्मृतः" इति वक्ष्यमाणनीत्या शक्तिशक्तिमत्सामरस्यात्मा संघट्टः[1] । अर्थात्, नास्ति उत्तरं यस्मात् तद् अनुत्तरम् । अमृतञ्चेति एतादृक् कुलं शुद्धस्वातन्त्र्यशक्तिरूपमेव, तत्र विमलकलाश्रयाभिनवसृष्टिमहाजननी शक्तिरेव ।

वर्णकलाया आधारेण **'वागेव विश्वा भुवनानि जज्ञे'** इति जगत्सृष्ट्यनुरूपा । अभिनवायां सृष्टौ बहीरूपतायां स्वातन्त्र्यलक्षणं महत्तेजो यस्याकारस्तथोक्ता । इत्येव गुणानां सृष्टिश्चिदानन्दघना शक्तिरेव संविदपरपर्याया । नान्यस्य सामर्थ्यम् एतादृग् अलौकिकसम्भारपरिपूर्णं भवितुमर्हति । जनकोऽपि परप्रमातृरूपः शिवः पञ्चशक्तिरूपेन्द्रियवृत्तिभिः स्वसामर्थ्यबलेन परिरक्षितो निखिलभावग्राससमर्थः समुद्दीपितपरप्रमातृभावः स्वात्ममात्रपरिपूर्णः शिव एव । एतादृग् अपूर्वशक्तिसम्भूतः प्रकाशितुमर्हेत् । एतादृग् विलक्षणम् उभययामलस्फुरणस्य भावविसर्गस्य केन्द्रीभूतं हृदयं सर्वशक्तिस्रोतःस्वरूपं तदेव हृदि विकसेत् चेद् जीवनयात्रायाः परमं मङ्गलावहं भवेत् । तदेव च शक्तिशिवात्मकयामलभावस्य शाश्वतं स्वरूपम् ।

अत एव जयरथो विवेके[2] शिवशक्तितत्संघट्टाख्ययोगिनीवक्त्राख्यदक्षिणवक्त्रादभेदप्रधानानां चतुष्षष्टिभैरवागमानां प्रादुर्भावं श्रीकण्ठीसंहिताप्रामाण्येन प्रदर्शयति । तत्रैव ब्रह्म-विष्णु-स्वच्छन्द-रुरु-आथर्वण-रुद्र-वेतालाख्यानां यामलानां नामानि वर्ण्यन्ते । अत्र सप्तैव यामलानि परिगणितानि । अष्टमस्य नाम न दृश्यते । देवीयामलमत्र अष्टमत्वेन परिगणयितुं शक्यते, तस्य तन्त्रालोकतद्विवेकयोर्बहुशः स्मृतत्वात् ।

शक्तिशक्तिमतः सामरस्यरूपं यामलतत्त्वम् । इदं परानपेक्षरूपेण स्वतः सिद्धम्, स्वत एव स्फुरति—इति अकार-हकारयोः समाहाररूपेण निष्पन्नमहंरूपं पराहन्तापर्यवसितम् । वस्तुगत्या अनुत्तरं सर्वोत्कृष्टं वस्तु, तदेव बोधस्वातन्त्र्यसमरसीभूतं तत्त्वं दर्शनस्यास्यात्मभूतं प्राणभूतं हृदयभूतं रहस्यम् ।

महेश्वरानन्दः प्रकाशविमर्शात्मनः परमेश्वरस्य यामलोल्लासादेवोभयविसर्गारणिस्वभावादुल्लासाद् उन्मेषनिमेषशक्तिद्वितययोगपद्यानुभूतिचमत्कारादेव शब्दार्थात्मनां षडध्वनामुत्पत्तिं पर्यन्तपञ्चाशिका-विरूपाक्षपञ्चाशिका-चिद्गगनचन्द्रिका-सौभाग्यहृदय-स्वच्छन्दतन्त्र-विज्ञानभैरवादिप्रामाण्येन प्रतिपादयति[3] । महाकवेः कालिदासस्य **'वागर्थाविव सम्पृक्तौ'** इति प्रसिद्धश्लोकमपि सोऽत्रैव स्मरति । तेनैव शिवयोगिनां यामली सिद्धिरपि चर्चिता[4] । प्रकाशविमर्शसामरस्यात्मकं यामलोल्लासस्वभावं

१. तत्रैव श्रीतन्त्रालोके, विवेके च, पृ० ४ ।
२. श्रीतन्त्रालोकविवेके, प्रथमाह्निके, पृ० ४०-४२ ।
३. महार्थमञ्जर्याम्, पृ० ६९ । ४. तत्रैव, पृ० १६४ ।

च परमेश्वरस्य प्रदर्श्य शिवशक्तिमेलापरूपं रुद्रयामलं व्यावर्ण्यते। तत एव रुद्रयामला-दीनां शास्त्राणां प्रादुर्भाव इति च।

यमलस्य भावो यामलम्, युगनद्धभावत्वम्। यमरूपस्य, यमलरूपस्य, युग्मरूपस्य, मिथो मिलितरूपस्य, परस्परं सम्मिलितस्वरूपस्य परिचिन्तनं मननं स्वानुभूतिभव्य-भावनं यामलस्य निश्चितोऽर्थः। एतादृशमर्थगर्भशास्त्रं "यामलम्" शास्त्रेषु सर्वत्रानु-शास्यते। यामलेऽपि शिवशक्तिसामरस्यरहस्ये मनीषा प्रतिष्ठाप्यते।

महामहेश्वराचार्येणाभिनवगुप्तपादमहोदयेन लिखितम्—"यामलं सङ्घट्टः" निर्विभागप्रश्नोत्तररूपस्वरूपप्रसरादारभ्य यावद्बहिरहन्तापरिगणनीयसृष्टिसंहारशत-भासनं यत्रान्तः, 'तदेतद् कुलोपसंहृतमेवेति'[1]। वस्तुत एकैव परा कालस्य कर्षिणो शक्तिः, शक्तिशक्तिमतोरभेदेन यामलत्वं प्रपद्यते। प्रकाशविमर्शलक्षणमौपाधिकभेद-मवभास्य यामलतामेति[2]। यामलस्य प्रत्यवमर्शे परिपूर्णोऽहमात्मकः परमशिवः प्रद्योतते[3]।

**यामलशब्दस्यार्थः**

तत्र कोऽयं यामलपदार्थः? इति जिज्ञासायां विविधग्रन्थालोडनपुरस्सरं शास्त्री-यम् अभिमतम् उपस्थाप्यते। शब्दकल्पद्रुमे[4] यामलपदस्य युगलम्, तन्त्रशास्त्रविशेष इति चार्थद्वयं प्रदर्श्यते। यामलभावस्य दार्शनिकी व्याख्या, ततः प्रसृतानां यामल-तन्त्राणां नामानि च पूर्वं परिगणितानि। यामलशास्त्रलक्षणञ्च—

**सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम्।**
**क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च॥**
**युगधर्मश्च संख्यातो यामलस्याष्टलक्षणम्॥** इति।

तच्च यामलं षड्विधम्, आदि-ब्रह्म-विष्णु-रुद्र-गणेश-आदित्य-यामलभेदादिति च वाराहीतन्त्रप्रामाण्येन तत्रैव प्रदर्श्यते। एतदेव व्याख्यानं वाचस्पत्येऽपि[5] दृश्यते। वामनशिवराम–आप्टेमहोदयेन संस्कृत-हिन्दीकोशेऽपि स एवार्थः प्रतिपादितः। वाचस्पत्ये[6] यामलानि श्लोकसंख्यानिर्देशपुरस्सरं निर्दशितानि वाराहीतन्त्रप्रामाण्येन—

यामलाः षट् च संख्यातास्तत्रादावादियामले।
द्वाविंशच्च सहस्राणि त्रयस्त्रिंशच्छतानि च॥
द्वितीये ब्रह्मसंज्ञे ते द्वाविंशतिश्च संख्यया।
सहस्राणि शतान्यत्र तान्येव कथितानि च॥

---

१. श्रीतन्त्रालोके, तृतीयाह्निके, श्लो०—६८।
२. तत्रैव, श्लो०—२३४। ३. तत्रैव श्लो०—२३५। ४. चतुर्थो भागः, पृ० ४०।
५. षष्ठो भागः, पृ० ४७७७। ६. चतुर्थो भागः, पृ० ३२२४।

तावत्संख्यासहस्राणि शतानि परिसंख्यया ।
विंशतिश्च तथा संख्या श्लोकाश्च विष्णुयामले ॥
कालसंख्यासहस्राणि वेदसंख्याशतानि च ।
पञ्चषष्टिस्तथा श्लोकाः कनिष्ठे रुद्रयामले ॥
नवश्लोकसहस्राणि त्रयोदशशतानि च ।
द्वाविंशतिस्तथा श्लोका गणेशयामलोत्तमे ॥
रविसंख्यसहस्राणि आदित्याख्ये तु यामले ।

सौन्दर्यलहर्या[1] व्याख्याकारेण लक्ष्मीधरेण यामलविषये एतदुक्तम्—'यमला नाम कामसिद्धाम्बा, तत्प्रतिपादिकानि तन्त्राणि यामलान्यष्टौ । तेषां गणो यामलाष्टकम्' इति ।

नागरीप्रचारिणीसभासम्पादिते "हिन्दीशब्दसागर 'ग्रन्थे[2] यामलं यमज-सन्तानो ग्रन्थविशेषश्चेत्येव प्रतिपादितम् । भारतीयदर्शनग्रन्थकृता श्रीबलदेवोपाध्या-येन[3] आगमानां विभागत्रयं निरूपितम् । तत्र सात्त्विकागमास्तन्त्ररूपेण, राजसा यामलरूपेण, तामसाश्च डामररूपेणेति ।

"लक्ष्मीतन्त्र, धर्म और दर्शन" इत्याख्ये ग्रन्थे[4] डॉ० अशोककुमारकालिया-महोदयेनाभेदपरकाणां भैरवागमानां विभागेषु तन्त्रालोकविवेकधृतश्रीकण्ठसंहिता-प्रामाण्येन यामलाष्टकस्यापि स्थानमुपन्यस्तम् । एतच्चास्माभिः प्रदर्शितमेव ।

डॉ० [5]प्रबोधचन्द्रबागचीमहोदयस्तन्त्राणां विभागद्वयं प्रकटयति, तत्र प्रथमं शास्त्रानुवर्तिरूपम्, अपरञ्च शास्त्राननुवर्तिरूपम् । आद्ये आगमयामलानां तथैतत् सम्बद्धानां तन्त्राणां स्थानम्, द्वितीये च कुलाचार-वामाचार-सहजयान-वज्रयानानां समावेशो वर्तते ।

मातृकाभेदतन्त्रे भूमिकायां[6] तन्त्रशास्त्रम् आगम-यामल-तन्त्रभेदतः प्रधानत-स्त्रिधा विभक्तम् । एतदतिरिक्तं डामरनामकोऽन्योऽप्येको विभागो वर्णितः । चतुर्णां समुच्चयस्तन्त्रनाम्ना तत्र व्यवह्रियते । तत्र वाराहीवचनञ्च—

आगमं त्रिविधं प्रोक्तं चतुर्थमैश्वरं स्मृतम् ।
कल्पश्चतुर्विधः प्रोक्त आगमो डामरस्तथा ॥
यामलञ्च तथा तन्त्रं तेषां भेदाः पृथक् पृथक् ॥ इति ।

---

१. सौन्दर्यलहरी, श्लो०—३१, लक्ष्मीधरीटीकायाम् ।
२. हिन्दी शब्दसागर, भाग–८, पृ० ४०६८ । ३. भारतीय दर्शन, पृ० ४७६ (१९७६ ई०) ।
४. प्रथमे संस्करणे, पृ० २-३ । ५. स्टडीज इन तन्त्राज, भाग १, पृ० ४४-४५ ।
६. सं०–चिन्तामणिभट्टाचार्यः (१९३३ ई०) पृ० २-३ ।

तन्त्राणि प्रधानतश्चतुष्षष्टिसंख्याकानि तत्र कथितानि—'**चतुष्षष्टिश्च तन्त्राणि यामलादीनि पार्वति**' इति। वाराहीतन्त्रोक्तं यामलाष्टकलक्षणं शब्दकल्पद्रुमे संगृहीतमेव।

**यामलोद्भवः**

सर्वोल्लासतन्त्रे[1] यामलानां समुद्भवः समुपवर्णितो वर्तते। तत्र प्रथमोल्लासे यामलस्य निगमस्य च संख्यापि प्रतिपादिता। तथा हि --

**सूक्ष्मेऽपि निर्मला या च स्थूले सा यामलं शिवे।**
**यामलोक्तं स्थूलरूपं सर्वशास्त्रस्य बोधनम्[2]॥**
**चतुःषष्ट्यागमः प्रोक्तः पञ्चधा निगमस्तथा।**
**यामलञ्च चतुर्धोक्तं तस्माच्छास्त्रं प्रकाशितम्[3]॥**
**निगमादागमो जात आगमाद् यामलो भवेत्।**
**यामलाद् वेदसञ्जातं वेदाज्जातं पुराणकम्[4]॥** इति।

नारायणीतन्त्रे[5] उमाशिवसंवादद्वारा यामलस्य उत्पत्तिविषयकमाख्यानं प्रकटितम्। तत्र शिवः शिवां प्रति यामलोत्पत्तिं प्राकाशयत्। यथा—

निगमात्मा महेशानि परमात्मागमो ध्रुवम्।
जीवात्मा यामलं प्रोक्तं बाह्यात्मा भेदरूपकम्॥
अङ्गानि च पुराणानि अङ्गस्याङ्गस्मृतिः प्रिये।
अन्यानि यानि शास्त्राणि तनूरुहाणि पार्वति॥
शास्त्रेण देवतारूपं जायते युगभेदतः॥ इति।

तत्र[6] यामलानां चतुष्षष्टिप्रकाराः प्रधानतया प्रतिपादिताः। तदेवमुद्घोषयता चतुर्युगीनं मतमुपन्यस्तम्। यथा—

सर्वयामलसंगीतं चतुष्षष्टिप्रकारकम्।
प्रधानमेतद् विज्ञेयं चतुर्युगमतं ध्रुवम्॥ इति।

सर्वोल्लासतन्त्रानुसारं[7] वासुदेव-गणेशकथाप्रसङ्गेन विभिन्नानां निगमागमानां निर्गमो निश्चितो दृश्यते। तद्यथा—

---

१. प्रथमोल्लासे, पृ० ३। २. तत्रैव, श्लो० १९। ३. तत्रैव, श्लो० २०।
४. सर्वोल्लासतन्त्रे, श्लो० २१। ५. तत्रैव, प्रथमोल्लासे, श्लो० २७-२८।
६. तत्रैव, द्वितीयोल्लासे, श्लो०, २०।
७. तत्रैव, प्रथमोल्लासे, श्लो० १७-१८।

वासुदेवोऽपि तच्छ्रुत्वा उवाच गणेशं प्रति ।
नन्दीश्वराय तद्वाक्यं निगमागमसम्मतम् ॥
गणेशेन प्रवक्तव्यं यामलेषु प्रकाशितम् ।
एवं परस्परं व्याप्त आगमो निगमः क्षितौ ।
चतुष्षष्ट्यागमः प्रोक्तः पञ्चधा निगमः शिवे ।
यामलञ्च चतुर्धोक्तं तस्माच्छास्त्रं प्रकाशितम् ॥

षडाम्नायतन्त्रे परब्रह्मणः परमात्मनः, तथा च शब्दब्रह्मणो वेदात्मकाद् यामलादिकं प्रादुर्भूतमिति श्लोकाख्यानेन प्रतिपादितम् । तत्र निगमाद् आगमस्य, तथा आगमाद् यामलादिकस्योत्पत्तिः कथ्यते[1] । सच्चिदानन्दवाचकं ब्रह्मसूत्रं निगमेषु[2], परमात्मनिरूपणं प्राज्ञपुरुषवर्णनञ्चागमेषु[3] । सकलं निष्कलञ्च सूत्रं यामलेषु[4] प्रकाशितमिति वर्णितम् ।

तन्त्रागमे शास्त्रे प्रेमास्पदं विज्ञानात्मा स्थूलः सूक्ष्मः स्वयं प्रकाशश्चेति त्रिधा निरूपितः[5] । काण्डद्वये प्रतिपादितं सकलं यामलं सिद्धं सम्पादितम्[6] । तथा च वृत्तिभाष्यसमन्वितं निगमसूत्रं तदुत्तरे प्रतिपादितम्[7] । अन्यत्र च यामलेभ्य एव चतुर्णां वेदानामाविर्भावः प्रदर्शितः । तथाहि ब्रह्मयामलसम्भूतस्त्रिगुणात्मक ऋग्वेदः[8] । प्रज्ञानं ब्रह्मेति तदीयं महावाक्यम् । ज्ञानविज्ञानसंयुतः सामवेदो विष्णुयामलात् समभूत्[9] । तत्त्वमसीति तदीयं महावाक्यम् । पितृदेवक्रियादिशक्तिज्ञानप्रतिपादक आथर्वणो वेदः शक्तियामलतः समभवत्[10] । 'अयमात्मा ब्रह्म' इति तदीयं महावाक्यम् । रुद्रयामलाद् यजुर्वेदः सम्भूतः । 'अहं ब्रह्मास्मि' इति तदीयं महावाक्यम् ।

पुनरत्रैव निगमागमयामललक्षणानि प्रदर्श्य चतुर्विधं यामलं प्रदर्श्यते । तदन्यदुपयामलमिति प्रोच्य च क्रान्तिभागे प्रचारितास्त्रिषष्टिचतुरास्तन्त्राः सूचिताः[11] । अत्रैव वेदाचार-पश्वाचार-वामाचारलक्षणानि प्रदर्श्य पुनरपि चिदात्मा निगमः, विद्यात्मा आगमः, अन्तरात्मा यामलमिति वर्ण्यते[12] ।

पराम्नायाः परायाः श्रियो मुखाम्भोजाद् यामलकिञ्जल्कजन्मेति रुद्रयामलस्य मतम्[13] । निगमादागमस्य, आगमाच्च यामलादितन्त्राणां प्रादुर्भावोऽप्यत्रैव प्रदर्श्यते ।

---

१. षडाम्नायतन्त्रे प्रथमे पटले, श्लो०–३ ।
२. तत्रैव प्रथमे पटले, श्लो०–२३ ।
३. तत्रैव ।
४. तत्रैव, श्लो०–२४ ।
५. तत्रैव, श्लो०–२६ ।
६. तत्रैव, श्लो०–२७ ।
७. तत्रैव, श्लो०–२८ ।
८. तत्रैव, श्लो०–२९ ।
९. तत्रैव, श्लो०–३० ।
१०. तत्रैव, श्लो०–३१ ।
११. तत्रैव, श्लो०–१२८ ।
१२. षडाम्नायतन्त्रे, श्लो०–१२९-१३२ ।
१३. परात्रिंशिका, पृ० १७८ ।

यामलानां विवरणम्

'ब्रह्मयामल-विष्णुयामल-रुद्रयामल-जयद्रथयामल-स्कन्दयामल उमायामल-लक्ष्मीयामल-गणेशयामलान्यष्टौ' इत्यर्थरत्नावलीकारः[१]। परन्तु सेतुबन्धेऽष्टयामल-नामक्रमे कश्चन व्युत्क्रमोऽवलोक्यते। नामान्येतान्येव। कुलचूडामणिभूमिकायां तु व्युत्क्रमविभ्रमेणान्य एवार्थः कल्पितः, ब्रह्मयामलस्य च तत्र समावेशोऽकारि। श्रीकण्ठीसंहितायान्तु ब्रह्मयामल-विष्णुयामल-स्वच्छन्द-रुरु-अथर्वण-रुद्र-वेतालाख्या-न्यष्टावेव यामलानि परिगणितानि; परन्तु सप्तैव यामलानि प्राप्यन्ते[२]। ब्रह्मयामले पीठानुसारं तन्त्राणां वर्गीकरणमपि क्रियते। तत्र विद्यापीठेऽष्टयामलानि सन्ति। तानि यामलानि रुद्र-स्कन्द-विष्णु-यम-वायु-कुबेर-इन्द्र नामभिः ख्यातानि[३]।

जयद्रथयामलेऽपि यामलाष्टकोल्लेखो वर्तते। यद्यथा—ब्रह्म-विष्णु-स्कन्द-गौतमीय-रुद्र-हरि-यामलानि[४]। सम्मोहनतन्त्रस्य षष्ठेऽध्याये शैव-वैष्णव-गाणपत्य-सौरादिभेदेन तन्त्रादीनां यद्विवरणं प्रस्तुतम्, यत्र यामलग्रन्थानामपि विवरणं दत्तम्। शैवे भेदे द्वे यामले, वैष्णवे एकं यामलम्, सौरे च द्वे यामले तत्र दृश्यन्ते[५]।

महासिद्धिसारतन्त्रे तन्त्राणां त्रयाणां विभागानां कल्पना क्रियते—रथक्रान्ता, विष्णुक्रान्ता, अश्वक्रान्ता चेति। स्वदृष्टिभेदेन प्रत्येकस्मिन् विभागे चतुष्षष्टिस्तन्त्राणि सन्ति। विष्णुक्रान्तायां चतुष्षष्टितन्त्राणां विभाजनक्रमे ब्रह्मयामल-यामल-रुद्रायामल-सिद्धयामलानि तत्र दृश्यन्ते[६]। कौलसाहित्यस्याचारप्रतिपादकेषु ग्रन्थेषु रुद्रयामलं देवीयामलञ्च प्राप्येते[७]। लक्ष्मीधरसंमत्या वामकेश्वरतन्त्रानुसारेण चतुष्षष्टितन्त्रेषु यामलानि यामलाष्टकेति नाम्ना उद्धृतानि[८]। तेषां क्रमः १५-२२ इति; परन्तु वामकेश्वरीमते तेषां क्रमः २३-३० इति दृश्यते[९]।

भास्कररायसंमत्या चतुष्षष्टितन्त्रेषु यामलानि यामलाष्टकनाम्ना वर्णितानि, तेषां नामानि च ब्रह्म-विष्णु-रुद्र-लक्ष्मी-उमा-स्कन्द-गणेश-जयद्रथयामलानि[१०]। रघुनाथतर्कवागीशविरचिते आगमतत्त्वविलासे प्रारम्भ एव तन्त्रग्रन्थानां एका सूची

१. नित्याषोडशिकार्णवे, पृ० ४३।
२. तान्त्रिक-साहित्य, म० म० गोपीनाथ कविराज, पृ० १९।
३. स्टडीज इन तन्त्राज, बागची, पृ० ६।
४. तान्त्रिक-साहित्य, पृ० २४, भूमिकायाम्। ५. तत्रैव।
६. तान्त्रिक-साहित्य, पृ० २३। ७. तत्रैव, पृ० ४९। ८. तत्रैव, पृ० २०।
९. काश्मीर सीरीज आफ टेक्स्ट एण्ड स्टडीज, नं० LXVI।
१०. तान्त्रिक-साहित्य, पृ० २०।

ग्रन्थकारेण दत्ता। अस्मिन् ग्रन्थे ब्रह्म-आदि-रुद्र-बृहद्-सिद्धयामलानि सन्ति[1]। रुद्रयामले श्रीयामल-विष्णुयामल-शक्तियामल-ब्रह्मयामलानि वर्ण्यन्ते। रुद्रयामलमेव तेषां यामलानाम् उत्तरकाण्डस्वरूपं मन्यते। अत एव प्रतीयते यदिदं यामलं सर्वप्रचलितं सर्वसमर्थितमिति।

एतेषु ग्रन्थरूपेणोद्धरणरूपेण वेमानि यामलानि समुपलभ्यन्ते। रुद्रयामलं मुद्रितमुपलभ्यते। आदि-आदित्य-कृष्ण-कूर्म-गणेश-ग्रह-जयद्रथ-ब्रह्माण्ड-बिन्दु-भैरव-मातृ-रस-विष्णु-शक्ति-शिव-स्कन्द-संकेत-सिद्धयामलानां च मातृका आफ्रेक्टबृहत्सूच्यां निर्दिष्टाः। तदतिरिक्तम् अघोर-उमा-कृष्ण-गणेश-ग्रह-गौरी-चन्द्र-जयद्रथ-जाम्बु-ज्ञान-देवीयामलानाञ्च मातृकाः समुपलब्धा निर्दिष्टाश्च[2]। एतेषां यामलग्रन्थानां नामानि विभिन्नेषु ग्रन्थेषु समुपलभ्यन्ते। तद्यथा—आदियामलं तन्त्रसार-नक्षत्र-समुच्चय-आगमतत्त्वविलासेषु, आदित्ययामलं तन्त्रसार-पुरश्चर्यार्णव-नक्षत्रसमुच्चयेषु, इन्द्रयामलं ताराभक्तिसुधार्णवे, उमायामलं चन्द्रोन्मीलन-दामोदरकृततत्त्वचिन्तामणि-शिवदासकृतज्योतिर्निबन्ध-परमशिवसहस्रनामस्तोत्रेषु, कल्पसूत्रयामलं योगिनी-तन्त्रभूमिकायाम्, कालीयामलं चन्द्रशेखरकृतकुलपूजनचन्द्रिकायाम्, कालोत्तरयामलं योगिनीतन्त्रभूमिकायाम्, कुलयामलं गोपीनाथकविराजकृते 'तन्त्र और आगमों का दिग्दर्शन' इति ग्रन्थे (पृ० ४५), कूर्मयामलं विश्वप्रकाशपद्धतौ, ग्रहयामलं प्राणतोषिणीसंग्रहे, गौरीयामलं ताराभक्तिसुधार्णव-पुरश्चर्यार्णव-समयाचारेषु, चन्द्रयामलं ताराभक्तिसुधार्णवे, ज्ञानयामलं तन्त्रमुक्तावल्याम्, तत्त्वयामलं प्रबोध-मिहिरोदये, तन्त्रसारधृतयामलं मातृकाभेदतन्त्रे (पृ० ६३), देवीयामलं ताराभक्ति-सुधार्णव-तारारहस्यवृत्ति-श्रीतन्त्रालोक-कुलप्रदीपेषु, नीलतन्त्रादियामलं मातृका-भेदतन्त्रे (पृ० १३), पञ्चयामलं शिवानन्दकृते कुलप्रदीपे, भानुयामलं नरपतिजय-चर्यायाम्, भैरवयामलं विज्ञानेन्दुकौमुदी लक्ष्मीधरसौन्दर्यलहरीटीका-कामकला-विलासटीकाचिद्वल्ली-विज्ञानभैरवटीका-अरुणामोदिनीषु, रत्नावलीकुलोड्डीशयामलम् उमानन्दनाथरचितनित्योत्सवे (पृ० ५), रसयामलं प्रयोगरत्ने, वामकेश्वरयामलं मातृकाभेदतन्त्रे सप्तमे पटले (श्लो० ३), विश्वयामलं चण्डीपत्रिकायाम् (सित०-अक्टूबर, १९८०, पृ० ६), विष्णुयामलं ताराभक्तिसुधार्णव-सर्वोल्लासतन्त्र-स्पन्द-प्रदीपिका-रुद्रयामलतन्त्र-आचारार्क-प्राणतोषिणीसंग्रहेषु, वीरयामलं शिवोपाध्याय-कृतविज्ञानभैरवटीकायाम्, शक्तियामलं पुरश्चर्यार्णव-शाक्तानन्दतरङ्गिणी-ताराभक्तिसुधार्णव-तन्त्रसार-रुद्रयामल-शक्तिरत्नाकरेषु, स्कन्दयामलं प्राणतोषिणी-

१. नोटिसेज आफ संस्कृत मैन्यु० बाई राजेन्द्रलाल मित्र, सं० ३।८६।

२. न्यू कैटलागस कैटलागरम-सूच्याम्।

संग्रहे तन्त्रालोके (२८.४३०) च, स्वच्छन्दयामलं योगिनीहृदयदीपिका-सौभाग्य-भास्कर-सुभगोदय-महामोक्षतन्त्रेषु, सिद्धयामलं कृष्णानन्दकृततन्त्रसार-आगमतत्त्व-विलास-मन्त्रमहार्णव-ताराभक्तिसुधार्णवेषु, संकर्षिणीयामलं श्रीतन्त्रालोकस्य जयरथटीकायाम् उपलभ्यन्ते स्मर्यन्ते च।

कृष्णयामल[1]-हंसयामलयो[2]र्मातृकाः सरस्वतीभवनग्रन्थालये दृश्यन्ते। समयाचारतन्त्रस्य पाण्डुलिप्यामपि[3] यामलानां संख्या निर्दिष्टा। वाराहीतन्त्रस्य पाण्डुलिप्यामपि[4] यामलानां संख्याः, अवान्तरभेदाः, श्लोकसंख्याः, लक्षणानि च वर्ण्यन्ते।

एवं च षडाम्नायतन्त्रे चतुर्विधयामलम्, वाराहीतन्त्रे षड्विधयामलम्, श्रीकण्ठीसंहिताप्रभृतिषु चाष्टविधं यामलमित्युक्तिः प्रायोवादमात्रम्। विशिष्टप्रकाराणां तन्त्राणां संज्ञा यामलमित्येव वक्तुं युज्यते, संख्यानिर्धारणं तु दुःशकम्। मुद्रितरूपेण मातृकारूपेण वा यानि यामलानि समुपलभ्यन्ते, तत्र यामललक्षणं घटते न वा? किञ्च तेषां स्वकीयं वैशिष्ट्यमिति वर्तते साम्प्रतं गवेषणाया विषयः। एतेषां यामलानां यावदुपलब्धः परिचयो यथावसरं प्रदास्यते।

### श्रीकृष्णयामलविषये किञ्चित्

प्राचीनकाले विभिन्नानां प्रस्थानानामवलम्बनं कृत्वा शाक्तमतं प्रचारितम्। एषु प्रस्थानेषु कौलिकमतं प्रधानमस्ति। अतिप्राचीने काले ऋषिणा दुर्वाससा सहास्य मतस्य सम्बन्ध आसीदिति श्रूयते। दुर्वासा श्रीकृष्णाय आगमशास्त्रस्य शिक्षाम् अदादित्यपि प्रसिद्धिरस्ति। युगान्तरे कामरूपपीठाद् मीननाथेन मत्स्येन्द्रनाथेन वा इदं मतं प्रचारितम्। किञ्चित् पूर्वं पुराणसंहिता[5] इति नाम्ना पुराणार्थविषयक एकः प्राचीनो ग्रन्थः प्रकाशितः। अस्मिन् ग्रन्थे प्राचीनपौराणिकधारानुमोदिता बहवः सिद्धान्ता प्रकाशिताः। तस्मिन् ग्रन्थे श्रीकृष्णलीलाविषयस्तान्त्रिकदृष्ट्या साधनागतदृष्ट्या च आलोच्यते। प्रसङ्गतया प्राथमिकलीला-व्यावहारिकलीला-प्रातिभासिकलीलानाञ्च सूक्ष्मं विवरणं तस्मिन् ग्रन्थे वर्तते। तत्र प्राचीनवैष्णवसम्प्रदायस्य कतिपये प्राचीनग्रन्था अपि उद्धृताः सन्ति।

---

१. सं० २४५३४, २४५३५, २४८७५, २६६७८। २. सं० २६२३६।

३. नोटिसेज आफ संस्कृत मैन्यु० बाई राजेन्द्रलाल मित्र, सं० ७५५।

४. नोटिसेज आफ सं० मैन्यु० बाई राजेन्द्रलाल मित्र, सं० २४८१।

५. तान्त्रिक साधना और सिद्धान्त : गोपीनाथ कविराज, पृ० २९०।

अनेन विवरणेन स्पष्टमिदं प्रतिभाति यद् वैष्णवसम्प्रदाये साधनायामपि लीलारहस्ये मूलतान्त्रिकरहस्यानि प्रतिपादितानि। प्रसिद्धवेदान्ताचार्यश्रीमद्भगवत्पादस्य श्रेष्ठगुरुणा गौडपादेन "श्रीविद्यारत्नसूत्रम्" इति नाम्ना उत्कृष्टतमतान्त्रिकग्रन्थो लिखितः। श्रीकृष्णयामलतन्त्रेऽपि योगस्य साधनायाश्च दृष्ट्या तान्त्रिकदृष्टिर्वैष्णवदृष्टिश्च सम्मिलिता प्रतिपाद्यते।

श्रीकृष्णयामलतन्त्रे इदम् उल्लिखितमस्ति यदूर्ध्वलोकस्यान्तर्गते स्वर्ग-महर्लोक-जनलोक-तपोलोक-सत्यलोकाश्च प्रसिद्धाः सन्ति। ब्रह्मलोकस्योपरि चतुर्व्यूहस्थानमस्ति। वैकुण्ठस्य दक्षिणतः संकर्षणो विद्यते। वैकुण्ठस्य अधस्तात् पश्चिमतश्च प्रद्युम्नः कामदेवो वा। कामस्योपरि उत्तरतश्च अनिरुद्धो वासुदेवश्च पूर्वे। इमानि स्थानान्येव सत्यलोकस्योपरि वैकुण्ठस्याधश्च अवस्थितानि सन्ति। चतुर्व्यूहस्योपरि ज्योतिर्मयवैकुण्ठधाम परमव्योम वा अस्ति। इदं चतुर्व्यूहमुपलक्षितानां चतुरस्राणां मध्येऽवस्थितमस्ति। अस्योपरि कौमारलोकः, यत्र ब्रह्माण्डरक्षकः कार्तिकेयोऽवस्थितः। एषामुपरि महाविष्णोः स्थानमस्ति। स एव सहस्रशीर्षा पुरुषः, तथा श्रीकृष्णस्यांशस्यांशाद् उद्भूतः। महाविष्णोर्मुखात् कारणसलिलम् उद्भूतम्। तस्मिन् सलिले महासंकर्षणोऽवस्थितः। एष संकर्षणः शेषस्यावतारभूतः, यमाश्रित्य शेषशायी भगवान् जाग्रत्स्वरूपे सुप्तवत् तिष्ठति। जगतः सृष्टिः प्रलयश्च अस्य भगवतो निःश्वास-प्रश्वासरूपे स्तः। कारणसमुद्रे अर्द्धोन्मीलितैः नेत्रैः महायोगिनो गोविन्दपादानां ध्याने मग्नाः सन्ति। तस्य वामपार्श्वे श्रीराधाया अङ्गाद् उद्भूता महालक्ष्मीरर्द्धोन्मीलितनेत्रैर्व्यंजनयति। परमपुरुषस्य गोविन्दस्य ध्यानेन महाविष्णोः पुलकोद्गमो जायते। प्रत्येकं रोमकूपे ब्रह्माण्डा आविर्भवन्ति। अन्तराले श्रीराधायाश्चिन्तनेन नेत्रकोणेभ्योऽश्रुधारा निर्गता भवति। वामचक्षुषो यमुना, दक्षिणचक्षुषो गङ्गा, मध्यतश्च गोमती उद्भूता भवति। तिस्रो धाराः पुनः कारणसमुद्रे प्रविष्टा भवन्ति। जगति ता धारास्तमः (कृष्णवर्णः), सत्त्वम् (शुभ्रवर्णः), रजश्च (रक्तवर्णः) इति नाम्ना प्रसिद्धाः सन्ति।

इत उपरि त्रिपुरसुन्दरीलोकोऽस्ति। अस्याः श्रीयन्त्रनाम्ना प्रसिद्धं पूर्णयन्त्रमत्र विराजते। सा कृष्णोत्पन्ना कृष्णरूपा च स्वयम्, रक्तवर्णा चतुर्भुजा चापि। सा एव शुक्लवर्णा वाणी, पीतवर्णा भुवनेश्वरी, रक्तवर्णा त्रिपुरसुन्दरी, श्यामवर्णा कालिका, कृष्णवर्णा नीलसरस्वती चास्ति। पराशक्तिर्दुर्गा साक्षात् कृष्णस्वरूपा। उक्तञ्च—'दुर्गाख्या पराशक्तिः साक्षात् कृष्णस्वरूपिणी'।

राधाकृष्णयोर्विपरीतरत्या दुर्गा रामश्च सम्भवतः। दुर्गैव गोविन्दो रामश्च, संकर्षण एव राधा वा। नित्यसृष्ट्यर्थं महाविष्णोरुदरे संकर्षणः प्रविष्टो भवति।

महाविष्णोर्नाड्यां गत्वा संकर्षणः कुण्डल्याकारो भवति। एवं सहस्रमुखो भूत्वा मुखरन्ध्राद् बहिर्गतो भवति। महाविष्णुरखिलब्रह्माण्डस्य सर्जनं धारणं संहारं च करोति। तदूर्ध्वं मध्यफणाचक्रे गौरीकुलनामको चक्रो विद्यते। तत्र भुवनेश्वरीरूपा दुर्गा विराजते। तत्र या देवी निवसति, सा कदाचित् श्यामा, कदाचित् कनकप्रभा चतुर्भुजा तथा कदाचित् शङ्खचक्रगदामुद्गरधारिणी भवति। तस्या निकटे च कालरूपा कालिका तिष्ठति। चक्रस्य दक्षिणतो नीलसरस्वत्या उग्रताराया वा जटाया वा स्थानमस्ति। ततः पश्चिमतः शुक्लवर्णा, शुभ्रसत्त्वमयी, ब्रह्मवाग्वादिनी नित्या अवस्थिता। पीतवर्णा भुवनेश्वरी छिन्नमस्तारूपेण परिणता। चक्रस्यास्योत्तरतो योगिनीगणो डाकिनीलाकिन्यादिभिरावृतस्तिष्ठति। तस्य उत्तरतो भुवनेश्वरी, पश्चिमतश्छिन्नमस्ता, दक्षिणतो नीलसरस्वती वाणी तथा पूर्वतः श्यामा दुर्गा कालिका वा तिष्ठति।

अनेन प्रकारेणोत्तरोत्तरलोकसंस्थानानां तथा दिव्यमण्डलावस्थानानां विशदं वर्णनं श्रीकृष्णयामलतन्त्रे प्राप्यते। अयं ग्रन्थः कृष्णतत्त्वरहस्यप्रतिपादनायैवाविर्भूत इति तन्त्रविदामाशयः। संक्षेपत उपर्युक्तं विवरणं श्रीकृष्णयामलतन्त्रस्य दिङ्मात्रनिर्देशकम्। अस्य विस्तृतं व्याख्यानं प्रकृतशोधनिबन्धे विविधप्रमाणपुरस्सरमुपस्थापितं वर्तते।

**श्रीकृष्णयामलस्य पाण्डुलिपीनां वर्णनम्**

(१) वाराणस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये सरस्वतीभवनपुस्तकालये चतस्रः पाण्डुलिपयः क, ख, ग, घ-संख्याका विराजन्ते[१]।

(क) पाण्डुलिप्याम् २०७० श्लोकाः सन्ति, १४–१०३, १०३–१३१ पत्राणि च देवनागरीलिप्याम्।

(ख) पाण्डुलिप्याम् २७ श्लोकाः सन्ति, १ पत्रमस्ति च देवनागरीलिप्याम्।

(ग) पाण्डुलिप्याम् १४०८ श्लोकाः सन्ति, २–१३ पत्राणि च देवनागरीलिप्याम्।

(घ) पाण्डुलिप्याम् ३१२ श्लोकाः, ७८–७९, ८३–८४, ८६–८९, ९१-९५ पत्राणि बंगलिप्याम्; परन्तु तत्रस्थाश्चतस्रोऽपि पाण्डुलिपयोऽपूर्णाः सन्ति।

(२) नारदव्याससंवादरूपेयं लिपिः। अस्याम् १४६० श्लोकाः सन्ति। अस्यां कृष्णस्य महिम्नः प्रतिपादनं कृतम्। वर्णिता विषयाः सन्ति—व्यासस्य नारदं प्रति

१. (क) सं० २६६७८, (ख) सं० २४५३४, (ग) सं० २४५३५, (घ) सं० २४८७५।

प्रश्नाः, शम्भोर्ब्रह्माणं प्रति प्रश्नाः, कृष्णरहस्यविषये ब्रह्मणो विष्णुं प्रति प्रश्नाः। आराध्येश्वरः कः ? अस्मिन् निर्णये विष्णोर्महाविष्णुं प्रति प्रश्नाः, वृन्दावनारोहण-वर्णनम्. विद्याधराणामागमनम्, विद्याधरेभ्यः कृष्णस्य शापः, विद्याधरेण सह नारदस्य निर्गमनम्, कृष्णस्य किङ्करोत्पत्तिः, मदालसोपाख्यानादिकम्, ऋतध्वजस्य पितृपुरप्रवेशः, कालयवनस्य भस्मीभूतवर्णनमित्यादि।

(३) इदं वैष्णवतन्त्रमस्ति। अस्यां लिप्यां कृष्णस्य महिमा, पूजाविधिरित्या-दिकं वर्णितम्। (अनूपपुस्तकालये, बीकानेरे, १२८४)।

(४) अस्यां लिप्यां ११२ श्लोकाः सन्ति। त्रिभङ्गचरितमात्रमेव पूर्णं प्राप्यते। (एशियाटिक सोसायिटी आफ बंगाल, ५८९१)।

• • •

# श्रीमद्भागवते श्रीकृष्णावतारतत्त्वविमर्शः

डॉ० विन्ध्येश्वरीप्रसादमिश्रः 'विनयः'
प्राध्यापकः,
संस्कृतविभागे, सागर वि० वि०, सागरम् (म० प्र०)

❀ ❀ ❀

अष्टादशपुराणेष्वन्यतमं भगवतः श्रीकृष्णचन्द्रपरब्रह्मणो लीलावतारचरितस्य चारुनिबन्धनं भवबन्धनध्वंसकरं भक्तिशास्त्रमिति विदितमेवास्ति शेमुषीजुषां विदुषाम्। भक्तितत्त्वस्य सहजसंसिद्ध्यर्थमवाङ्मनसगोचरं परतत्त्वं यया लीलया गोचरीभूतं सद् भजनीयतामायाति, सा ह्यवतारलीलेति निगद्यते विपश्चिद्भिः। यद्यप्यवतारलीलायाः सद्भावो वैदिकेषु ब्राह्मणग्रन्थेषूपनिषत्स्वपि च क्वचन मूलरूपेणान्विष्यते विद्वद्भिः; परं विस्तरं त्वस्य रामायण-महाभारत-पुराणप्रभृतिग्रन्थेष्वेव संदृश्यते। महाभारते (तस्य हरिवंशाख्यखिलभागे च) भगवतो 'वराह-नृसिंह-वामन-परशुराम-श्रीराम-कृष्णादीनां षण्णामेवावतारलीलानां वर्णनं दृष्टिपथमायाति। परवर्तिपुराण-ग्रन्थेषु चेयं गणना क्रमशो वृद्धिगता चतुर्विंशतिकोटिमाटीकते, तद्यथा—

१. वाराहपुराणे—दशावताराः;
२. नृसिंहपुराणे—दशावताराः;
३. अग्निपुराणे—दशावताराः;
४. वायुपुराणे—द्वादशावताराः।

श्रीमद्भागवतमवतारविषयकं सर्वतोऽप्यधिकं लोकसम्मतं पुराणम्। अस्मिन्नवतारवर्णनस्य त्रयः सन्दर्भा दृश्यन्ते, यथा—

(१) प्रथमस्कन्धे तृतीयेऽध्याये द्वाविंशावताराणां वर्णनम्।
(२) द्वितीयस्कन्धस्य सप्तमेऽध्याये त्रयोविंशावताराणां वर्णनम्।
(३) एकादशे, चतुर्थेऽध्याये षोडशावताराणामेव सङ्कलनम्।

सत्यप्येवंविधे वर्णनवैविध्ये प्रायशश्चतुर्विंशत्यवताराणां मान्यता एवात्राप्यूरीकृता प्रतीयते।

अवतरणम्—'अव' इत्युपसर्गपूर्वं 'तृ' धातोर्ल्युट्प्रत्ययेन निष्पद्यते व्याकरण-दृशा। अस्य दार्शनिकोऽर्थः परतत्त्वस्य प्रपञ्चे आगमनं क्रीडनं वा भवति। श्रीमद्भागवतानुसारेण भगवत्प्रकाशभेदेनावतारप्रकारा अपि भिद्यन्ते। अत्र आद्योऽवतारः

पुरुषसंज्ञकः[1], यस्मिन्नवतारे महत्तत्त्वादिप्राकृतपदार्थानूरीकृत्य षोडशकलोपबृंहितं लोकसिसृक्षाहेतुकं किमप्यलोकसामान्यं वपुः प्रादुर्भवति, तत् परमेष्ठीप्रजापतेर्ब्रह्मणो जन्मस्थानभूतस्यादिपद्मस्यापि कारणम्, सर्वेषां प्राणिपदार्थतत्त्वानामादिप्ररोहमिति कथ्यते। इदमेव कारणार्णवशायी विराडिति व्यपदिश्यते[2]। अयमेवाद्यपुरुषविग्रहः सर्वेषामवताराणामाश्रयः, मूलप्रकृतिश्च, यथा—

'एतन्नानावताराणां निधानं बीजमव्ययम्।' (श्रीमद्भा० १।३।५)

देवर्षिमनुष्यतिर्यक्षु भगवतो ये खल्ववतारा भवन्ति, ते सर्वेऽस्यैव भूम्नो लीलाऽवतारत्वेन स्वीक्रियन्ते, एतेषु केचन तदंशभूताश्चान्ये कलारूपाः; किन्तु श्रीकृष्णस्तु साक्षात् स्वयं भगवानेवेति सडिण्डिमं समुद्घुष्यते श्रीमद्भागवतकारेण, यस्याः सिद्धिरग्रे सिसाधयिष्यतेऽस्माभिः।

अतःपरं प्रकृतेः सत्त्वरजस्तमोगुणानां स्थितिसृष्टिसंहारप्रयोजकानां पृथक्पृथगाध्यक्ष्यं विधातुं यदा पुरुषोऽयं ब्रह्मविष्णुशिवेति संज्ञां त्रिमूर्त्तित्वं च भजते, तदाऽस्य गुणावतारोऽयमिति कथयितुं शक्यते[3]। इत्थं श्रीमद्भागवतमते पुरुषावतारगुणावतारलीलावताराश्चेत्यवतारस्य कोटित्रयी एव सम्मताऽनुमीयते।

एषु पुरुषावतारस्तु, क्षीरसिन्धुशायी विराड्विग्रहः श्रीनारायण एव, अस्यैव गुणावतारमध्ये पठितः सत्त्वगुणाभिमानी वैकुण्ठाधिपतिस्तत्तद्ब्रह्माण्डस्य पालयिता विष्णुः पृथक्पृथग् ब्रह्माण्डे पृथक्पृथग्रूपेण निवसति। प्रायश एकस्मिन्नण्डे सर्वेऽपि लीलाऽवतारा वैकुण्ठाधिपतेः श्रीविष्णोरेव भवन्ति; किन्त्ववतरणसमये पुरुषतादात्म्यतयैव ते गण्यन्ते, एवञ्च सर्वेऽप्यवताराः पुरुषस्यैवेत्यपि निर्णेतुं शक्यते। लीलाऽवतारेष्वपि परिपूर्णतमपूर्णतमपूर्णांशकलाऽऽवेशादिबह्वयो भिदाः सात्त्वततन्त्रराद्धान्तेषु स्वीकृताः; किन्तु श्रीमद्भागवतमहापुराणे त्वंशकलयोरेव द्वयोः शब्दत उल्लेखः समुपलभ्यते।

अंशकलयोरियं परिभाषा दीयते सम्प्रदायविद्भिर्यथा—'अंशस्तुरीयभागः स्यात् कला तु षोडशी मता' (सात्त्वततन्त्रम्–३।९)।

**श्रीकृष्णावतारकोटिविषयकः प्रश्नः**

इदानीमुदेत्ययं प्रश्नो यच्छ्रीमद्भागवते श्रीकृष्णस्यावतरणं भगवतः कीदृशोऽवतारः? ग्रन्थेऽस्मिन् एकतस्तु—'कृष्णस्तु भगवान् स्वयम्' इति प्रतिज्ञावाक्यपरतस्त्वंशकलाऽऽदिरूपेणापि श्रीकृष्णस्य वर्णनमिति मिथो विरोधः समुत्पद्यते। श्रीकृष्णस्य क्वचन पुरुषरूपेण, क्वचन वैकुण्ठाधिपतिविष्णुरूपेणापि वर्णनं दृश्यते। तद्यथा—

---

१. आद्योवतारः पुरुषः परस्य······(श्रीमद्भागवतम्–२।६।४१)।

२. तत्रैव, १।३।१,२,३,४। ३. तत्रैव, १।२।२३।

**(१) पुरुषावतारवद्वर्णनम्**

(क) वसुदेव गृहे साक्षाद्भगवान् पुरुषः परः ।
जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः ॥ (श्रीमद्भा० १०।१।२३) ।

(ख) दिष्ट्याम्ब ते कुक्षिगतः परः पुमान्···· ···· ···· । (तत्रैव—१०।२।४१)

(ग) इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ।
ब्रह्मेशानौ पुरोधाय देवा प्रतिययुर्दिवम् ॥ (तत्रैव—१०।२।४२)

(घ) 'विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः ।' (तत्रैव—१०।३।१३)

(ङ) अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ।
देवकी तमुपाधावत्···· ···· ···· ···· ॥ (तत्रैव—१०।३।२३)

(च) "रूपं यत्तत्प्राहुरव्यक्तमाद्यम्···· ··· ।" (तत्रैव—१०।३।२४)

(छ) "रूपं चेदं पौरुषं ध्यानधिष्ण्यम्··· ··· ।" (तत्रैव—१०।३।२८)

(ज) विश्वं यदेतत् स्वतनौ निशान्ते यथाऽवकाशं
पुरुषः परो भवान् । (तत्रैव—१०।३।३१)

**(२) परब्रह्मणो गुणावतारान्तर्गतसत्त्वाधिष्ठातृश्रीपतिविष्णुरूपवद्वर्णनम्**

(क) देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ।
आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ (श्रीमद्भा०-१०।३।८)

(ख) तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥
(तत्रैव—१०।३।९)

(ग) "स त्वं साक्षाद् विष्णुरध्यात्मदीपः" । (तत्रैव—१०।३।२४)

(घ) "उपसंहर विश्वात्मन्नदोरूपमलौकिकम् ।
शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥" (तत्रैव—१०।३।३०)

(ङ) "अदृश्यतानुजा विष्णोः···· ···· ···· ।" (तत्रैव—१०।४।९)

एवमन्येष्वपि प्रसङ्गेषु द्रष्टव्यम् ।

**(३) लीलावतारमध्ये अंशरूपेण वर्णनम्**

केचन श्लोका उदाह्रियन्ते, यथा—

(क) "तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंसनः ।" (श्रीमद्भा०—१०।१।२)

(ख) "अथाहमंशभागेन देवक्याः पुत्रतां शुभे ।
प्राप्स्यामि··· ··· ··· ···· ···· ॥" (तत्रैव—१०।२।९)

(ग) "भगवानपि विश्वात्मा भक्तानामभयंकरः ।
आविवेशांशभागेन मन आनक दुंदुभेः ॥" (तत्रैव—१०।२।१६)

(घ) 'ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी ।
दधार···· ···· ···· ··· ··· ···· ···· ॥' (तत्रैव-१०।२।४१)

(ङ) "प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ।
अवतीर्णौ जगत्यार्थे स्वांशेन बलकेशवौ ॥" (तत्रैव—१०।३९।३२)

**(४) लीलावतारान्तर्गतकलारूपेण वर्णनम्**

(क) भूमेः सुरेतरवरूथविमर्दितायाः
क्लेशव्ययायकलया सितकृष्णकेशः ।
जातः करिष्यति जनानुपलक्ष्यमार्गः
कर्माणि चात्ममहिमोपनिबन्धनानि ॥ (श्रीमद्भा०—२।७।२६)

इत्यस्मिन् श्लोके देवर्षिनारदं प्रति भगवतो भविष्यदवतारवर्णनप्रसङ्गे प्रजापतिर्ब्रह्मा, "श्रीकृष्णबलरामौ पुंसः श्वेतश्यामकेशाद्युपलक्षितकलाविशेषाविति" सूचयति ।

अन्यत्रापि,

(ख) तावाह भूमा परमेष्ठिनां प्रभुः···  ···· ।
द्विजात्मजा मे युवयोर्दिदृक्षुणा
मयोपनीता भुवि धर्मगुप्तये ।
कलावतीर्णाववनेर्भरासुरान्
हत्वेह भूयस्त्वरयेतमन्तिमे ॥ (तत्रैव-१०।८९।५९)

**एतस्य समाधानम्**-वस्तुतः श्रीमद्भागवतस्य विशिष्टां पारिभाषिकतां बिभर्ति । विद्वांसो यत्तत्त्वमद्वयज्ञानं वा ब्रह्मपरमात्मेति वा ह्यामनन्ति, तदेव महर्षिद्वैपायनः श्रीमद्भागवते भगवच्छब्देन व्यपदिशति, उक्तं च तेनैव—

"वदन्ति यत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥" (श्रीमद्भा० १।२।११)

शब्देऽस्मिन् परब्रह्मणो निर्गुणनिराकारसगुणनिराकारसगुणसाकारादयः स्वरूपभेदाः, सर्वे च लीलाऽवताराः प्रयोजनमनुग्रहीतुं शक्यन्ते । कार्यभेदात्स्थलभेदाच्चेदमेकमेव तत्त्वं नानादारुषु वह्निरिव परिव्याप्तं विद्योतितं च दृश्यते[1] । श्रीकृष्णस्तु सर्वेषां प्राणिजातानामात्मा एव, क्रीडनार्थमेवायं योगमायामाश्रित्य देहवानिव प्रतीयते । तस्य क्रीडासु भगवत्तत्त्वस्य सर्वमपि विलासं यथास्थिति स्फुरितमवलोक्यते ।

---

१. नानेव दारुषु विभावसुवद् विभासि । (श्रीमद्भा० ४।९।७)
यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ (श्रीमद्भा० १।२।३२)

अतः 'कृष्णस्तु भगवान् स्वयम्' इति कथने नास्ति तत्त्वदृशा काचिद्विप्रतिपत्तिः। भगवता कृष्णेन स्वीयावतारलीलायां यथाऽवसरं सर्वा भगवत्तत्त्वविच्छित्तयः प्रदर्शिताः क्रमेण, ता दिङ्मात्रमत्रोदाह्रियन्ते, यथा—

**श्रीकृष्णस्य पुरुषावतारवद्वर्णनं तल्लीलायां च पौरुषीशक्तेर्विनियोगः**

सर्वेऽवताराः पुरुषस्वरूपादेव समुन्मिषन्तीतिकृत्वा भगवतः पौरुषीशक्तिः सर्वापेक्षया विशिष्य वर्तत एव। प्रत्येकस्मिन्नवतारे आपाततो भूभारहरणं प्रधान-प्रयोजनत्वेन स्वीकुर्वते तज्ज्ञाः। भूभारहरणन्तु पौरुषी शक्तेरेव कार्यम्। श्रीकृष्णस्य पूर्णावतारेऽपि तस्यैव 'कला' काचिद् भूभारहरणायालं स्यादिति विचिन्त्य निपुण-मुपावर्णि महर्षिणा यत्—**'पुरैव पुंसावधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम्'** (श्रीमद्भा० १०।१।२२) इति।

यत्र श्रीकृष्णः पुरुष इति व्यपदिश्यते, तत्रैव व्यवस्थीयते यच्छ्रीकृष्णलीलासु यथाऽवसरं विराट्पुरुषस्यापि शक्तेर्विनियोगः समुल्ललास। दशमस्कन्धस्य केचन प्रसङ्गाः संख्यावतां विषयस्यास्य परिचयमाचेतुं क्षमन्ते, तद्यथा—

(क) श्रीमद्भागवते दशमस्कन्धस्य सप्तमेऽध्याये चतुस्त्रिंशच्छ्लोकादारभ्य सप्तत्रिंशत्पर्यन्तं बालकृष्णो जननीं यशोदां जृम्भणव्याजेन मुखं व्यादाय निखिलमपि ब्रह्माण्डभाण्डं भावयाञ्चकार। इयं पुरुषस्यैव स्वरूपशक्तिः।

(ख) तत्रैव मृद्भक्षणलीलाप्रसङ्गेऽप्येवमेव चराचरं प्रपञ्चजातं स्वस्मिन्नेव वदनसदने तेनादर्शि. येन भृशमुद्विविजे यशोदा, स्वीयमात्मजं चालौकिक-मजिज्ञपत्, यथा हि—

> **किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः।**
> **अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः[1]॥**

इदमपि पुरुषमाहात्म्यं, यतस्तस्मिन्नेव स्थास्नुजगदात्मकस्य विश्वस्य सद्भावः प्रत्यवतिष्ठते। श्रीकृष्णावतारे पौरुषीशक्तेः पर्यवसितिः प्रमाणयति प्रसङ्गोऽयमिति निश्प्रचमेव।

(ग) उलूखलबन्धनलीलायां श्रीकृष्णकटिनिबन्धने रज्जुसमूहानामपि द्व्यङ्गुल-न्यूनत्वमिममेवाध्यात्मिकं भावं विशदयति[2]।

(घ) दशमस्कन्धस्य त्रयोदशेऽध्याये विधिकृतवत्सगोपापहरणप्रसङ्गे, चतुर्दशेऽध्याये तत्कृतायां स्तुतौ चाप्यदसीयं विराड्वपुष्मत्त्वं सुतरां जरीजागर्त्येव। तत्र स्तुतिमातन्वता ब्रह्मणाऽभ्यधायि, यत्—

---

१. श्रीमद्भागवतम्—१०।८।४०। २. तदेव—१०।९।१२-१८।

क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः।
क्वेदृग्विधाऽविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम्[1] ॥

(ङ) यमुनाम्भसि निमज्जन्तमक्रूरं श्रीकृष्णेनासकृत् स्वीयं पौरुषं रूपं प्रदर्शितमित्यपि तस्य पूर्णावतारत्वमाकलयितुमलम्, यर्हि—

नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम्।
यन्नाभिजातादरविन्दकोशाद् ब्रह्माऽऽविरासीद् यत एष लोकः[2] ॥

इति स्तुवन्नक्रूरस्तस्य कारणार्णवशायित्वं जगतो मूलकारणत्वमेव च द्रढयतीति वचनं नासमीचीनम्।

**श्रीकृष्णस्य विष्णुरूपता, तल्लीलासु च वैष्णवीशक्तेः विनियोगः—**

अवतारप्रयोजनं सृष्टिसंरक्षणं साधुजनसम्पोषणमेव, तन्न संभाव्यते सत्त्वगुणाश्रयित्वं श्रीवष्णुविग्रहं व्यतिरिच्य। श्रीकृष्णः स्वावतारलीलायां यत्र तत्र जगत्पालकत्वेन परिकीर्तितस्तत्र तत्र विष्णुहरिश्रीपतिरित्यादिविशेषणैः विशेषेण विभूषितो विभ्राजते, यथाऽस्मिन् श्लोके—

अप्यद्य विष्णोर्मनुजत्वमीयुषो
भारावताराय भुवो निजेच्छया।
लावण्यधाम्नो भवितोपलम्भनं
मह्यं न न स्यात्फलमञ्जसा दृशः[3] ॥

भागवतस्य सूक्ष्मधियाऽनुशीलनेन एकं रहस्यं बोभवीति पुरतो यच्छ्रीकृष्णस्य शङ्खचक्रगदापद्माद्युपलक्षितं चतुर्भुजविग्रहं मथुराद्वारकाकुरुक्षेत्रादिस्थलेष्वेव प्रादुर्भवति, व्रजे त्वसौ द्विभुजः कमनीयगोपवेश एव। चतुर्भुजत्वमैश्वर्यपरिचायकम्, द्विभुजत्वं च माधुर्यसम्पोषकमिति माधुर्यमञ्जुलस्थले व्रजवृन्दावने वंशीविभूषितं द्विभुजगोपवेषमेवामुना जग्राहि। तत्र मधुरभाव एव वैशिष्ट्यमावहति, ऐश्वरभावस्यावश्यकता व्रजातिरिक्तमिदं प्रथमतया मथुरायामेवानुभूयते। तत्र श्रीकृष्णः सर्वदा चतुर्भुजो विष्णुस्वरूपः। जन्मसमयेऽपि स्वीयं वैष्णवरूपमेव रचयाञ्चकार श्रीकृष्णो यथा—

"देववयां देवरूपिण्यां विष्णुः सर्वगुहाशयः।
आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः॥
तमद्भुतं वालकमम्वुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम्।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम्[4] ॥

---

१. श्रीमद्भागवतम्—१०।१४।११।
२. तदेव—१०।४०।१।
३. तदेव—१०।३८।१०।
४. तदेव—१०।३।८-९।

वृन्दावनान्मधुपुरीमागते सति जरासन्धयुद्धावसरे भगवतः कृष्णस्य वैष्णव-स्वरूपप्रयोजनं विस्पष्टतयाऽवभासते, यथा—

चिन्तयामास भगवान् हरिः कारणमानुषः ।
तद्देशकालानुगुणं स्वावतारप्रयोजनम्[1] ॥
एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च[2] ॥

अत्रैव विष्णोर्दिव्यायुधानि दिव्यरथे निक्षिप्तानि आकाशादवतरन्ति—

"एवं ध्यायति गोविन्द आकाशात् सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया[3] ।"

भागवतकारो मुनिः प्रसङ्गेऽस्मिन् श्रीकृष्णस्य चतुर्भुजत्वं स्फुटं व्यनक्ति—'पृथुदीर्घचतुर्बाहुम्', 'चतुर्भुजोऽरविन्दाक्षः' ।

अतः परं श्रीकृष्णस्य द्वारकानिर्माणम्, श्रीरूपिण्याः रुक्मिण्याः[4] समुद्वाहश्च सर्वमेतत् तस्य वैष्णवीक्रीडामेव वितनोति । अनया दृष्ट्याऽसौ गुणावतारान्तर्गत-विष्णुरपि सिद्ध्यत्येव ।

**श्रीकृष्णस्यांशावतारवर्णनस्वारस्यम्—**

श्रीकृष्णस्यांशावतारवर्णनं सामान्यप्रतीतिं पुरस्कृत्यैव मुनिना विहितमिति श्रीधरस्वामिसदृशा आचार्यवर्या निगदन्ति, यथा—'अंशेनेति प्रतीत्यभिप्रायेणोक्तम्' ।

यथा कस्मिंश्चित्स्थलविशेषे प्रज्वलितोऽपि वह्निरन्यस्मिन् नात्यन्ताभावमवाप्नोतीति व्याप्तस्य तस्य तद्देशेंऽशरूपतैवाङ्गीक्रियते, तथा विश्वद्रीची भागवती-शक्तिरप्येकतः प्रादुर्भूताऽप्यन्यतः अप्रकटिता सती प्रादुर्भावप्रतीतिमंशरूपतामेव गमयति तत्त्वदृशा । प्रयोजनानुसारमेव शक्तिविस्तारमवताराणां भवति श्रीकृष्णावतारसमये भगवान् प्राथम्येन वसुदेवमनसि प्रविश्य पश्चाद् देवक्यां बुभूषति—'आविवेशांशभागेन मन आनकदुन्दुभेः ।'

---

१. श्रीमद्भागवतम्—१०।५०।६ । २. तदेव—१०।५०।९ ।
३. तदेव—१०।५०।११-१२ ।
४. 'वैदर्भी भीष्मकसुतां श्रियो मात्रां स्वयंवरे' (श्रीमद्भा० १०।५२।१६) ।
'रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णम्.......' (तत्रैव–१०।५४।६०) ।
'तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य' (तत्रैव–१०।६०।९) ।
'तावच्छ्री जगृहे हस्तं तत्परा परमेष्ठिनः' (तत्रैव–१०।८१।१०) ।
इत्यादौ रुक्मिण्यां श्रीरूपता मुखरतरैव ।

एवञ्च—'दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान् भवाय नः'[1] इति भगवतो मनसि कुक्षौ वा प्रवेशोंऽशविशेषेणैव संभाव्यते, अतोऽत्र 'अंश'-शब्द-स्वीकार एवोचितम्, देशकालादिपरिच्छिन्ने मनसि कुक्षौ वा कथं कालकलातीतस्य विश्वात्मनस्तत्त्वतः प्रवेशो वक्तुं शक्यते ?

एवमवतरणक्रमेंऽशरूपतां स्वीकुर्वन्नपि श्रीकृष्णः स्वीयानेकलीलास्वखिल-भगवत्ताप्रकाशमाहात्म्येन साक्षाद्भगवानेवेत्यस्मिन् सिद्धान्तिते तत्त्वे न काचिद् विसंगतिरिति सुवचमेव ।

**भगवतः कृष्णस्य कलाऽवतारवर्णनस्वारस्यम्—**

पूर्वोद्धरणेषु यत्र श्रीकृष्णः पुरुषस्य कृष्णकेशकलाद्युपलक्षितोऽवतार इति निगद्यते, तत्राप्ययमेवार्थो ग्राह्यः प्रेक्षावद्भिर्यच्छ्रीकृष्णचन्द्रभगवतो या भूभारापनो-दनादिक्रीडाः समभूवन्, तास्तस्य पुरुषविग्रहस्य लघीयस्यः कला एवासन् । परिपूर्णतमे कृष्णावतारे तादृक्कार्यजातानां तात्त्विकधिया नाधिकं महत्त्वमिति पुंसः कृष्णकेशत्वे-नैव ब्रह्मणा ता व्यपदिष्टाः । केशशब्दस्त्वंशुवाचको यथा महाभारते—

अंशवो ये प्रकाशन्ते ममैते केशसंज्ञिताः ।
सर्वज्ञा केशवं तस्मान्मामाहुर्मुनिसत्तमाः[2] ॥

तत्त्वमिदं नृसिंहपुराणे स्पष्टतया विव्रियते, यथा—

देवक्यां वसुदेवाच्च ह्यवतीर्य महीतले ।
सितकृष्णे च मच्छक्ती कंसादीन् घातयिष्यतः[3] ॥

इमं विवृण्वद्भिर्गौडीयवैष्णवाचार्यैः साधु निरधारि, यथा—'सितासिते च मच्छक्ती इति तच्छक्तिद्वारैव श्रीकृष्णेन तद्घातनापेक्षया[4]' इति ।

तात्पर्यमस्ति यच्छ्रीकृष्णविग्रहे याऽसुरसंहारिणी शक्तिः, सा तस्यैव पुरुषरूपस्य कलामात्रात्मिका । एतेन कृष्णावतारस्य दुष्टदलनात्मकप्रयोजनातिरिक्तं परमानन्दरस-विस्तारकत्वं परमं प्रयोजनमेवोल्लसति, न तु तस्य भगवत्तायाः काचिद् हानिरिति भागवतकृन्मुनेरभिप्रायः । श्रीमद्भागवते श्रीकृष्णावतारः साक्षाद्भगवतः परब्रह्मण एव लीलाविलास इत्यात्मवित्सम्मतं वचो न जातु विस्मृतिपथमानेतव्यं परिणत-शेमुषीकैः पण्डितैः ।

• • •

१. श्रीमद्भागवतम्–१०।२।४१ ।
२. महाभारतम्–शान्तिप० ३२८।४३ ।
३. नृसिंहपु०–५३।३२ ।
४. श्रीकृष्णसन्दर्भः–२९ ।

# कालसमीकरणम्

विद्यावारिधिः कृष्णचन्द्रद्विवेदी
ज्योतिषविभागाध्यक्षः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

कालसमीकरणशब्दस्यायमर्थो यत् कालयोः मध्यमस्फुटकालयोः समीकरणं तुल्यतासम्पादनम् ।

तत्र को नाम मध्यमकालः, स्पष्टकालश्चेत्यस्य विवेचनमत्रार्थादापतति । कालो हि रविभ्रमणेन सञ्जायते । रविश्च क्रान्तिवृत्ते भ्रमति, कालश्च नाडीवृत्ते गण्यते । तेन कालगणनायां वैषम्यं सञ्जायते । यदि रविः केवलं नाडीवृत्त एव भ्रममाणोऽभविष्यत्तदा नाडीक्रान्तिवृत्तोभयजन्यकालवैषम्यं तत्र नाभविष्यत् । अतः कालकलनार्थमिदं प्रथमं वैषम्यम् । अपरवैषम्यस्वरूपं त्वीदृग्विधं यत् सूर्यो न खलु तादृशे वृत्ते भ्रमति, यस्य केन्द्रं भूकेन्द्रं स्यात् । अतो हि मध्यमरविभ्रमणजन्यकालः स्पष्टरविभ्रमणजन्यकालतो वैषम्यमुपेतो भवति । आभ्यामेव वैषम्याभ्यां रवेर्मध्यमकालः स्पष्टकालतोऽन्तरितो भवति ।

तत्र मध्यमकालस्तु मध्यमगत्या नाडीवृत्ते मध्यमरवेर्भ्रमणेन सञ्जातो मन्यतेऽभियुक्तैः । तद्यथा वेङ्कटेशकेतकरः केतकीग्रहगणिते—

> ज्योतिर्विदो मध्यमकालमानं ज्ञातुं सदा मध्यमसायनार्कः ।
> नाडीवृत्तौ सञ्चरतीति मत्वा तस्योदये वासरमारभन्ते ॥

अस्यायमाशयो यन्नाडीक्रान्तिवृत्तसम्पातात् क्रान्तिवृत्ते चलितो मध्यमग्रहो यावतोंऽशानतिक्रामति, तावन्त एव नाडीवृत्तेऽपि भागा गृहीताश्चेत् तत्रस्थो रविः नाडीवृत्तीयसायनमध्यमार्कः; किन्तु रविः क्रान्तिवृत्ते भ्रमति । कालश्च नाडीवृत्ते गण्यते । तेन तादृशमध्यमरव्युपरि कृतं ध्रुवप्रोतवृत्तं नाडीवृत्तं यत्र स्पृशति, ततो मध्यमरवेश्चान्तरं नाडीवृत्ते क्रान्तिवृत्तीयमध्यमसूर्ययोरन्तरम् । एतच्चान्तरं भास्करादिज्योतिर्विद्भिरुदयान्तरमिति कथ्यते । यथोक्तं भास्कराचार्येण—

> मध्यमार्कभुक्ता असवो निरक्षे ये ये च मध्यमार्ककलाः समानाः ।
> तदन्तरं यत्स्फुटमध्ययोस्तद् द्युपिण्डयोः स्याद्विवरं गतिघ्नम् ॥
> हृतं द्युरात्रासुभिराप्तलिप्ता हीना ग्रहाश्चेदसवोऽल्पकाः स्युः ।
> तदन्यथाढ्यास्तु.............................कर्मग्रहणामुदयान्तराख्यम् ॥

अनया परिभाषयेदमवगतं यद् मध्यमरवेर्विषुवांशभुजांशयोरन्तरमुदयान्तरम्; अतोऽत्रोदयान्तरानयनं प्रस्तूयते। तत्र विषुवांशभुजांशयोरन्तरज्यारूपमुदयान्तरं यद्यप्यन्तरज्यानयनप्रकारेण साधितम्; तथापि तस्य गौरवग्रस्तत्वात् संक्षिप्तामुदयान्तरज्यानयनप्रक्रियामेव दर्शयामः—




चित्रम् १

क्षेत्रपरिचयो यथा—

सं वि = विषुवांशाः नाडीवृत्ते

सं रं = भुजांशाः क्रान्तिवृत्ते

सं उ = भुजांशा नाडीवृत्ते

सं उ − सं वि = वि उ चापांशा उदयान्तरम्।

तस्य ज्या उदयान्तरज्या। तस्यानयनमत्र क्रियते–विषुवांशः, भुजांशः, क्रान्त्यंश इत्यवयवत्रयात्मके चापजात्ये त्रिसकावयवगणितप्रसक्त्या—

$$\frac{१}{\text{कोज्या}} = \frac{\text{रविभुजास्प}}{\text{रविविषुवास्प}} \text{ योगान्तरनिष्पत्त्या}$$

$$\frac{१ + \text{कोज्या} \times \text{प क्रोज्या}}{१ - \text{कोज्या} \times \text{प क्रोज्या}} = \frac{\text{भुस्प} + \text{विस्प}}{\text{भुस्प} - \text{विस्प}} = \frac{\text{ज्या भु} + \text{वि}}{\text{ज्या भु} - \text{वि}}$$

ततः

$$\text{ज्या भु} - \text{वि} = \frac{१ - \text{कोज्या. प कोज्या}}{१ + \text{कोज्या. प कोज्या}} \times \text{ज्या (भु} + \text{वि)}$$

ततः सरलत्रिकोणमित्या

$$\text{ज्या (भु} - \text{वि)} = \text{स्प}^{२}\tfrac{१}{२}\text{ प कोज्या} \times \text{ज्या (भु} + \text{वि)}$$

विषुवभुजांशसमासशिञ्जिनीघ्नी परमापमदलभा कृतिर्हि सूक्ष्मा ।
उदयान्तरस्य जीवा भवति गणितगोलवितुष्ट्यै ॥

अत्रैव यदि विषुवांशभुजांशयोर्योगो नवत्यंशेन तुल्यस्तदा परमोदयान्तरज्या= स्प$^{२}\frac{१}{२}$ प कां × त्रि ।

अतः—

परमापमदलभाकृतिरिह निहता त्रिभजीवया सुसूक्ष्मा ।
परमोदयान्तरज्या सास्मादिह गोलमधिजिगांसूनाम् ॥

उपर्युक्तसिद्धान्तेन सिद्धमिदं यद् भुजांशः+विषुवांशः=९० तदैव परमोदयान्तरमिति ।

एवं परमोदयान्तरस्थले—

भुजांशः+विषुवांशः=९०=भु+वि

भु–वि=प० उदयान्तरम्

ततः संक्रमणेन

$\frac{९०+प० उ०}{२}$=भुजांशः × ४५° + $\frac{प० उ०}{२}$=वृ० राशिः ।

$\frac{९०-प० उ०}{२}$= वि०=४५–$\frac{प० उ०}{२}$ लघुराशिः ।

अत्र कियन्मिते भुजांशे परमोदयान्तरमिति विषये निजगाद महामहोपाध्यायः सुधाकरः—

त्रिज्येषु वेदांशगुणेन निघ्नी जिनार्धकोटिज्यकया विभक्ता ।
लब्धस्य चापेन समा भुजांशा यदा तदा स्यात्परमोदयान्तरम् ॥

अस्यायमाशयो यथा—




चित्रम् २

ग्र स ट=क्रांवृत्तम् । अत्र ग्र=ग्रहः अस्य भुजांशाः=संग्र विषुवांशाः=संवि-नाडीवृत्ते ग्रहस्थानान्नवत्यंशेन विहितं क प ट न वृत्तं ग्रसक्षितिजम् ।

अथात्र ग सं+संवि=९०° परमावस्थायामुदयान्तरस्य
तथा ग्र ट=९०° अतः सं ट विषुवांशसमं जातम् ।
विप=९०=भु+वि
ततः ९०°−विषुवांश=भुजांश=पवि−संवि=सं प
अतः संग्र संप भुजयोः समत्वाल्लम्बकरणेन
प ल=ग्र ल=४५°

$$\angle \text{ल सं ग्र} = \frac{१८०-२४}{२} = \frac{१८०-\text{जिनांशः}}{२} = ९०-\frac{\text{जि}}{२} = \text{जिनदलकोटि}$$

ततः लसंग्र त्रिभुजेऽनुपातः

$$\frac{४५° \text{ ज्या} \times \text{ल}}{\text{जिनदल कोज्या}} = \frac{४५° \text{ ज्या} \times \text{त्रि}}{\text{जिनदल कोज्या}} = \text{भुज्या}$$

चापं भुजांशाः, परमोदयान्तरस्थाने ।

यस्मिन् कस्मिन्नपि भुजांशे उदयान्तरस्यानयनं पूर्वोदितप्रकारतो भिन्नविधिना संशोधकेनानीतः । तस्योपपत्तिश्च यद्यपि चापीयत्रिकोणमित्या विषुवांशभुजांशयोरन्तर-ज्यास्वरूपे विषुवांशानां ज्याकोटिज्ययोः स्वरूपपरिवर्तनेनापि भवति; तथापि शङ्कुच्छिन्नक्षेत्रप्रकारेण सुगमतया तदानयनं सम्भवति ।




चित्रम् ३

यथात्र—

कल्प्यतां सं क र वि० सं=नाडीवृत्तम् । सं प म सं=क्रान्तिवृत्तस्य प्रत्येक-बिन्दुतो नाडीवृत्तधरातले विहितानां लम्बरूपक्रान्तिज्यानां मूले समुत्पन्नं क्रान्ति-वृत्तीयं दीर्घवृत्तम् ।

ततो हि प क=परमक्रान्त्युत्क्रमज्या=भूक-भूप=क प, म=कस्यापि भुजांशस्य मूलबिन्दुः। अत्र "म" बिन्दोः भूपलघुव्याससमानान्तरा रेखा न म र विहिता।

∴ भून=भुजांशकोटिज्या,

ततः संर=भुजांशः, भूभ=द्युज्या-वर्धिता सति नाडीवृत्ते 'बि' बिन्दौ लगति।

अतः संवि चापांशाः=विषुवांशास्तेन रविचापांशा विषुवांशभुजांशान्तररूपा उदयान्तरचापांशाः।

'र' बिन्दुतो भू वि त्रिज्यायां विहितो 'र य' लम्बः उदयान्तरज्या।

ततः त्रिभुज △म भू न, त्रिभुज △म र य अनयोः सरलजात्ययोः साजात्येन—

$$\frac{\text{भू न} \times \text{म र}}{\text{भू म}} = \text{म य} = \frac{\text{भु कोज्या} \times \text{म र}}{\text{द्युज्या}}$$ ।

ततो हि 'म र' मानं साध्यते—

दीर्घवृत्तलक्षणेन $\frac{\text{भू क}}{\text{प क}} = \frac{\text{न र}}{\text{र म}}$

$$\therefore \text{र म} = \frac{\text{प क} \times \text{न र}}{\text{भू क}} = \frac{(१-\text{प द्यु}) \times \text{भुजांशज्या}}{\text{त्रि}}$$ ।

त्रिस्योत्थापनेनोदयान्तरज्या =

$$= \frac{\text{भुज कोज्या} \times \text{भुजांशज्या} \ (१-\text{पद्य})}{\text{द्युज्या} \times \text{त्रि}} = \text{उदयान्तरज्या}$$ ।

अत्र त्रि = १

$$\frac{२ \ \text{भुज कोज्या} \times \text{भुजज्या} \times \text{पक्रां उज्या}}{२ \ \text{द्यु}}$$

$$\frac{\text{ज्या} \ २ \ \text{भुज} \times \text{पक्रां उज्या}}{२ \ \text{द्युज्या}} = \text{उदयान्तरज्या}$$ ।

**अत्र संशोधकपद्यमुपपद्यते—**

**मध्यात् खरांशोरयनांशयुक्ताद् द्विघ्नाद् भुजज्या बृहती विनिघ्नी।**
**परापमव्यस्तगुणेन दृग्ज्या द्युजीवयाप्ता उदयान्तरं स्यात्[1]॥**

---

१. मध्यात् खरांशोरयनांशयुक्ताद् द्विघ्नाद् भुजज्या बृहती विनिघ्नी।
परापमव्यस्तगुणेन दृग्ज्या द्युजीवयाप्ता ग्रहभुक्तिनिघ्नी॥
हृता द्युरात्रासुभिरालिप्ता ग्रहे विधेयाः स्वमृणं क्रमेण।
सहस्ररश्मौ युगयुक्पदस्थैः सुसूक्ष्ममेव ह्युदयान्तरं स्यात्॥
(सि० शि०, ग्रहगणिताध्याये, पृ० ६५)।

अथवा—

$$\frac{१}{कोज्यापा} = \frac{स्पभू}{स्पवि}$$

योगान्तरनिष्पत्त्या

$$\frac{१+कोज्या\ पा}{१-कोज्या\ पा} = \frac{स्पभु + स्पवि}{स्पभु - स्पवि} = \frac{ज्या\ (भु+वि)}{ज्या\ (भु-वि)} ।$$

$$ज्या\ भु-वि = \frac{१-कोज्या\ पा}{१+कोज्या\ पा} ज्या\ भु-वि$$

सरलत्रिकोणमित्या ।

$ज्या\ भु-वि = स्प^{२}\frac{१}{२}\ प\ म०\ ज्या\ (भु+वि) = परिणतज्या$

$ज्या\ वि-भु = स्प^{२}\frac{१}{२}\ पा०\ ज्या\ (भु+वि)$ ।

अत्र यदि—

भुजकोटिः क्रांतिवृत्तीयभुजांशास्तथा विषुवांशकोटिर्विषुवांशाः, एवं पा = परमक्रान्तिः स्वीक्रियते, तदा—

भु–वि=उदयान्तरम् । इत्यनेन मदुक्तं पद्यमुपपद्यते—

परमापदलभाकृतिरिह निहता त्रिभजीवया सुसूक्ष्मा ।
परयोदयान्तरज्या भवति गणितगोलवितुष्टचै ॥

भुजान्तरसंस्कारः—

पूर्वमभिहितं यद् रवेर्मध्यमस्पष्टकालयोर्यदन्तरं पतति, तस्य खण्डद्वयम् । प्रथमं तूदयान्तरसंज्ञकं व्याख्यातमेव । द्वितीयं भुजान्तरं मध्यमस्पष्टरव्योरन्तररूपं मन्दफलाख्यम् । मन्दफलस्यास्य यत्स्वरूपं पुरातनैः प्रतिपादितम्, तदधुना दृक्संवादं न भजत इति बहुशः परीक्षितचरम् । अतोऽधुनातनैर्दीर्घवृत्तीयसमीकरणेन यन्मन्दफलस्वरूपं प्रतिपादितम्, तदेवात्र गृह्यते ।

रवेरुच्चनीचस्थानयोर्मन्दफलाभावादस्य संस्कारस्य सत्तैव नास्ति । अनन्तरं तूच्चरेखयोरन्तरेणास्य समुत्पत्तिः । तत्र यदि मन्दकेन्द्रम्=म तदा दीर्घवृत्तीयसमीकरणेन मन्दफलज्या ।

$=२\ इ \times ज्या\ म$, ततो मध्यमरविः=स्पष्टरविः $\pm २\ इ\ ज्या\ म$ ।

स्पष्टमध्यमरव्योरन्तरमेव मन्दफलम् । तस्य च वर्षस्य प्रत्येकस्मिन् दिवसे भिन्नभिन्नरूपत्वाद् रवेर्मध्यमस्पष्टकालयोरन्तरे भिन्नरूपता समायाति । रवेर्मध्यमकालस्तु

सदा समरूपतामेव भजते। स्पष्टकाले हि मन्दफलजन्यवैषम्यं लक्ष्यते। मिथुनार्क-स्याष्टादशभागे रवेरुच्चगतत्वात् तत्रानेन संस्कारेण रवेर्मध्यमस्पष्टकालयोरन्तरं न पतति। साम्प्रतं धनुरर्कस्याष्टादशांशेऽपि रवेर्नीचगतत्वादस्य संस्कारस्य शून्यत्वमेव। षण्मासाभ्यन्तरं संस्कारस्यास्य ऋणत्वान्मध्यमकालः स्पष्टकालतोऽधिकमेव भवति।

एवमेव धनुरर्कस्याष्टादशभागतो मिथुनार्कस्याष्टादशभागं यावद् मन्दफल-संस्कारस्य धनगतत्वाद् रवेर्मध्यमकालः स्पष्टकालतो न्यून एव भवति।

कन्यार्काष्टादशभागे संस्कारस्यास्य परमत्वं भवति, तेन तत्र रवेर्मध्यमस्पष्ट-कालयोरेतत्संस्कारजन्यमन्तरं परमृणं ७.७ मिनटात्मकं भवति, तथैव मीनार्कस्याष्टा-दशांश एतावदेवान्तरं स्पष्टमध्यमकालयोर्धनात्मकं भवति।

पूर्वोक्तमुदयान्तरसंस्कारजन्यं रविमध्यमस्पष्टकालयोरन्तरं २१ मार्च २२ सितम्बरयोर्वसन्तशरत्सम्पातकालयोः शून्यं भवति, तथैव २१ जून २१ दिसम्बरदिवस-योरपि दक्षिणायनोत्तरायणारम्भकालयोरप्येतदन्तरं शून्यं भवति। मध्ये प्रथमपदे मध्यमकालतः स्पष्टकाल ऊनो भवति, द्वितीयपदे चाधिकः। पुनस्तृतीयपद ऊनः, चतुर्थपदे चाधिकः।

अतो वर्षस्य प्रत्येकदिनाङ्क उभयोः संस्कारयोर्धनर्णतावशेन मध्यमस्पष्टरवेः कालयोर्यदन्तरं पतति, तत्कालसमीकरणमिति व्यपदिश्यते।

तत्र परमोदयान्तरमानं तु पूर्वसमीकरणेन—

परमोदयान्तरज्या=स्प$^{2}$ $\frac{1}{2}$ परमक्रांति × त्रिज्या

परमक्रातिः=२३°। २६′। ४०″

अस्यार्धं $\frac{1}{2}$=११°। ४३′। २०″

लघुरिवथ्यं स्प$\frac{1}{2}$ २३°। २६′। ४०″=९.३१७००६६

लघु स्प$^{2}$ ११°। ४३′। २०″=१०-८.६३४०१३२-१० परमोदयान्तरज्या

तदा ८.६३४०१३२=प० उ० अंज्या लघु०

अस्याश्चापं=२°। २८′। ५५″ अस्य मिनटात्मकम् मानम्= मि० ९।५५ से०। ४० प्र० से०=परमोदयान्तरकालः

परमोदयान्तरकालः= ९.९ मिनटात्मकः।

परममन्दफलम्=७.७।

परमभुजान्तरकालः=७.७ मिनटात्मकः।

रवेः "२ इ" इदं १°। ५६ 'इत्यस्य ज्या भवति, तेनैतत्समुत्थः' कालः ७.७ मिनटात्मको भवति। तत्कालसमीकरणम्=मि० ९.९ ज्या २ भु=मि० ७.७ ज्या म० के०। अत्र हि स्वल्पान्तराद् द्विगुणद्युज्याहरस्त्रिज्यातुल्यः कल्पितः। त्रि=१।

अथवा भास्करीयपद्धत्योदयान्तरज्या=प० उ० × ज्या २ भु ।

अतः कालसमीकरणम्=९.९ मि० × २ भु + ७.७ ज्यारविमन्दकेन्द्रम्

=९.९ मि० × ज्या २ भु ± ७७ ज्या रवि मं०के० ।

कालसमीकरणं हि वर्षे वारचतुष्टयं शून्यतामुपयाति । एतदुक्तं भवति यद् वारचतुष्टयं स्पष्टकालो मध्यमकालेन तुल्यो भवति । अत इदं परिलेखपद्धत्याऽपि (Graphical Method) व्यक्तीकर्तुं शक्यते ।

एतदर्थमधोलिखितं चित्रं दर्शनीयम्—

| कदा कदा शून्यो भवति | कदा कदा परमो भवति |
|---|---|
| १ सितम्बर | १२ फरवरी |
| २५ दिसम्बर | ४ नवम्बर |
| १४ जून | १६ जुलाई |
| १६ अप्रैल | १६ मई |

एवमत्र संक्षेपेण कालसमीकरणं विवेचितम् ।



# स्वरशास्त्रपरिचयः

डॉ० नागेन्द्रपाण्डेयः

प्राध्यापकः, ज्योतिषविभागे,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी

❁ ❁ ❁

स्वरव्यञ्जनेति भेदेन वर्णानां द्वौ विभेदौ। तत्राकारादि वर्णा स्वरनाम्ना प्रसिद्धाः सन्ति, ये माहेश्वरसूत्रस्य 'अच्' प्रत्याहारे समागच्छन्ति। व्यञ्जनानि तु कादि वर्णाः सन्ति, ये माहेश्वरसूत्राणां 'हल्' प्रत्याहारे गण्यन्ते। अत्र ये स्वराः सन्ति, तेषां विषये प्राचीनभारतीयज्यौतिष एकः स्वतन्त्रो विषयः स्वरशास्त्रमिति नाम्ना सुप्रसिद्धः। तत्र स्वरवर्णने षोडशस्वराणां वर्णनं विद्यते स्वरशास्त्रेषु। यथा नरपतिजयचर्यायाम्[1]—

मातृकायां पुरा प्रोक्ताः स्वराः षोडशसंख्यया।
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः॥

तत्र अं अः इति अन्तिमौ द्वौ स्वरौ त्याज्यौ भवतः, तथा चत्वार ऋ ॠ ऌ ॡ इमे स्वरा नपुंसकाः कथ्यन्ते[2]। अत एव षोडशभिरिमे षड् रहिताः स्वराः क्रियन्ते, तदाऽवशिष्टा दशसंख्याकाः स्वरा भवन्ति। पुनरत्र पञ्च ह्रस्वाः, पञ्च च दीर्घस्वराः सन्ति। ह्रस्वस्वरा ये पञ्चपरिमिताः, त एव स्वरशास्त्रे गृह्यन्ते। ते 'अ इ उ ए ओ' इति सन्ति। इम एव पञ्च स्वराः स्वरशास्त्रे प्रचलिता भवन्ति[3]।

एतेषां स्वराणामाधारभूतेन स्वरशास्त्रेण कालत्रयस्य सर्वविधं ज्ञानं कर्तुं शक्यते। स्वरशास्त्रविज्ञस्य दैवज्ञस्य साहाय्येन कोऽपि जनो दुःसाध्यमपि कार्यं सारल्येन कर्तुं शक्नोति, तथा दुर्बलोऽपि राजा सबलं शत्रुं जेतुं समर्थो भवति। यथा स्वरशास्त्रस्य महत्त्ववर्णनप्रसङ्गेषु इमा उक्तयः सन्ति—

लाभालाभं सुखं दुःखं जीवितं मरणं तथा।
जयः पराजयश्चेति सर्वं ज्ञेयं स्वरोदये॥

---

१. नरपतिजयचर्या—२।२।

२. 'ऋ ॠ ऌ ॡ नपुंसकौ'—नरपतिजयचर्या—२।२।

३. ज्ञेयास्तत्र स्वरा आद्याः—ह्रस्वाः (अ इ उ ए ओ) पञ्च स्वरोदये नरपतिजयचर्या—२।३।

यस्यैकोऽपि गृहे नास्ति स्वरशास्त्रस्य पारगः।
रम्भास्तम्भोपमं राज्यं निश्चितं तस्य भूपतेः॥

स्वरशास्त्रे सदाभ्यासी सत्यवादी जितेन्द्रियः।
तस्यादेशस्य यः कर्ता जयश्रीस्तं नृपं भजेत्॥

दशैकेन शतं तैश्च सहस्रं शतसंख्यया।
स्वरोदयबलीराजा दशघ्नं हन्ति लीलया॥

पुष्पैरपि न योद्धव्यं यावद्धीनस्वरोदयः।
स्वरोदयबले प्राप्ते योद्धव्यं शस्त्रकोटिभिः[1]।

स्वरे वेदाश्च शास्त्राणि स्वरे गान्धर्वमुत्तमम्।
स्वरे च सर्वत्रैलोक्यं स्वरमात्मस्वरूपकम्॥

स्वरहीनश्च दैवज्ञो नाथहीनं यथा गृहम्।
शास्त्रहीनं यथा वक्त्रं शिरोहीनं च यद्वपुः॥

ब्रह्माण्डखण्डपिण्डाद्याः स्वरेणैव हि निर्मिताः।
सृष्टिसंहारकर्त्ता च स्वरः साक्षान्महेश्वरः॥

स्वरज्ञानात्परं गुह्यं स्वरज्ञानात्परं धनम्।
स्वरज्ञानात्परं ज्ञानं न वा दृष्टं न वा श्रुतम्॥

शत्रुं हन्यात्स्वरबले तथा मित्रसमागमः।
लक्ष्मीप्राप्तिः स्वरबले कीर्तिः स्वरबले सुखम्॥

सर्वशास्त्रपुराणादि स्मृतिवेदाङ्गपूर्वकम्।
स्वरज्ञानात्परं तत्त्वं नास्ति किञ्चिद्वरानने॥

इदं स्वरोदयं शास्त्रं सर्वशास्त्रोत्तमोत्तमम्।
आत्मघटप्रकाशार्थं प्रदीपकालकोपमम्[2]॥

स्वरज्ञानं नरे यत्र लक्ष्मीः पादतले भवेत्।
सर्वत्र च शरीरेऽपि सुखं तस्य सदा भवेत्॥

प्रणवः सर्ववेदानां ब्राह्मणो भास्करो यथा।
मृत्युलोके तथा पूज्यः स्वरज्ञानी पुमानपि[3]॥

---

१. नरपतिजयचर्या–२।११; १।११–१४।

२. शिवस्वरोदये–१६।१७।२०।२१।२२।२५।२७।

३. शिवस्वरोदये—३८९–३९०।

एतेषां पञ्च स्वराणां क्रमशः पञ्च देवताः, पञ्च कलाः, पञ्च शक्तयः, पञ्च चक्राणि, पञ्च महाभूतानि, पञ्च विषयाः पञ्च संज्ञास्तथा पञ्चावस्था भवन्ति[1]। यथा चक्रम्—

| अ | इ | उ | ए | ओ | स्वराः |
|---|---|---|---|---|---|
| ब्रह्मा | विष्णुः | रुद्रः | सूर्यः | चन्द्रः | देवताः |
| निवृत्तिः | प्रतिष्ठा | विद्या | शान्तिः | अतिशान्तिः | कलाः |
| इच्छा | ज्ञाना | प्रभा | श्रद्धा | मेधा | शक्तिः |
| चतुरस्रः | अर्धचन्द्रः | त्रिकोणम् | षट्कोणम् | वर्तुलः | चक्रम् |
| धराः | जलम् | अग्निः | वायुः | आकाशः | पञ्चभूनम् |
| गन्धः | रसः | रूपम् | स्पर्शः | शब्दः | विषयः |
| पिण्डः | पदम् | रूपम् | रूपातीतः | निरञ्जनम् | संज्ञाः |
| बालः | कुमारः | युवा | वृद्धः | मृतः | अवस्थाः |

**अस्योपयोगः—**

कस्यापि जनस्य नामाद्यक्षरं स्वरतो व्यञ्जनतो वा प्रारभ्यते। यदि स्वरतः प्रारभ्यते, तदा कोष्ठके तस्य स्वरं ज्ञात्वा चक्रानुसारं देवताः, पञ्चभूतविषयचक्रादिकं ज्ञातुं शक्यते। यदि च नामाद्यक्षरे व्यञ्जनं स्यात्, तदा व्यञ्जने यो स्वरः संयुक्तः स्यात्, तस्यैव विचारः क्रियते।

**यथोदाहरणम्—**

मन्यते कस्यापि जनस्य नाम सिन्धुर्वर्तते। तस्य नामाद्यक्षरे 'सि' अक्षरं तर्हि सकारेऽत्र इकारोऽस्ति। अत एवास्य 'इ' स्वरः। चक्रानुसारं तस्य विष्णुः देवता, प्रतिष्ठाकला, ज्ञानाशक्तिः, अर्धचन्द्रचक्रः, जलतत्त्वम्, रसविषयः, पदसंज्ञा कुमारावस्था भविष्यति। अनेनदं ज्ञायते यदयं सिन्धुनामको जनो वैष्णवोऽस्ति। आपत्तौ विष्णु-पूजनेन लाभान्वितो भविष्यति। कुमारावस्थायां सुखमवाप्स्यति। सदैव मनसि कौमारगुणं स्थास्यतीति सर्वं नामानुसारं फलमवगम्यते। एवमेत्र विविधप्रकारकाणि चक्राणि निर्मीयन्ते स्वरविचारे। यथा वर्णस्वरचक्रम्, ग्रहस्वरचक्रम्, जीवस्वरचक्रम्, राशिस्वरचक्रम्, नक्षत्रस्वरचक्रम्, पिण्डस्वरचक्रम्, योगस्वरचक्रमित्यादि, तथैव द्वादशवार्षिकम्, वार्षिकमयनम्, ऋतुः, मासः, पक्षः, दिनम्, घटीत्यादीनि चक्राणि भवन्ति, येषां प्रयोगः पृच्छकस्य प्रश्नानुसारं फलज्ञानाय भवति।

---

१. अकाराद्याः स्वराः पञ्च ब्रह्माद्याः पञ्च देवताः।
निवृत्त्याद्याः कलाः पञ्च इच्छाद्याः शक्तिपञ्चकम्॥
मायाद्याश्चक्रभेदाश्च धराद्यं भूतपञ्चकम्।
शब्दादिविषयास्ते च कामबाणा इतीरिताः॥ (नरपतिजयचर्या—२।६–७)

**यौगिकं स्वरम्—**

योगाभ्यासबलेन प्राणायामादिविधिना श्वासस्य प्रवेशे निर्गमने च नियन्त्रणं कृत्वा यो जनः स्वररहस्यं वेत्ति, स यौगिकस्वरसाधनबलेन सर्वमपि कालिकं तथ्यमवगन्तुं शक्नोति।

यौगिकं स्वरं हंसचारमपि कथ्यते। शरीरमध्ये वायुसंचार इडा-पिङ्गला-सुषुम्नाभिस्तिसृभिर्नाडीभिर्भवति[1]।

अत्रेडानाडी चन्द्रः, पिङ्गलायां सूर्यः, सुषुम्नायां शम्भुर्भवति। अयं शम्भुर्हंसस्वरूपो भवति। शरीरे नासिकाछिद्राभ्यां स्वरप्रवेशे शकारस्य ध्वनिर्जायते, निर्गमे च हकारस्य ध्वनिर्जायते। अत एव स्वरसञ्चारस्यास्य विधेर्नाम हंसचार इत्युच्यते[2]।

प्राणीनां नाभौ महाशक्तिरूपा कुण्डलिनी सर्पाकारा विद्यते। तस्माद् नाभिस्थानाद् दशनाड्य ऊर्ध्वं गच्छन्ति। द्वे द्वे तिर्यङ् नाड्यौवर्तेते। एवं चतुर्विंशतिनाड्यः सन्ति। शरीरपोषिकाः सप्तोत्तराणि सप्तशतानि (७०७) नाड्यः सूक्ष्मरूपिण्यः सन्ति। अत्र प्रधाना नाड्यो दश एव। एतेषामिमानि नामानि सन्ति—१. इडा, २. पिङ्गला, ३. सुषुम्ना, ४. गान्धारी, ५. हस्तिजिह्विका, ६. पूषा, ७. यशा, ८. व्यूषा, ९. कुहूः, १०. शङ्खिनिका[3]।

प्राय इदं तथ्यं दृश्यते यत् श्वासग्रहणे विसर्जने वा वामविसर्जने नासिकाछिद्रेणाथवा दक्षिणनासिकाछिद्रेणार्थाद् एकेनापि नासिकाछिद्रेण श्वासक्रिया प्रबला भवति। अन्येन च मन्दतरा। यदा कदैव नासिकायां छिद्राभ्यां द्वाभ्यां समाक्रिया भवति, यदा वामच्छिद्रेण श्वासप्रग्रहणं विसर्जनं वा क्रियते, तदा वामनाडी चन्द्रस्वरश्च प्रचलति, यदा च दक्षिणनासिकाछिद्रेण श्वासप्रग्रहणं विसर्जनं वाधिकरूपेण क्रियते, तदा दक्षिणनाडी सूर्यस्वरश्च प्रचलतीति मन्यते[4]।

---

१. प्रकटो वायुसञ्चारो लक्ष्यते देहमध्यतः।
इडा-पिङ्गला-सुषुम्नाभिर्नाडीभिस्तिसृभिर्बुधैः॥ (नरपतिजयचर्या—३।८)

२. इडानाडीस्थितश्चन्द्रः पिङ्गला भानुवाहिनी।
सुषुम्ना शम्भुरूपेण शम्भुर्हंसस्वरूपकः॥ (नरपतिजयचर्या–३।९)

३. इडा पिङ्गला सुषुम्ना गान्धारी हस्तिजिह्विका।
पूषा यशा च व्यूषा च कुहूः शाङ्खिनिका तथा॥ (नरपतिजयचर्या–३।६)

४. (क) इडानाडीस्थितश्चन्द्रः पिङ्गला भानुवाहिनी।
सुषुम्ना शम्भुरूपेण शम्भुर्हंसस्वरूपकः॥ (नरपतिजयचर्या–३।९)
(ख) इडायां तु स्थितश्चन्द्रः पिङ्गलायां च भास्करः।
सुषुम्ना शम्भुरूपेण शम्भुर्हंसस्वरूपतः॥ (शिवस्वरोदये, श्लोकः–५०)

यदा द्वाभ्यां छिद्राभ्यां समानरूपेण श्वासक्रिया जायते, तदा मध्यमानाडी सुषुम्नागता भवति। या दश नाड्यः पूर्वं कथिताः, तासां शरीरे स्थानान्येवं सन्ति।

वामे इडा, दक्षिणे पिङ्गला, मध्ये सुषुम्ना, वामचक्षुषि गान्धारी, दक्षिणे हस्तिजिह्विका, दक्षिणकर्णे पूषा, वामकर्णे यशस्विनी मुखे, व्यूषा, लिङ्गे कुहुः, गुदा-स्थाने शङ्खिनी। एवमत्र शरीरे नाड्यस्तिष्ठन्ति।

अत्र तिस्रो नाड्य इडा, पिङ्गला, सुषुम्ना, प्राणमार्गे स्थिताः कथ्यन्ते, क्रमशः सर्वासां दश नाडिकानां मध्ये इमे वायवस्तिष्ठन्ति[1], तद्यथा—

१. प्राणः, २. अपानः, ३. समानः, ४. उदानः, ५. व्यानः, ६. नागः, ७. कूर्मः, ८. कृकलः, ९. देवदत्तः, १०. धनञ्जयश्चः[2]।

अत्र हृदये प्राणवायुस्तिष्ठति। गुदास्थाने अपानवायुः, नाभिदेशे समान-वायुः, कण्ठमध्ये उदानवायुः, सम्पूर्णशरीरे व्याननामको वायुस्तिष्ठति।

परन्तु स्वरशास्त्रविचारे प्रधानरूपा इडापिङ्गलासुषुम्नाख्यास्तिस्रो नाड्यो दक्षिण-वाम-मध्यगताः सूर्य-चन्द्र-शिवाश्रिताः सन्ति याभिः फलादेशे प्रयोजनं दृश्यते। अस्य विचारोऽग्रे करिष्यते।

**स्वरफलम्—**

शुक्लपक्षस्य प्रतिपदातः प्रारभ्य तृतीयातिथिं यावच्चन्द्रस्वरश्चलति। तत्पश्चात् पुनः दिनत्रयं यावद् अर्थाच्चतुर्थी-पञ्चमी-षष्ठी-तिथिषु सूर्यस्वरश्चलति। एवमपि तदग्रे त्रिषु (७,८,९) तिथिषु चन्द्रस्वरः प्रचलति। एवमेवाग्रेऽपि त्रिषु तिथिषु क्रमशः सूर्य-चन्द्रस्वरयोः क्रमेण सञ्चरणं जायते।

अथ कृष्णपक्षस्य प्रतिपदातो तृतीयां यावत् सूर्यस्वरः प्रचलति, पुनरग्रे त्रिषु (४, ५, ६) तिथिषु चन्द्र स्वरः प्रचलति। एवमग्रे त्रिषु त्रिषु तिथिष्वयं क्रमः प्रचलति। यथा च नरपतिजयचर्यायाम्—

आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे।
प्रतिपदादितो ह्यनिस्त्रीणि त्रीणि क्रमोदयः[3]॥

अस्य नरपतिजयचर्यायाः सुबोधिनीटीकायामस्य भावार्थो न सम्यक् प्रकारेण कृतोऽस्ति। यतो हि यस्मिन् काल एतौ चन्द्रसूर्यस्वरौ शुक्ल-कृष्णपक्षे वा प्रचलिष्यत-

---

१. शिवस्वरोदये—३।४०।

२. प्राणोऽपानः समानश्च उदानो व्यान एव च।
नागः कूर्मः कृकलश्चैव देवदत्तो धनञ्जयः॥ (नरपतिजयचर्या—अ० ३०।७)।

३. नरपतिजयचर्या—३।१५।

स्तदा अथवा यस्मिन् दिने तिथ्यारम्भो भविष्यति, तस्मिन् दिने सूर्योदयकाले यदि मध्यरात्रौ मध्यदिवसे सायंतने वा तिथ्यारम्भः स्यात्, तदा कल्प्यते स्वरसञ्चारे एकरूपता न भविष्यति। तथाऽग्रे फलादेशकथनेऽपि अनियमितता सम्भविष्यति। तद्यथा—

> चन्द्रोदये यदा सूर्यश्चन्द्रः सूर्योदये यदा।
> अशुभं हानिरुद्वेगस्तद्दिने जायते ध्रुवम्[1]॥

अतस्तद्दिने जायते ध्रुवमित्यनेन यदि निशि तिथ्यारम्भः स्यात्, तथा दिनस्य परिभाषा का भविष्यति ? अत एव मन्यते सूर्योदयकालिक्येव तिथिर्ग्राह्या। तथा हि 'यस्य दिनं तस्यैव रात्रिः' इति परम्परया सूर्योदये या तिथिर्भविष्यति, तस्या एव ग्रहणमग्रिमसूर्योदयात् पूर्वं यावत् स्वीकर्तव्यम्। तथा हि प्रातः काले सूर्योदयसमये स्वरस्य विचारः कर्त्तव्यः।

पूर्वोक्तं यच्छुक्लपक्षस्य प्रतिपदादितस्तु त्रिषु त्रिषु तिथिषु चन्द्रसूर्यस्वरौ, (वामदक्षिणस्वरौ) तथा कृष्णपक्षप्रतिपदादितो त्रिषु त्रिषु तिथिषु क्रमशः सूर्यचन्द्र-स्वरौ (दक्षिणवामस्वरौ) प्रचलतः। सामान्यनियमोऽयम्।

यस्य जनस्यैवं क्रमेण सर्वासु तिथिषु स्वरसञ्चारो भवति, तस्य कृते सर्वं फलं शोभनं जायते।

शुक्लपक्षस्य प्रथमाद्यासु तिसृषु तिथिषु चन्द्रस्वरः, तत्पश्चात् क्रमशः तिसृषु तिथिषु सूर्यचन्द्रस्वरौ स्याताम्। तथैव कृष्णपक्षस्य प्रथमाद्यासु त्रिसृषु तिथिषु सूर्यस्वरः, तत्पश्चात् क्रमशस्तिसृषु, तिसृषु तिथिषु चन्द्रसूर्यस्वरौ स्याताम्, तदा शुभं स्यात्। यद्येवं न भवति, अर्थाच्चन्द्रस्वरस्य समये सूर्यस्वरः प्रचलितो भवेत्, तथा सूर्यस्वरस्य समये चन्द्रस्वरः प्रचलितस्तदा अशुभं जायते[2]।

अत्राभ्यासबलेन सिद्धः साधकः पूर्ववर्णितनिर्देशानुसारं यथेच्छं चन्द्रसूर्यस्वरयोः सञ्चालनं कर्तुं समर्थो भविष्यति। एकोऽयमपि सामान्यो नियमो यद् रात्रौ चन्द्रस्वरस्य सञ्चालनम्, दिवा सूर्यस्वरस्य सञ्चालनं श्रेयस्करं भवति[3]।

---

१. नरपतिजयचर्या—३।१६; २. तदेव—३।१६।

३. शशाङ्कं चारयेद्रात्रौ दिवाचार्यो दिवाकरः।
इत्यभ्यासरतो नित्यं स योगी नात्र संशयः॥ (नरपतिजयचर्या–३।१७)

**कार्यवशेन स्वरसञ्चालने फलम्**

यात्रा, विवाहः, वस्त्रालङ्कारादिभूषणादिधारणं शुभकर्मारम्भः सन्धिवार्ता, नवीनगृहप्रवेशः, होमादिकं शान्तिकर्म, रसायनाद्यौषधिनिर्माणम्, विद्यारम्भस्तथा स्थिरं कार्यमपि चन्द्रस्वरे प्रशस्तं भवति ।

सूर्यस्वरस्य सञ्चारकाले विग्रहः युद्धादिकार्यम्, स्नानम्, भोजनम्, मैथुनम्, व्यवहारादिकं प्रशस्तं स्यात् । यदि दूरस्थः शत्रुः स्यात्, तस्योपरि विजयं प्राप्तुं चन्द्र-स्वरे युद्धारम्भो विजयप्रदो भवति । यदा शत्रुरासन्न एव स्यात्, तदा सूर्यस्वरे युद्धे सति साफल्यं प्राप्यते ।

**यात्रायां विशेषः**

यात्रा काले यदा वामस्वरः स्यात्, तदा वामचरणं प्रथममग्रे कृत्वा यात्रा क्रियते । यदि च दक्षिणस्वरः प्रचलति, तदा दक्षिणपादमग्रे कृत्वा यात्रा प्रारभ्यते । एवं कृते सति यात्रा सिद्धिप्रदा भवति । यदा वामस्वरे यात्रा क्रियते, तदा प्रथमं समसंख्याकं यावद् वामपादं सञ्चाल्यते, दक्षिणस्वरे सति विषमसंख्याकं यावद् दक्षिण-पादेन प्रथमं यात्रा प्रारभ्यते ।

युद्धकाले यदा चन्द्रस्वरः स्यात्, तदा स्थायी जयति । यदा च सूर्यस्वरः प्रवहति, तदा यायी जयति । यदि वामस्वरस्य प्रवाहः स्यात्, तदा स्थायी योद्धा पूर्वस्यामुत्तरस्यां वा युद्धं कृत्वा विजयी भवति । दक्षिणस्वरप्रवाहे यायी योद्धा पश्चिमस्यां दक्षिणस्यां वा दिशि युद्धं कृत्वा विजयी भवति । अयमपि विचारो यद् यदि युद्धकाले वामस्वरस्य प्रवाहः स्यात्, तदा चन्द्रमसः सम्मुखे वामे वा कृत्वा युद्धं कुर्यात् । यदा च सूर्यस्वरप्रवाहः स्यात्, तदा सूर्यं पृष्ठे दक्षिणे वा कृत्वा युद्धारम्भं कुर्यात्, तदा विजयी भवति[1] ।

**स्वरवशेन रतिविचारः, सन्तानविचारश्च**

रतिकाले यदा स्त्रियो वामस्वरो भवति, पुरुषस्य च दक्षिणस्वरो भवति, तदा मकरध्वजतुल्यः प्रसङ्गो जायते । अयमपि सामान्यो नियमो यत् पुरुषो वामपार्श्वेन शयनं करोति, तदा तस्य दक्षिणस्वरः प्रचलति । स्त्री यदा दक्षिणपार्श्वेन शयनं करोति, तदा तस्या वामस्वरः प्रचलतीति वायुनियमः । तद्यथा—

---

१. दिग्ज्ञानं सूर्यचन्द्रमाराशिवशेन क्रियते । तथा च—मेषसिंहधनुराशि पूर्वदिशा, वृषकन्या-मकरेषु दक्षिणदिशा, मिथुनतुलाकुम्भेषु पश्चिमदिशा, कर्कवृश्चिकमीनेषु उत्तरदिशा भवति ।

शयने वा प्रसङ्गे वा युवत्यालिङ्गनेऽपि वा।
यः सूर्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः[1] ॥

यदा शरीरे विषस्य प्रभावः स्यात्, तस्मिन् समये यदि अभ्यासबलेन वामस्वरस्य सञ्चालनं क्रियते, तदा तस्य प्रभावो विनश्यति। एतौ सूर्यस्वरस्य सञ्चारेण कामिनी वशमायाति। मोक्षकाले यदि मध्यमवायोः (सुषुम्नायाः) सञ्चालनं क्रियते, तदा सारल्येन मोक्षप्राप्तिः सञ्जायते[2]।

यदि पृच्छको गर्भप्रश्नं करोति, तदा तस्मिन् काले पूर्णस्वरोदये पुत्रो भवति। यदि प्रश्नकाले स्वरसञ्चरणं निर्बलं मन्दगत्या भवेत्, तदा कन्या भवति। यदा च प्रश्नकाले शून्यस्वरस्य पश्चात् पूर्णस्वरः प्रचलेत्, तदा प्राक् कन्या, पश्चाच्च पुत्रो भवति। यदा च संक्रमणकालः स्यात्, अर्थात् पूर्ण-सम-शून्य-स्वराणां सहैव चलनं भवेत्, तदा गर्भपातो भवति।

एवमेव प्रकारेण चन्द्रसूर्यस्वरयोरभ्यासेन विविधानि कार्याणि इच्छानुसारेण कर्तुं शक्यन्ते। यथोक्तम्—

चन्द्रसूर्यस्वराभ्यासं ये कुर्वन्ति सदा नराः।
अतीतानागतं ज्ञानं तेषां हस्तगतं सदा[3] ॥

**स्वरशास्त्रस्य प्रणेता**

इदं स्वरशास्त्रं शिवपार्वत्योः संवादरूपं शिवस्वरोदये वर्णितमस्ति। यथा शिववाक्यं पार्वतीं प्रति—

गुह्याद्गुह्यतरं सारमुपकारप्रकाशनम्।
इदं स्वरोदयं ज्ञानं ज्ञानानां मस्तकं मणिः[4] ॥

स्वरविषयकं यौगिकं ज्ञानं तन्त्रशास्त्रेऽपि दृश्यते। तत्रापि तन्त्रशास्त्रस्याधारभूतो देवः शिव एव। यथा नरपतिजयचर्यायां ब्रह्मयामलनामकस्य तन्त्रग्रन्थस्योद्धरणमस्ति। तद्यथा—

अथातः सम्प्रवक्ष्यामि ख्याता ये ब्रह्मयामले।
मात्रादिभेदभिन्नानां स्वराणां षोडशोदयान्[5] ॥

---

१. नरपतिजयचर्या–३।२१।

२. चन्द्रचारे विषं हन्ति सूर्ये बालां वशं नयेत्।
सुषुम्नायां भवेन्मोक्ष एको देवस्त्रिधा स्थितः ॥ (नरपतिजयचर्या–३।३५)

३. तदेव–३।५६; ४. शिवस्वरोदये–श्लो० ११; ५. नरपतिजयचर्या–२।१।

संग्रामविजयोदयेऽपीदं स्वरशास्त्रं शाम्भवाद् निःसृतम् । यथा च—**'संक्षेपाद् वक्ष्येऽहं समरजयं शाम्भवात् सारम्'**[1] इति ॥

जैनग्रन्थेऽपि स्वरशास्त्रस्य विवेचनं वर्तते। भगवतो महावीरस्य चतुर्दश उत्तराधिकारी भद्रबाहुः योगाभ्यास-प्राणायामबलेन स्वरविषयस्याभ्यासं कृतवानिति ज्ञायते। एतद् विषयकं वर्णनं 'स्वरज्योति" ग्रन्थे श्रीमतः सूरिमहोदयस्य गुरुशिष्य-वार्तालापप्रसङ्गेन ज्ञायते।

अनेनायं विज्ञायते यद् योगाभ्यासबलेन स्वरसंसाधनं भवति, यस्य प्रवर्त्तको योगिराजशङ्कर एव सिद्ध्यति।

स्वरशास्त्रान्तर्गता बहवो विषयाः सन्ति। बहूनि च चक्राणि ग्रहनक्षत्रादि-वशेन भवन्ति; परन्तु प्रस्तुतनिबन्धे मुख्यतश्चन्द्रसूर्यस्वरयोः परिचयस्तस्योपयोगश्च प्रदर्शितः। यतः संक्षिप्तरूपेण स्वल्पपरिश्रमेण सुगमरीत्या चास्य प्रयोगः सर्वैर्जनैः कर्तुं शक्यते। अस्मिन् प्रयोगे चन्द्रसूर्यस्वरयोः (वामदक्षिणस्वरयोः) परिज्ञानमात्रेण फलादेशं कर्तुं शक्यत इति शम्।

• • •

१. नरपतिजयचर्या—४।१ ।

# गणितज्यौतिषस्य श्रुतिमूलकता

श्रीसर्वनारायणझाः

पञ्चाङ्गसम्पादकः,

तारामण्डलम्, पञ्चाङ्गविभागीयश्च,

श्रीकामेश्वरसिंह-दरभंगासंस्कृतविश्वविद्यालये

❀ ❀ ❀

स्रवदमृतबिन्दुसन्दोहसदृशसुरससुकोमलोक्तिगुणागद्यपद्यमयी चतुरजनंमनश्चमत्कारिणी वाणी भारती ज्योतिषं पातु। वेदस्य महत्त्वं तु सति सूर्ये कीदृशः प्रकाशः, तद्वदेव प्रतिभाति; वेदाङ्गत्वेन ज्योतिषस्यापि। अत एव महत्त्वदर्शनं विनैव किञ्चिद्विवक्षामि।

वेदस्यानन्तज्ञानकोषाद्विद्वद्भिरनेकानि शास्त्रतत्त्वान्याकृष्टानि। गणितज्यौतिषस्य श्रुतिमूलकतायाः संदर्भे, वेदान्तर्गतगणिताङ्कुरान् प्रति किञ्चिद्विचार्यतेऽत्र। गणितफलितसिद्धान्तरूपेण ज्योतिषशास्त्रस्य त्रैविध्यं प्रतिपादितमस्ति। व्यक्तमव्यक्तञ्च द्विविधं गणितमुक्तम्।

**व्यक्तगणितम्**—कल्पिताङ्कैः संयोग-वियोग-गुणन-भजनादयो यत्र विधीयन्ते, तद् व्यक्तगणितम् (पाटीगणितम्)।

**अव्यक्तगणितम्**—कल्पिताङ्कस्थानेऽक्षरं परिस्थाप्य संयोगवियोगगुणनभजनादयो यत्र विधीयन्ते, तदव्यक्तगणितम् (बीजगणितम्)।

ज्योतिर्विराटकैरव्यक्तगणितं ब्रह्मस्वरूपं मन्यते। यथा सृष्टयादौ सृष्टयन्ते च क्रमशो निस्सरणमात्मसाद् भूते सत्यपि ब्रह्मणि नायाति विकृतिम्, तथैवात्र ज्योतिर्विद्भास्कराचार्यस्य सूत्रेण बीजगणितमपि प्रतिभाति। यथात्र—

$$९ \div ० = \frac{९}{०} = \frac{९}{०} \pm \text{ अनन्तसं० } = \frac{९}{०}।$$

नात्र कश्चिद्विकारोऽतः—

अस्मिन् विकारः खहरे न शशावपि प्रविष्टेष्वपि निःसृतेषु।
बहुष्वपि स्याल्लयसृष्टिकालेऽनन्तेऽच्युते भूतगणेषु यद्वत्॥

यजुर्वेदीयाधोलिखितमन्त्रे योग-वियोगयोः क्रियेऽवलोक्येते—

एकया च दशभिश्च द्वाभ्यामिष्टये विंशतिश्च।
तिसृभिश्च विंशता च नियुग्भिर्वायविह ता वि मुञ्च[1]॥

---

१. शु० य० २७।३३।

विमुच्यशब्देनात्र वियोगक्रियायाः स्पष्टीकरणं भवति। गुणनक्रियावलोक्यतेऽत्र। ऋग्वेदीयसूक्ते—'युवां देवास्त्रयः एकादशासः सत्यस्य ददृशे पुरस्तात्' इति। ( देवाः ) दिव्यगुणधारिणः, ( त्रय एकादशासः ) ११ × ३ = ३३ इति।

व्यक्तगणिते ( इकाई, दहाई, सैकड़ा ) एक-दश-शत-सहस्रेत्यादि प्रयोगद्वाराऽनेकानि गणितानि प्रतिपादितानि भवन्ति, येषां स्पष्टीकरणं यजुर्वेदे द्रष्टुं शक्यते—**'इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च शतं च शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यमं चान्तश्च परार्धश्चैता मे अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोके'**[1] अर्थात् ( मे गावः एकैकं कृत्वा १०, १००, १०००, १००००, १०००००, १००००००, १०००००००, १००००००००, १०००००००००, १००······ + ······समुद्रमध्यान्त्यपरार्धमितानि स्युरिति।

केषांञ्चिद्विदुषां मतमिति यद्रेखागणितं यूनानदेशात् प्राप्तम्; परञ्च नैतन्मतं समीचीनम्। यतो हि निम्नांङ्कितयजुर्वेदीयमन्त्रेण सुस्पष्टमवलोक्यते रेखागणितप्रयोजनं यज्ञमण्डपे—

**इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।**
**अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचं परमं व्योम[2]॥**

उपर्युक्तमन्त्रे व्यासस्य परिधेश्च परिभाषा सुस्पष्टा वेदिं परितः भ्राम्यमाणा रेखा परिधिः, ऊर्ध्वाधो व्यासः, इयमेव समस्तस्य जगतो नाभिः। चन्द्रः ( वृष्णो अश्वः=वृष्टिकारकः सूर्यः ) सूर्यादयोऽपि एतावदेव।

ऋग्वेदस्य प्रमापरिध्यादिशब्दा रेखागणितप्रमाणभूता अवलोक्यन्ते—

**कासीत् प्रमा प्रतिमा किं निदानमाज्यं किमासीत्।**
**परिधिः क आसीत्···प्रउगं किमुक्थं यद्देवा देवमयजन्त विश्वे[3]॥**

( प्रतिमा, प्रमा=मापकः ) परिधिः स्पष्टमेव।

आधुनिकगणिते **"चलनकलन"** ( Calculus ) येन सहकारेणाङ्कानां वर्गवृद्धेर्गतिः सिद्ध्यति, निम्नलिखितमन्त्रेण सुस्पष्टमवलोक्यते—**'एका च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मे एकादश च मे एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे एकोनविंशतिश्च मे एकोनविंशतिश्च म एकविंशतिश्च म एकविंशतिश्च मे त्रयोविंशतिश्च मे त्रयोविंशतिश्च मे पञ्चविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च मे नवविंशतिश्च मे एकत्रिंशच्च मे एकत्रिंशच्च मे त्रयस्त्रिंशच्च मे यज्ञेन कल्पन्ताम्[4]'**।

---

१. शु० य०—१७।२;
२. तदेव—२३।६२।
३. ऋ० सं० १०।१३०।३;
४. शु० य० १८।२४।

निम्नरीत्या प्रयोगदर्शनेन सुस्पष्टं प्रतिभाति—

| अङ्काः | वर्गः | अन्तरम् | अङ्काः | वर्गः | अन्तरम् |
|---|---|---|---|---|---|
| ० | ० | ० | ९ | ८१ | १७ |
| १ | १ | १ | १० | १०० | १९ |
| २ | ४ | ३ | ११ | १२१ | २१ |
| ३ | ९ | ५ | १२ | १४४ | २३ |
| ४ | १६ | ७ | १३ | १६९ | २५ |
| ५ | २५ | ९ | १४ | १९६ | २७ |
| ६ | ३६ | ११ | १५ | २२५ | २९ |
| ७ | ४९ | १३ | १६ | २५६ | ११ |
| ८ | ६४ | १५ | १७ | २८९ | ३३ |

पूर्वोक्तमन्त्रस्योपपत्तिः गणितज्योतिषद्वारेत्थं प्रदर्श्यते—

य= लघु इय $\qquad y=\log^{n} yx$

$\frac{\text{तार}}{\text{ताय}}=\text{य}^{-१}$ $\qquad dy/dx=\frac{1}{x}=x^{-1}$

$\frac{\text{तार}^{२}}{\text{ताय}^{२}}=(-१)^{-२}$ $\qquad \therefore d^{2}y/dx^{2}=(-1)\,x^{2}$

$\frac{\text{तार}^{३}}{\text{ताय}^{३}}=२\text{य}^{-३}$ $\qquad$ एवम् $d^{2}y/dx^{2}=\frac{(-1)(-2)(n-1)}{xn}$

$\frac{\text{तार}^{४}}{\text{ताय}^{४}}=३\text{य}^{-४}$ $\qquad =\frac{(n-1)(-1)-n-1}{xn}$

$\frac{\text{तार}^{\text{न}}}{\text{ताय}^{\text{न}}}=\frac{\text{न}-१(-१)\text{न}-१}{\text{य}^{\text{न}}}$

अत एव न − १ = १-२-३-४-० ( न − १ ) ।

अनेन स्पष्टं प्रतिभाति यद्भारतीयान् वेदद्वारैव चलनकलनस्य ( Calculus ) ज्ञानमस्ति, न कस्माच्चिदन्यस्मादाप्तम् ।

त्रिकोणमितिरेखागणितादीनामुपयोगी वृत्तपरिधिः ( ३६०° ) निम्नतन्त्रेणावगम्यते—

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः[1] ॥

द्वादश ( १२ ) परिधयः ( राशियाँ ) एकश्चन्द्रस्तिस्रो नाभिः ।

विद्वच्चरणारविन्देषु धृष्टता कृतोऽहमल्पमतिः ।
त्रुटिमवलोक्य क्षम्यतां सुधार्यताञ्चेति ॥

● ● ●

१. ऋ० सं० १।१६४।४८ ।

# अयनद्वयविमर्शः

श्रीव्रजविहारीशास्त्रिचतुर्वेदः
सहतवारस्थः, बलिया ( उ० प्र० )

❀ ❀ ❀

अथायनं विमृश्यते। तत्र अयतेऽर्कोऽनेनेति अयनम्। वर्त्म, मार्गः, अध्वा, पन्थाः, पदवी, स्मृतिः, सरणिः, पद्धतिः, पद्या, वर्तनीत्यादयोऽस्य समानार्थका इति। अयनशब्दो मार्गवाचकः कालवाचकश्च। उभयोरयनयोर्द्वौ भेदौ—उत्तरायणम्, दक्षिणायनञ्चेति। कालरूपमुत्तरायणं दक्षिणायनञ्च कदा भवत इत्यधोलिखिते श्लोके वर्णितम्—

**शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदा परम्।**
**भवति दक्षिणमन्यदृतुत्रये निगदिता रजनी मरुतां च सा॥**

अर्थाद् मकरसंक्रान्तितः (प्रायेण १४ जनवरीतः) मिथुनसंक्रान्तिं यावत् (प्रायेण १४ जुलाई पर्यन्तम्) उत्तरायणं भवति, तथा च कर्कसंक्रान्तितः (प्रायेण १४ जुलाईतः) धनुःसंक्रान्तिं यावत् (प्रायेण १४ जनवरीं यावत्) दक्षिणायनं भवति। मार्गरूपस्यायनस्यापि द्वौ भेदौ प्राग् वर्णनमनुसृत्य। तत्र उत्तरायणं देवयानम्, अर्चिमार्गः, शुक्लगतिरिति इमे सर्वे पर्यायवाचकाः। दक्षिणायनं धूममार्गः, कृष्णगति·रितीमेऽपि समानार्थकाः।

मरणानन्तरं जीवस्य द्वे गती भवतः। उपासनया ये ब्रह्मणः परोक्षज्ञानं लभन्ते, त उत्तरायणेन कार्यब्रह्मणो लोकं गच्छन्ति। यथा—'**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः**[1]' इति। ये तु शास्त्रविहितानि कर्माणि कामनया कुर्वन्ति, ते दक्षिण-मार्गेण स्वर्गादिलोकान् प्राप्नुवन्ति।

ये ब्रह्मलोकं गच्छन्ति, ते पुनः मर्त्यलोकं न प्रत्यागच्छन्ति। तथा च ये स्वर्गादिलोकं गच्छन्ति, ते क्षीणे पुण्ये मर्त्यलोके निवर्तन्ते। तथाह्युक्तं गीतायाम्—

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः**[2]॥ इति।

ब्रह्मलोकः पुनरावर्ती, अपुनरावर्ती वेति विचिकित्साऽत्र जायते, यतो गीतायां भगवताकृष्णेन अर्जुनं प्रति वर्णितम्—

---

१. श्रीमद्भगवद्गीता—८।२४; २. तदेव—८।२६।

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते[1]॥

अन्यच्च—छान्दोग्योपनिषदि वर्णितम्—'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते, न च पुनरावर्तते, न च पुनरावर्तते'[2] इति।

'आ ब्रह्मभुवनात्' इत्यस्मिन् पद्ये आङ् (आ) अभिविधावेवार्थे प्रयुक्तः, न तु मर्यादायाम्। अस्य श्लोकस्य शाङ्करभाष्ये आङोऽभिविधिरेवार्थोऽभिमतः। पुनश्च श्लोकस्योत्तरार्द्धे प्रयुक्तस्तुकारो ब्रह्मलोकस्यापि पुनरावर्तित्वं व्यनक्ति।

यथाज्ञानम् अस्य समाधानं प्रस्तूयते—एष प्रश्नो विभज्य वचनीयः प्रतीयते। अस्योत्तरं सहसा निश्चित्य वक्तुं न शक्यते। अतो विचार्यते। 'ब्राह्मस्त्रिभूमिको लोकः'[3] इति योगदर्शने व्यासभाष्ये उक्तम्। 'तत्रोर्ध्वं सत्यतपोजननामकेषु ब्रह्मणो लोकेषु सर्गो ब्राह्मसर्गः' इति सांख्यकारिकायाः कस्मिंश्चिद् भाष्ये भाषितम्। अतो येषां परोक्षं ब्रह्मविज्ञानम्, ते सत्याख्यं ब्रह्मलोकं गच्छन्ति; किन्तु ते न पुनः प्रत्यागच्छन्ति; अपितु ब्रह्मणा सह विमुक्ता भवन्ति। सत्यलोकस्य सत्यत्वं तस्यापुनरावर्तित्व एव वर्तते। ते तस्मिन् ब्रह्मलोके सत्सङ्गत्याऽपरब्रह्मरूपस्य गुरोश्च सान्निध्येन ब्रह्मसाक्षात्कारं लभन्ते, कल्पान्ते च ब्रह्मणा सह विदेहकैवल्यं लभन्ते।

ब्रह्मलोकश्च त्रिभूमिक इति उक्तं प्राक्, तथा च ज्ञानप्रकर्षतारतम्यद्वारा त्रिभूमिको ब्रह्मलोक उपपद्यते। तथाहि—जनलोके ब्रह्मज्ञानं जायते; किन्तु तदसम्भावनाविपरीतभावनाभ्यामाक्रान्तम्। ततश्च तपोलोकेऽभ्यासेन तर्कैश्च श्रुत्यनुकूलैरसम्भावनाविपरीतभावने निवर्तेते। ततश्च सत्यलोकप्राप्तिरिति। सत्याख्यो ब्रह्मलोकः साक्षात् परम्परया च लब्धुं शक्यते। जनलोकात् तपोलोकाद् वा सत्याख्यं ब्रह्मलोकं गन्तुं शक्नोति साधको ब्रह्मसाक्षात्कारे जाते। ब्रह्मसाक्षात्कारे कल्पान्ते ततो मानवं लोकं प्रत्यागन्तुं शक्नोति। ये तु जनलोकं तपोलोकं वा गत्वाऽपि प्रारब्धशेषेण सञ्जातकामाः, तेऽस्मिन् कल्पे पुनर्जन्म अस्मिन् मानव आवर्ते न लभन्ते। आवर्तान्तरे तु तेनैव प्रारब्धशेषेण मानव आवर्ते पुनर्जन्म लभन्ते। तथा च श्रुतिः—'न पुनः इमं मानवम् आवर्तम् आवर्तन्ते' इति। अत्र 'इमम्' इति आवर्तविशेषणेन विज्ञायते। कल्पान्तरे आवर्तन्त इति।

इत्थं ब्रह्मलोकस्य त्रिभूमिकस्य पुनरावर्तित्वम्, अपुनरावर्तित्वञ्च सिद्ध्यतः। एवं भगवतः श्रीकृष्णस्य वाक्यद्वयस्य 'एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः'[4], 'आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन[5]' इति संगतिर्भवति।

---

१. श्रीमद्भगवद्गीता–८।१६; २. छा० उ० ८।१५।१; ३. यो० सू० भा०।
४. श्रीमद्भगवद्गीता—८।२६; ५. तदेव—८।१६।

ब्रह्मलोकाधिकारिणो यदा म्रियन्ते उत्तरायणे दक्षिणायने रात्रौ दिवसे शुक्लपक्षे कृष्णपक्षे वा, तेऽवश्यमेव स्वं लोकं गच्छन्ति। तथा च स्वर्गलोकाधिकारिणोऽपि यदा म्रियन्ते, तेऽपि स्वं लोकं प्राप्नुवन्ति। मरणकाले मनुष्यस्तु मार्गपरिवर्तने न क्षमः। जनानामेषा धारणा यद् ये दिवसे शुक्लपक्षे उत्तरायणे वा शरीरं त्यजन्ति, ते देवयानेन ब्रह्मलोकं गच्छन्ति, तथा च ये रात्रौ कृष्णपक्षे दक्षिणायने वा देहत्यागं कुर्वन्ति, ते पितृयाणेन पितृलोकं स्वर्गलोकं वा गच्छन्ति; किन्त्वेषा धारणाऽज्ञानमूलिका। अस्या धारणाया आधारभित्तिर्बाणविद्धेन भीष्मपितामहेन उत्तरायणस्य प्रतीक्षा एव वर्तते, यथा—

> धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः।
> यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः॥ इति।

स्वयं भगवतो वासुदेवस्य भीष्मं प्रति वचनम्—

> व्यावर्त्तमाने भगवत्युदीचीं सूर्ये दिशं कालवशात् प्रपन्ने।
> गन्तासि लोकान् पुरुषप्रवीर नावर्तते यानुपलभ्य विद्वान्॥

भगवतोऽनेन कथनेन आपाततः प्रकटीभवति यत् केवलम् उत्तरायणे ये शरीरं त्यजन्ति, त एव मुक्ता भवन्ति, नेतरे; किन्तु ये विज्ञानसम्पन्ना अस्मिन् काले मृताः, ते ब्रह्मलोकं गच्छन्तीत्यत्रास्य वाक्यस्य तात्पर्यम्। ये तु न विज्ञानसम्पन्नाः, अत्र काले मृताः, ते दक्षिणमार्गेणैव गच्छन्तीति।

अन्यच्चात्र प्रसङ्गे दिवसादयः (दिवसशुक्लपक्षउत्तरायणरात्रिकृष्णपक्षदक्षिणायनानि) कालवाचकास्तु सन्त्येव, तेषामभिमानिनामातिवाहिकानां देवानामपि वाचका इति। यथोक्तं ब्रह्मसूत्रे—'आतिवाहिकास्तल्लिङ्गात्'[1] इति। अन्यत्र सूत्रे शाङ्करभाष्यमपि द्रष्टव्यम्—'भीष्मस्य तूत्तरायणप्रतिपालनमाचारप्रतिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यानार्थं च'[2]।

भीष्मस्योत्तरायणे मृत्यौ एतत्कारणं पर्याप्तं न प्रतिभाति। यत आचारप्रतिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थं स अतोऽधिकं कालपर्यन्तं स्वप्राणान् धारयितुं क्षम आसीत्; किन्तु तेनैवं न कृतम्। पुनश्च 'यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः' इत्यनेन वाक्येन योगिनो मृत्यौ उत्तरायणं वाञ्छन्तीति प्रकटीभवति।

---

१. वे० सू० ४।३।४।
२. वे० सू० ४।२।२०—शाङ्करभाष्यम्।

स्वच्छन्दमृत्युताख्यापनमाचारप्रतिपालनं तु गौणं कारणं प्रतीयते। अस्ति किमपि मुख्यं कारणमुत्तरायणे मृत्यौ। तच्च विचार्यते -ब्रह्मलोकाधिकारिणो ये दिवसे शुक्लपक्षे उत्तरायणे च म्रियन्ते, नैतेषामभिमानिभिरातिवाहिकदेवैः क्रमाद् ब्रह्मलोको नीयन्ते स्वायासं विना। तेषां मार्गे प्रकाशो भवति ब्रह्मलोकपर्यन्तम्; किन्तु ये ब्रह्मलोकाधिकारिणो रात्रौ कृष्णपक्षे दक्षिणायने च म्रियन्ते, त आतिवाहिकदेवैः ब्रह्मलोकपर्यन्तं न नीयन्ते। तत्र गमने तेषामायासो भवति। मार्गश्चान्धकारपूर्णो भवति। यदा मृत्यौ स्वच्छन्दता स्यात्, तदा को योगी न वाञ्छेत् स्वाभीष्टं लोकं यानेन (आतिवाहिकदेवेन) प्रकाशपूर्णेन मार्गेण गन्तुम् ?

ज्ञानविधूतपापा रात्रौ कृष्णपक्षे दक्षिणायने च शरीरं परित्यज्य देवयानेन ब्रह्मलोकं यान्ति। तथा हि ब्रह्मसूत्रे—'अतश्चायनेऽपि दक्षिणे'[1] इति।

उपरि या मुक्तिर्वर्णिता; सा क्रमिकमुक्तिः। प्रसंगतोऽधुना सद्योमुक्तिर्वर्ण्यते। उत्तरायणं भवतु दक्षिणायनं वा दिवसो भवतु रात्रिर्वा, अग्निर्भवतु धूमो वा निष्काम आप्तकामो ज्ञानी शरीरपातानन्तरं ब्रह्मैव भवति। न स क्वचिद् गच्छति; अपितु ब्रह्मण्येव लीयते; न तु तस्योत्क्रान्तिः। तदुक्तम्—**'योऽकामो निष्काम आप्तकाम आत्मकामो भवति, न तस्य प्राणा उत्क्रामन्ति, इहैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्येति'**[2] इति।

सद्योमोक्षस्याधिकारिणो ब्रह्मज्ञानिनः कृते देवयानस्याप्यावश्यकता न वर्तते। तस्य सद्यो मुक्तौ केवलं प्रारब्धकर्मणो भोग एव व्यवधायको भवति। प्रारब्धकर्मणि भुक्ते तस्य शरीरपातकाल एव मुक्तिर्भवति विदेहकैवल्यरूपा। तस्य सञ्चितानि कर्माण्यशेषाणि ज्ञानेन नश्यन्ति। आत्मनि साक्षात्कारे सञ्चितकर्मणां क्षयो भवति। तदुक्तम्—**'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'**[3] इति। प्रारब्धकर्मणः क्षयो भोगेन भवति—**'भोगेन त्वितरे क्षपयित्वा सम्पद्यते'**[4] इति।

अथाधुना तेषां जीवानां गतिर्गीयते, ये अयनद्वयस्य सन्ति नैवाधिकारिणः, न च सन्ति सद्योमुक्त्यधिकारिणः। एतादृशो जीवो मरणकाले शरीरं विहाय स्वकर्मानुसारेण झटित्येवापरं शरीरं धारयति। ईश्वरः सर्वव्यापी सर्वज्ञश्च। तेन न्यायकरणे तिथिर्न निर्धार्यते। तत्र न्यायालये पक्षपातो विलम्बो वा न भवति। सद्य एव तस्य निर्णयानुसारेणावशो जीवः स्वकर्मफलं भोक्तुमपरं शरीरं धारयति तत्प्रेरणया। यथोक्तम्—

---

१. वे० सू० ४।२।२०;
२. बृ० उ० ४।४।६।
३. मु० उ० २।२।८;
४. वे० सू० ४।१।१९।

देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ।
देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥
व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलूकैवं देही कर्मगतिं गतः[३] ॥

अन्यच्चोपनिषद्युक्तम्—'जायस्व म्रियस्व इत्येतत् तृतीयं स्थानम्' इति ।

ये जीवा रमणीयचरणाः, ते रमणीयां योनिं प्राप्नुवन्ति—'तद् य इह रमणीय-चरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । ये अशुभाः क्रूरा नराधमाः सन्ति, ते आसुरीषु योनिषु (सूकरश्वादिषु) क्षिप्यन्ते' । यथोपनिषदि—'अथ य इह कपूयचरणा अभ्यासो ह यत्त कपूयां योनिमा-पद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इति ।

अस्माभिः क्रमाद् आसुरी प्रवृत्तिरभ्यासवैराग्याभ्यां त्याज्या । सदाचारेषु प्रवृत्तिर्विधेया । शास्त्रविहितानि कर्माणि कार्याणि । ततोऽन्ते आप्तकामाः श्रोत्रिया ब्रह्मनिष्ठाश्च भवितास्मः । उक्तञ्च—'कृधी न ऊर्ध्वं चरथाय जीवसे' ।

विवेचने यत्स्खलितं सरण्याः
पूज्या विचक्षणवरास्तद् शोधयन्तु ।
सम्प्रार्थये मुहुरहं विनयेन नित्यं
शास्त्राण्यनन्तविषयाणि च दुर्गमाणि ॥

● ● ●

---

३. श्रीमद्भागवतम्—१०।१।३९-४० ।

# आयुर्वेदपरम्परासु वृक्षायुर्वेदः

डॉ० पारसनाथद्विवेदी,

आचार्योऽध्यक्षश्च, पुराणेतिहासविभागस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

❀ ❀ ❀

शरीरेन्द्रियसत्त्वात्मसंयोगो नामायुः। शरीरं ह्यात्मनो भोगायतनमिन्द्रियाणि च भोगसाधनानि, सत्त्वं च मनःसंज्ञकं तदेवान्तःकरणमुच्यते, आत्मा च ज्ञानप्रापकः। एतेषां चतुर्णां संयोग एवायुरिति। आयुर्ज्ञानं यया विद्यया लभ्यते, स एवायुर्वेदः, यद्वाऽऽयुरस्मिन् विद्यतेऽनेन वाऽऽयुर्विन्दतीत्यायुर्वेदः। सोऽयमायुर्वेदो मनुष्यवत् पशु-पक्षि-वृक्षादिभिरपि सम्बद्धोऽस्ति।

भारतवर्षः कृषिप्रधानो देशः। तस्मादस्य कृते वनस्पतीनां प्रसवे वृक्षायुर्वेदस्य महत्युपयोगिता दृश्यते। प्राणिनां जीवनधारणं प्रकृत्या भवति। ताभ्य एव जीवन-दायिन्यः प्राणसञ्चारिण्यो वायव उत्पद्यन्ते। तदभावे च प्राणवतां जीवनं न सम्भवति। वायुर्हि प्राणो भूत्वा शरीरमाविशति, वायौ चामृतराशिर्विद्यते। एवं च वृक्षाणां वनस्पतीनामावश्यकता वैज्ञानिकैरप्यङ्गीक्रियते। तदेवं वृक्षाणां वनस्पतीनामुप-योगितामाकलय्य तेषामारोग्यार्थश्चिकित्साविधयो धन्वन्तरिणाभिहिताः। अत्र प्रकरणे वृक्षगुल्मलतादिषु प्राकृतिकवनस्पतिषु च जायमानानां रोगाणां चिकित्सा विवेचिता वर्तन्ते। वृक्षादीनां महत्त्वं प्रतिपादयतोक्तं यदत्यधिकवृक्षजलशीलो देशोऽनूपः कथ्यते, स वातकफोत्पादको भवति। जाङ्गलदेशोऽनूपदेशस्य गुणप्रभावेण रहितो भवति, जाङ्गलदेशोऽधिकपित्तोत्पादको भवति। अल्पवृक्षजलशीलो देशः साधारणः कथ्यते। साधारणदेशो मध्यमपित्तोत्पादकोऽस्ति। एते च वातपित्तकफा रोगाणां कारणानि सन्ति। एतेषां वैषम्येण रोगा जायन्ते। अपरञ्चैते वनस्पतयो न केवलं वातपित्तकफकरा एव भवन्ति, अपितु रोगजीवाणुहराः शक्तिवर्द्धकाश्चापि भवन्ति। यथा विडङ्ग-पलाशबीज-दाडिमादयो रोगकीटाणून् प्रतिकुर्वन्ति शरीरस्वास्थ्यमनु-वर्त्तयन्ति च। यथा वा निम्बपत्राणां सर्षपादानीनां चाग्नौ हुतेन रोगजीवाणवस्तत्र नागच्छन्ति।

वृक्षायुर्वेदस्य चिकित्साविद्या भारतवर्षस्य प्राचीनतमा विद्या विद्यते। ऋग्वेदे चौषधीषु वनस्पतीनामुल्लेखेन वनस्पतिविज्ञानस्य प्राचीनत्वं महत्त्वं च ज्ञायते। भूमण्डलेऽस्मिन् वनस्पतयो देवेभ्यस्त्रियुगं पुरा जाताः। तेषाञ्च शतं सप्त च स्थानानि

सन्ति[१]। एते वनस्पतय मातेव रक्षति जनान्। अत एव हितकारिण्यो मातर उक्ता:[२]। एतेषां वनस्पतीनामुपयोगो यज्ञकर्मणि स्वास्थ्यलाभाय च विशेषरूपेण भवति। वनस्पतीनां महत्त्व प्रतिपादयतोक्तं भामिनीविलासे—'ये वृक्षाः पत्रपुष्पफलादीनां भरं वहन्तो घर्मव्यथां शीतबाधां च सहन्ते तथा चान्येषां प्राणिनां सुखाय स्वशरीरमर्पयन्ति, वदान्यगुरवे तस्मै तरवे नमः'[३]। इयमेवोदात्तभावना वेदमन्त्रेष्वपि लभ्यते।

वनस्पतीनां चातुर्विध्यमुक्तं यजुर्वेदे,[४] चरकसंहितायां[५] च। तत्र ये वनस्पतयः पुष्पोद्गमानन्तरं फलिनो भवन्ति, ते 'वानस्पत्याः' कथ्यन्ते, यथा आम्रादयः। ये चापुष्पाः फलिनो भवन्ति, ते वनस्पतय उक्ता, यथा उदुम्बरादयः। केषाञ्चिन्मते वनस्पतिः वानस्पत्यश्चेति शब्दद्वयं वृक्षमात्रस्य बोधकम्। फलपाकानन्तरं यस्य नाशो जायते, तदौषधीरुक्ताः, यथा—मुद्ग-माषादयः। प्रतानवत्यो लतादयो वीरुधः स्मृताः, यथा—मालत्यादयः[६]। एते च वनस्पतय मातर इव प्राणिनः पोषयन्ति वर्द्धयन्ति च।

सुश्रुतमते[७] वृक्षादयः स्थावरान्तर्भूताः। स्थावराश्चतुर्विधाः—वनस्पतयो वृक्षा वीरुध ओषधयश्चेति। तासु अपुष्पा-फलवन्तो वनस्पतयः, पुष्पफलवन्तो वृक्षाः, प्रतानवत्यः स्तम्बिन्यश्च वीरुधः, फलपाकनिष्ठा ओषधय इति।

आयुर्वेदो ह्यथर्ववेदस्योपवेदः। अथर्ववेदे चानेकेषां वनस्पतीनामुल्लेखो विद्यते। तत्रोक्तं यत्राश्वत्था न्यग्रोधाश्च सपत्रा तिष्ठन्ति, यत्र चार्जुनादयो वृक्षा अजाश्रृङ्ग्यादयो वनस्पतयश्च भवन्ति, तत्र विषजन्तवो न तिष्ठन्ति[८]। सुश्रुतेऽपि जलदुर्ग धनिरोधकनागचम्पकोत्पलप्रभृतीनां वनस्पतीनामुल्लेखो वर्तते[९]। अथर्ववेदे

---

१. या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।
मनै नु बभ्रुणामहं शतं धामानि सप्त च॥ (ऋ० सं० १०।९७।१)

२. ओषधीरिति मातरो तद्वो देवीरुपब्रुवे। (ऋ० सं० १०।९०।४)

३. धत्ते भरं कुसुमपत्रफलावलीनां घर्मव्यथां वहति शीतभवा रुजश्च।
यो देहमर्पयति चान्यसुखस्य हेतोस्तस्मै वदान्यगुरवे तरवे नमोऽस्तु॥ (भामिनीविलासः)

४. यजुर्वेदः (वाजसनेयिसंहिता) १२।७५–७९,८९,९५।

५. वनस्पतिस्तथावीरुद् वानस्पत्यस्तथौषधिः। (चरकसंहिता, सूत्रस्थानम्—१।७०)

६. फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि।
ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः॥ (च० सं० १।७१–७२)

७. सुश्रुतसं०, सूत्रस्थानम्–१।२९।

८. अ० सं० ४।३७।४–६।

९. प्रसादनं च कर्त्तव्यं नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति (सुश्रुतसंहिता—४५।१२)।

चैते वृक्षा वन्या भवन्ति। एतेषां पत्रैः जलं स्वच्छं भवति। एतैर्वनस्पतिभिर्जलीयरोग-कीटाणवो नश्यन्ति।

अथर्ववेदे च चतुर्विधा चिकित्सा प्रोक्ता – आथर्वणीराङ्गिरसोदैवी मानुषी च। तत्र मानुषी चिकित्सा वनस्पतिसम्बद्धा। वनस्पतीनां गुणावगुणज्ञानं पशु-पक्षि-सर्पादिभिः भवन्ति[1]। पशुपक्षिणां स्वभावैश्च वनस्पतिविषये ज्ञानं जायते।

वेदे च षष्ट्युत्तरद्विशतवनस्पतीनामुल्लेखो विद्यते। तत्र वृक्षा वनस्पतयश्च सप्तसु श्रेणिषु विभक्ताः सन्ति—प्रस्तरणी, स्तम्भनी, एकशृङ्गी, प्रतानवती, अंशुमती, कण्डिनी, विशाखा चेति। एतेषामन्येऽपि विभागास्तत्रोक्ताः, यथा—अपुष्पाऽऽफला-फलिनी-पुष्पिणी-प्रसूवरी चेति। तत्र च वनस्पतीनां मूल-तूल-काण्ड-पुष्प-फल-त्वक्-तुष-वल्कलादयोऽङ्गा अप्युक्ताः सन्ति।

वाल्मीकिरामायणं हि संस्कृतसाहित्यस्यादिकाव्यम्। तत्र चाशोककुटजार्जुन-कदम्बादिवृक्षाणामुल्लेखोऽस्ति। तत्र चौषधिपर्वतस्याप्युल्लेखो वर्तते, यत्रानेके वनस्पतयः सन्ति। ये चायुर्वेदशास्त्रदृष्ट्या महत्त्वपूर्णाः सन्ति। महाभारते गरुड-पुराणे च महर्षिः काश्यपः तक्षकेण दंष्टं वृक्षं पुनरुज्जीवयामासेति कथा वर्णिता विद्यते[2]।

अग्निपुराणे वृक्षायुर्वेदस्य चर्चा विस्तरेणोपलभ्यते। तत्र च लतागुल्मवीरु-धादीनामाख्यानमुपलभ्यते। प्रथमं गृहात् कस्यां दिशि को वृक्षः शुभावह इति विवेचनमस्ति। तत्रोक्तं यद्गृहमुत्तरतः प्लक्षः शुभः, पूर्वतो वटः शुभः, दक्षिणतस्त्वाम्र-वृक्षः शुभः, पश्चिमाशायां चाश्वत्थो वृक्षः शुभ इति[3]। उपगृहं दक्षिणां दिशमुत्पन्नाः कण्टकद्रुमाः रिपुभयदाः क्षीरिणो वृक्षा अर्थहराः प्रोक्ता।[4] आवासस्थानस्य समीपे उद्यानव्यवस्था करणीया। उद्याने पुष्करिणीनिर्माणमप्यावश्यकम्। जलाशयारम्भाय पुष्य-मघा-हस्तोऽनुराधा-ज्येष्ठा-शतभिजा उत्तरात्रयश्चैतानि नक्षत्राणि शुभावहानि।

**रोपणविधिः**

अग्निपुराणे वृक्षाणां रोपणविधिरप्युक्तः। तत्रविधो कालं निरीक्ष्य वृक्षलता-गुल्मादीनां स्थानमुच्यते। कस्य वृक्षस्य कदा रोपणमुचितं स्यादिति संकेतोऽपि

---

१. अ० सं० ८।७।२३–२५।

२. यद् वृक्षं जीवयामास काश्यपस्तक्षकेण वै।
नूनं मन्त्रैर्हतविषो न प्रणश्येत् काश्यपात्॥ (म० भा० आ० प०—५०।३४)

३. अग्निपुराणम्—२८२/२-३।

४. 'आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय।' (बृहत्संहिता—५२।८४)

त्रोपलभ्यते । ज्योतिषशास्त्रदृष्ट्याऽऽयुर्वेदीयौषधीनामपि रोपणविधिरत्राख्यातो वर्तते । रोपणात्प्राक् क्षेत्रेषु रासायनिकद्रव्याणां निक्षेपः कार्यः ।

वृक्षाणां रोपणात्पूर्वं विप्रचन्द्रयोर्पूजनं विदध्यात् । वृक्षारोपणायोत्तरात्रयं स्वाती, हस्तः, रोहिणी, श्रवणो, मूलं, चैतानि नक्षत्राणि प्रशस्ततमानि सन्ति । वृक्षाणां रोपणकाले तदन्तरालो विंशतिहस्तः श्रेष्ठ उच्यते, षोडशहस्तान्तरो मध्यमः प्रोक्तः । द्वादशहस्तमितान्तरालोऽधम उच्यते[1], यतश्च सघना वृक्षा विफला जायन्ते । यदि सघना वृक्षा विफलाः स्युस्तदा पूर्वं स्त्रायुधविशेषेण तान् संशोधयेत् ।

**सेचनविधिः**

अग्निपुराणे वृक्षाणां सेचनविधिरप्युक्तः । अरिष्टाशोकपुन्नागशिरीषप्रियङ्गु-समाख्या अशोक-कदली-जम्बु-बकुल-दाडिमाश्चेति वृक्षा ग्रीष्मर्त्तौ सायं प्रातश्च सेच-नीयाः, शीतकाले च दिवसान्तरे सेचनीयाः, वर्षर्त्तौ च भूमौ शुष्कायां रोपिता वृक्षा सेचनीयाः ।

**वर्धकौषधिप्रयोगः**

वृक्षाणां वर्धकौषधीनां प्रयोगप्रकारः सर्वातिशायित्वमवलोक्यते । वृक्षाणां रोपणात्परं तत्र द्रव्यविशेषाणां रासायनिकद्रव्याणां च प्रक्षेपः कार्यः । काले काले निरावनस्य खुर्दनस्य सिञ्चनस्य व्यवस्थाऽपि कर्त्तव्या । तुषारादिभिर्वृक्षाणां रक्षा कथं स्यादित्युपाया अपि कार्याः । वृक्ष-लता-गुल्मादीनां विविधकीटपतङ्गादिभ्यो रक्षणं कथं भवेदिति व्यवस्थाऽपि तत्र प्रोक्ता वर्तते । यदि वृक्षादीनां वर्धनेऽवरोधः स्यात्तदा मत्स्याम्भसा सेचनेन तेषां वृद्धिर्भवति ! यथा चोक्तमग्निपुराणे—'मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः[2] ।'

**दोहदविधिः**

वृक्षाणां दोहदविधिरप्यत्रोपलभ्यते । नरप्रकृतीनां मातृप्रकृतीनां वृक्षाणां पार्थक्यत्वात्तत्र दोहदादिलक्षणमुक्तम् । विडङ्गतण्डुलोपेतं मात्स्यं मांसं च सर्वेषां वृक्षाणां दोहदं प्रोक्तम् । तत्र संयोगविधानेनैव दोहदादीनां विधिः सम्भवति । सामान्येन सर्वेषां वृक्षाणां दोहदकालस्य निर्धारणमवलोक्यते तत्र । यथा चोक्तं हिन्दीभाषायां केनचिद् विदुषा—

पाँचे आम पचीसे महुआ ।
तीस वर्ष में इमिली का फहुआ ।।

---

१. उत्तमं विंशतिर्हस्ताः मध्यमं षोडशान्तरम् ।
स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ।। ( अ० पु०—२८२।८-९ )

२. अग्निपुराणम्—२८२।१२ ।

अयम्भावः—यदाम्रवृक्षस्य दोहदकालः पञ्चमे वर्षे भवति, मधूकस्य पञ्चविंशति-वर्षे दोहदकालो जायते, तिन्तिडीकस्य दोहदकालस्त्रिंशत्तमे वर्षे भवति। एवमन्येषामपि वृक्षाणां दोहदकालस्तत्र निर्दिष्टो वर्तते।

वृक्षेषु फलविनाशशीलेषु सत्सु कुलत्थमांसमुद्गयवतिलादिभिर्घृतशीतपयसा सेचनं सर्वदैव फलपुष्पवृद्धिं तनोति। अविकाजयोर्विष्ठायाः पूर्णं यवचूर्णं तिलानि गोमांसं जलं च सप्तदिवसपर्यन्तमेकस्थाने निधापयेत्। तदनु तेन तरुसेचनं सर्वविधवृक्षेभ्यः फलपुष्पसमृद्धिं प्रददाति। विडङ्गतण्डुलैर्युतं मत्स्यानां मांसं वृक्षाणां दोहदमुक्तम्। अस्य सेचनेन निखिलविधानां वृक्षाणां रोगान् मर्दयति।

**वृक्षादीनां जीवनम्**

वृक्षादिषु जीवनं भवति, तेऽपि मनुष्यवत् सुख-दुःखादिकमनुभवन्ति। वृक्षादीनां सजीवत्वप्रतिपादनं तावदाधुनिकपाश्चात्त्यविज्ञानविदां नवाविष्कारः। उदयनाचार्येण सहस्रवर्षपूर्वमपि युक्त्या तेषां शरीरत्वं सजीवत्वं च प्रतिपादितम्[1]—वृक्षादयः प्रति-नियतभोक्त्रधिष्ठिता जीवनमरणस्वप्नजागरणरोगभेषजप्रयोगसजातीयानुबन्धानुकूलो-पगमप्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत्। एतेऽपि मूले निषिक्तान् जलान्, दोहदं च गृह्णन्ति। एषामपि वृद्धिभग्नक्षतसंरोहणादयोऽवलोक्यन्ते।

छान्दोग्योपनिषदि वृक्षादीनां सजीवत्वप्रतिपादनपराणि वाक्यानि सुमुपलभ्यन्ते—'अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेत्, यो मध्येऽभ्याहन्याज्जीवन् स्रवेत्, योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत्, स एव जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमा-नस्तिष्ठति' ( छान्दोग्योपनिषद्—६।११।१ )।

महाभारतेऽप्युक्तं यदेतेऽपि शीतवर्षातपसहाः सुखदुःखसमन्विताश्च भवन्ति, एतेऽपि इन्द्रियसुखमनुभवन्ति। एतेऽपि मनुष्यवच्छृण्वन्ति, पश्यन्ति, जिघ्रन्ति, रसान् गृह्णन्ति च[2]। एवं चैते वृक्षादयोऽपि जीवन्ति म्रियन्ते च, रुग्णा भवन्ति, भेषजं च गृह्णन्ति। एष्वपि चैतन्यं जायते।

---

१. किरणावली—पृ० ५७-५८।

२. श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः।
वल्ली वेष्टयते वृक्षं सर्व्वतश्चैव गच्छति॥
नह्यद्रष्टुश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः।
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि॥
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः।
पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात्॥
व्याधिप्रतिक्रियात्वाच्च विद्यते रसनं द्रुमे।
वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत्॥
तथा पवनसंयुक्तः पादैः पिबति पादपः।
सुखदुःखयोश्च ग्रहणात् छिन्नस्य च विरोहणात्॥
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते॥ ( महाभारते, शान्तिपर्वणि )

महावैज्ञानिकानां जगदीशचन्द्रबोसमहोदयानां कथनमस्ति यन्मया जगतः समक्षे स एव सिद्धान्तः स्थाप्यते, यो हि भारतीयैर्महर्षिभिः सहस्रवर्षपूर्वमन्वेषितः। उदयनाचार्येणापि वृक्षादीनां जीवन-मरण-रुग्णतौषध्युपचारविषये चर्चा कृता वर्तते[1]।

अत्र पुराणे आयुर्वेदसमन्वयेन वृक्षाणां रोपणं रक्षणं विकसनञ्च कल्पितम्। वृक्षलतादीनां रोगाणां लक्षणं निदानं निराकरणमपि चिन्तितमत्र। कृषिविज्ञाने समुपलभ्यमानानामुपायानामत्राकृतिरत्र साकल्येनाख्यायते। वृक्षाणां दोहदादिकालेऽपि मानवसुलभसंस्कारेणैव तेषामभिरक्षणमिहोच्यते। अत आधुनिककृषिविज्ञानस्यापि कल्याणमनेन चिकित्साविज्ञानेन चिन्तितमवलोक्यते।

एवमग्निपुराणे वृक्षायुर्वेदविज्ञानस्य सर्वोत्कृष्टं महत्त्वं वरीवर्त्ति।

## अग्निपुराणस्य द्व्यशीत्यधिकशततमेऽध्याये वृक्षायुर्वेदः—

**धन्वन्तरिरुवाच—**

वृक्षायुर्वेदमाख्यास्ये प्लक्षश्चोत्तरतः शुभः।
प्राग्वटो याम्यतस्त्वाम्र आप्येऽश्वत्थः क्रमेण तु॥ १॥
दक्षिणां दिशमुत्पन्नाः समीपे कण्टकिद्रुमाः।
उद्यानं गृहवामे[2] स्यात् तिलान् वाप्यथ पुष्पितान्॥ २॥
गृह्णीयाद्रोपयेद् वृक्षान् द्विजं चन्द्रं प्रपूज्य च।
ध्रुवाणि पञ्च वायव्यं हस्तं प्राजेशवैष्णवम्॥ ३॥
नक्षत्राणि तथा मूलं शस्यन्ते द्रुमरोपणे।
प्रवेशयेन्नदीवाहान् पुष्करिण्यान्तु कारयेत्॥ ४॥
हस्तो मघा तथा मैत्रमाद्यं पुष्पं सवासवम्।
जलाशयसमारम्भे वारुणञ्चोत्तरात्रयम्॥ ५॥
सम्पूज्य वरुणं विष्णुं पर्ज्जन्यं तत्समाचरेत्।
अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः॥ ६॥
अशोकः कदली जम्बुस्तथा बकुलदाडिमाः।
सायं प्रातस्तु घर्मर्त्तौ शीतकाले दिनान्तरे॥ ७।

---

१. Udayana Notices in Plants the Phenomena of life, death, sleep weaping, disease, drugging, transmission of specific characters by means of ova, Movement towards what is favourable and away from what is Unfavourable.

२. गृहवासे इति पाठोऽपि लभ्यते।

वर्षारात्रौ भुवः शोषे सेक्तव्या रोपिता द्रुमाः।
उत्तमं विंशतिर्हस्तां मध्यमं षोडशान्तरम् ॥ ८ ॥

स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम्।
विफलाः स्युर्घना वृक्षा शस्त्रेणादौ हि शोधनम् ॥ ९ ॥

विडङ्गघृतपङ्क्ताक्तान् सेचयेच्छीतवारिणा।
फलनाशे कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः ॥ १० ॥

घृतशीतपयःसेकः फलपुष्पाय सर्वदा।
अविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ॥ ११ ॥

गोमांसमुदकञ्चैव सप्तरात्रं निधापयेत्।
उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः ॥ १२ ॥

मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः।
विडङ्गतण्डुलोपेतं मत्स्यं मांसं हि दोहदम् ॥ १३ ॥
सर्वेषामविशेषेण वृक्षाणां रोगमर्दनम् ॥ १४ ॥

॥ इत्यादिमहापुराणे आग्नेये वृक्षायुर्वेदो नाम द्व्यशीत्यधिकशततमोऽध्यायः ॥

• • •

# कायाग्निमेव मतिमान् रक्षन् रक्षति जीवितम्

डॉ० विद्याधरशुक्लः, कविराजः,
जी० ए० एम्० एस्०, एम्० ए० आयुर्वेदाचार्यः, विद्यावारिधिः (पी–एच्० डी०)
भू० पू० उपाचार्यः, आयुर्वेद-महाविद्यालयस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

❀ ❀ ❀

**विशिखानुप्रवेशः**

शरीरलावण्यं नयनज्योतिरङ्गेषु गौरादिवर्णानामभिव्यक्तिर्देहस्योष्णता भ्राजिष्णुताऽऽहारपरिणतिप्रभृतयो भावाश्च शारीरिकतैजसभूताभिव्यञ्जकाः[1]। ज्ञानं बुद्धिर्मेधा, धृति-स्मृति-सदाचारादयश्च भावास्तैजसभूतप्रतीकात्मकाः। जगति च ये केचन सौन्दर्यस्य सत्यस्य शिवस्य समग्रस्य ऐश्वर्यस्य च निधिभूता पदार्थाः, तेषु सर्वेषु वैश्वानरस्य दिव्यं तेजः प्रज्वलितमभिलक्ष्यते। उषाया लालित्ये, अरुणस्य अरुणिमायाम्, भुवनभास्करस्य सवितुश्च रश्मिनिचये चाग्नेरेव स्फुलिङ्गा विद्योतन्ते।

भास्करश्च स्थावरजङ्गमात्मकस्य समस्तजगतश्चैतन्याधायकः। भगवांश्च सूर्यो नारायण इत्याख्यातस्तस्मिंश्चोदयगिरिगते कमलवनं विकसति, पक्षिणः कूजन्ति, पशवश्च निर्बन्धं स्वस्वाहारगवेषणव्रजने व्यापृता भवन्ति। मानवस्य समग्रं जीवन-स्रोतः प्रस्फुरति। अभिनवचेतनास्फुरणे मानवस्य रमणीयकल्पनोन्मेषाः सरूपतां व्रजन्ति। विश्वचेतनानिधेर्विश्वम्भरस्य भगवतो भास्करस्य वरेण्यं तेजो जीवनस्य निखिलेषु व्यापारेषु गतिशीलतामातनोति। अतश्चाखिलवेदमन्त्रप्रतिनिधिभूतस्य गायत्रीमन्त्रस्य निदिध्यासनेन तस्य सवितुर्देवस्योपासनाद्वारेण बुद्धेस्तेजस्विताकामा प्रार्थयामः।

ऋग्वेदो हि निखिलविश्ववाङ्मयस्य चैरन्तनं गन्थरत्नम्। तस्य चादिमे मन्त्रे अग्नेरेव स्तुतिर्विहिता—'अग्निमीळे पुरोहितम्'[2]। अग्निसोमीये जगति सर्वमेव सूष्टमग्निनाऽनुस्यूतम्। 'जाते जाते विद्यते' इति जातवेदसशब्देनाग्निरुच्यते। जलनिधौ समुद्रे वडवानलरूपेणाग्निरवस्थितः। वृक्ष-लता-गुल्मसङ्कुले वने दावानल-

---

१. 'तैजसास्तु—रूपम्, रूपेन्द्रियम्, वर्णः, सन्तापो भ्राजिष्णुता, पक्तिरमर्षस्तैक्ष्ण्यं शौर्यं च'। (सुश्रुत० शारीर० १।१९)

२. ऋ० सं० १।१।१।

रूपेण वह्नेर्व्यापकता प्रतीयते। एवमेव यथा लोके तथा पिण्डशरीरे समस्तैश्वर्यमयोऽग्निरवतिष्ठते। यश्च मानवोऽग्निं सततं प्रज्वलितं विदधाति, स खलु वसूनि विन्दति—'योऽग्निं तन्वो दमे देवं मर्तः सपर्यति तस्माद्दीदयत वसु'[1] इति।

मनुष्यवाचश्चाधिदैवतमग्निः[2]। यदा देहेऽग्निबलमपहीयते, न तदा देहगतिर्भवति व्यवस्थिता, वाणी चावरुद्धा जायते। क्षीणे चाग्निबले समस्तमेव शरीरकर्म शैथिल्यं भजते।

आयुर्वेदे च लोकपुरुषयोः साम्यमाख्यातमास्ते। स्पष्टमेव च निगदितं यत् 'पुरुषोऽयं लोकसम्मितः'। लोके हि यावन्तो मूर्तिमन्तो भावविशेषाः, तावन्त एव पुरुषे। यथा च क्षित्यप्तेजोमरुद्व्योम अव्यक्तं (ब्रह्म) चेति समुदितं लोक इत्यभिधीयते, तद्वदेतदेव षड्धातवः समुदिताः पुरुषसंज्ञां लभन्ते[3]। एवञ्च पुरुषे यदौष्ण्यम्, तदग्नेरस्तित्वबोधकम्।

शरीरक्रियाप्रवर्तने शरीरधारणे च प्रमुखरूपेणाग्नेरेव क्रियाशीलता प्रतीयते, प्रेरकरूपेण वायुश्च गण्यते। शरीरे अग्निः पित्तरूपेण, सोमः (जलं) कफरूपेण, वायुश्च वातरूपेणावस्थितो वर्तते। यथा प्राकृतदशायां सूर्य-चन्द्र-वायूनां गतिसौष्ठवे सति लोकस्य समस्तमेव व्यापारजातं सुव्यवस्थितं भवति, तथैव शरीरे सोमसूर्यानिलानां प्राकृतस्थितौ शरीरमिदं सुव्यस्थितं सञ्चाल्यते[4]।

### कायाग्नेर्महत्त्वम्

अग्निरत्र पाचकभ्राजकालोचकरञ्जकसाधकानां पाञ्चभौतिकानां सर्वधात्वनुगतानां चोष्मणां शक्तिरूपतयाऽवस्थितो बोद्धव्यः। अग्निश्च प्राणिनामायोर्बलस्य वर्णस्य समस्तस्य जीवनव्यापारस्य च मूलम्[5]। स्वास्थ्यमुत्साहो कान्तिरोजस्तेजः

---

१. ऋ० सं०—८।४४।१५।

२. अधिदैवतं तु—'बुद्धेर्ब्रह्मा·········वाचोऽग्निः' (सुश्रुत० शारीर० १।७)।

३. ''पुरुषोऽयं लोकसम्मितः इत्युवाच भगवानात्रेयः। यावन्तो हि लोके मूर्तिमन्तो भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे, तावन्तः लोके।··· ··· ··· ··· षड्धातवः समुदिताः पुरुष इति शब्दं लभन्ते'' (चरक० शारीर० ४।१३)।

४. विसर्गादानविक्षेपैः सोमसूर्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ (सुश्रुत० सूत्र० २१।७)

५. 'बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः' (चरक० चिकित्सा० १५।३)।



प्राणानां सुस्थितिरेतत्सर्वमायत्तं कायाग्निसौष्ठवे। यदि चेत् कायाग्निः शान्तो भवति, तदा जीवनमेव दुरापम्, युक्ते चाग्नौ व्याधिरहितं सुदीर्घं जीवनं लभ्यते[1]।

प्राणिनां जीवनस्य बलवर्णौजसां च मूलमाहारो निगदितः[2]। सर्वगुणसमुदितस्याप्याहारस्य शरीरोपयोगिता जाठराग्निव्यापाराधीना। आहारद्रव्याणि जाठराग्निना पक्वानि धातुपोषणे प्रभवन्ति। क्रमशश्च धात्वग्निव्यापारेणोत्तरधातूनां पोषणं भवति। आहारस्य शरीरोपयोगिता सम्पादनेऽतिशयमहत्त्वपूर्णकार्यनिर्वहणादग्निर्जीवनव्यापारस्य मूलमुच्यते[3]।

प्रत्यहं क्षीयमाणस्य शरीरधातोः पूर्तिः पोषणं चाहारेण भवति। भुक्तान्नस्यासम्यक्पाके तदभ्यवहृतमन्नं धातुक्षयपूरणे पोषणे वा न समर्थम्। आहारपाकाभावे च रोगाणामनेकेषामुद्भव आशङ्कितः। अतश्च शारीरिकक्षतिपूर्तौ पोषणे चाहारपाकप्रक्रियायाऽतिशययोगदानादग्निः शरीरपोषणे सर्वप्रधानं हेतुः। तथा च—

**यदन्नं देहधात्वोजो बलवर्णादिपोषकम्।**
**तत्राग्निर्हेतुराहारान्न ह्यपक्वाद् रसादयः[4]॥**

एवञ्चेष्टगन्धवर्णरसस्पर्शं मनोऽनुकूलमन्नं जाठरेणाग्निना परिपक्वं शरीराङ्गानां पोषणाय प्रभवति।

**अग्निप्रकाराः**

आयुर्वेदशास्त्रे त्रयोऽग्नयो वर्णिताः, १—जाठराग्निः, २—धात्वग्निः, ३—भूताग्निश्चेति।

**१. जाठराग्निः**—अयं च 'अन्तरग्निः'[5], 'पाचकाग्निः', 'जाठराग्निः', 'कायाग्निश्च'[6] कथ्यते। अस्य च स्थानमामाशयपक्वाशययोर्मध्यम्। अस्य च द्वेधा कार्यं सम्पद्यते—१—स्थानिकरूपेण, २—सार्वदेहिकरूपेण च।

---

१. आयुर्वर्णं बलं स्वास्थ्यमुत्साहोपचयौ प्रभा।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः॥
शान्तेऽग्नौ म्रियते युक्ते चिरञ्जीवत्यनामयः।
रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते॥ (चरक० चि० १५।३-४)

२. प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च। आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च तथा ह्याहारवैषम्यादस्वास्थ्यम्' (सुश्रुत० सूत्र० ४६।३)।

३. विविधमशितपीतलीढखादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं············शरीरधातूनूर्जयति च। धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते'। (चरक० सूत्र० २८।३)

४. च० सं०, चिकित्सा० १५।५; ५. च० सं० सूत्रस्था० २८।४।

६. अष्टाङ्गहृ० सू० ११।३४।

**स्थानिकम्**—अशित-पीत-लीढ-खादितादीनामन्नानां पाचनम्, दोष-रस-मूत्र-पुरीषविवेचनञ्च ।

**सार्वदैहिकम्**—स्वबलेन धात्वग्नीनां भूताग्नीनाञ्च बलाधानं पोषणञ्च ।

तथा ह्युक्तम्—'तच्चादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति, विवेचयति च रसदोषमूत्रपुरीषाणि तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति, तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा[1]' ।

**२. धात्वग्निः**—अस्य चाग्नेः सप्त प्रकारा भवन्ति—१. रसाग्निः, २. रक्ताग्निः, ३. मांसाग्निः, ४. मेदोऽग्निः, ५. अस्थ्यग्निः, ६. मज्जाग्निः, ७. पुरुषेषु शुक्राग्निः, स्त्रीषु च आर्तवाग्निः । एषां समेषामेकं नाम धात्वग्निः ।

एषामग्नीनां मन्दतायां धातुवृद्धिः दीप्तौ च धातुक्षयो भवति । तथा च—

**स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संस्थिताः ।**
**तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः[2] ॥**

पक्वादन्नरसादुत्पन्ना धातवो न तथा सूक्ष्मा भवन्ति, यथा ते ग्राह्या भवेयुः, अतश्च सूक्ष्मीकरणार्थं ग्राह्यत्वापादनार्थञ्च धात्वग्निभिस्तत्पाकोऽपेक्षितो भवति । प्रत्येकं चाग्निस्तत् पचति । एवञ्चोत्तरोत्तरधातूनां पोषणं भवति[3] ।

**पञ्चभूताग्निः**

भौम-आप्य-आग्नेय-वायव्य-नाभसभेदेन पञ्चभूताग्नयो भवन्ति । भूताग्नयश्च आहारद्रव्यगतपार्थिव-आप्य-आग्नेय-वायव्य-नाभसाहारगुणान् पचन्ति, तेन च पार्थिवाद्याहारगुणा देहस्य पार्थिवादिगुणान् पोषयन्ति । एवञ्च पाञ्चभौतिकाहारेण पाञ्चभौतिकशरीरपोषणे पञ्चभूताग्नीनां महत्त्वं प्रशस्ततमम्[4] ।

---

१. सुश्रुत० सूत्र० २१।१०;   २. अष्टा० हृ० सू० ११।३४ ।

३. (क) यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः ।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुतः ॥ (च० चि० ९।३९)

(ख) 'धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते' । (च० सू० २८।३)

(ग) सप्तभिर्देहधातारो धातवो द्विविधं पुनः ।
यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥ (च० चि० १५।१५)

४. अन्नमिष्टं ह्युपहितमिष्टैर्गन्धादिभिः पृथक् ।
देहे प्रीणाति गन्धादीन् घ्राणादीनिन्द्रियाणि च ॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि ॥
यथास्वं स्वं च पुष्णन्ति देहे द्रव्यगुणाः पृथक् ।
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः ॥ (चरक० चि० १५।१२-१४)

त्रयोदशाग्नीनां यथोचितव्यापारद्वारेण शरीरमिदं साधु यथास्थितौ तिष्ठति। एषु कस्याप्यग्नेर्विकृतौ शरीरं व्याधिमन्दिरं भवति[1]।

एवञ्चाग्नीनां नानाविधव्यापारपरम्परया शरीरपोषणं भवति। भूताग्नीनां धात्वग्नीनाञ्च पोषणं जठराग्निकर्तृकमेव। यदा जाठरोऽग्निर्मन्दतां व्रजति, तदा भूताग्नि-धात्वग्न्योरपि मन्दत्वमुपजायते। अतः शरीरपोषणे जठराग्नेरेव प्राधान्यमस्ति। अन्ये चाग्नयो जठराग्निबलेन सबला भवन्ति, तेषां बलं जठराग्न्यायत्तम्। एवञ्च सर्वाग्निषु जठराग्निः प्रधानमिति निश्चप्रचम्।

**पाचनप्रणाली**

मुखगह्वरगतो ह्याहारस्तत्रैवांशिकरूपेण पच्यते। यदा चादानकर्मा प्राणवायुस्तमाहारराशिमामाशयं प्रापयति, तदा तत्रस्थक्लेदककफस्नेहांशमिश्रणेन आहारस्य संघातभेदो भवति, कणशश्च विभक्तो मृदुः क्लिन्नश्च जायते। सोऽर्धपक्व आहारो ग्रहणी (पच्यमानाशयः) गतस्तत्रानेकविधपाचकरसैः सम्यङ्मिश्रितो भवति, अत्रैव अग्न्याशयादागतेन रसेन पित्ताशयादागतेन पित्तेन चान्नस्य पूर्णतया पाचनं जायते। एतेन च पाचनेन आहारः प्रसादकिट्टरूपभागद्वयपरिणतिं व्रजति। प्रसादभागश्च 'अन्नरसः' इत्यभिधीयते[2]।

आयुर्वेदीयक्रियाशारीरदृष्ट्याऽऽहारपाकस्य द्वे अवस्थे भवतः—१. अवस्थापाकः, २. निष्ठापाकश्चेति।

मुख-आमाशय-ग्रहणी-क्षुद्रान्त्रेषु क्रमशः स्थितेन बोधककफक्लेदककफ-समानवायु-पाचकपित्तैरन्नस्य पाचनं भवति। आमावस्था-पच्यमानावस्था-पक्वावस्थासु षड्रसवदाहारात् तत्तत्स्थानप्रभावानुसारं स्थूलकफ-पित्त-वायूनामुत्पत्तिर्भवति। सेयं क्रिया **'अवस्थापाकः'** इत्यभिधीयते।

ततश्च भूताग्निव्यापारेण धात्वग्निव्यापारेण च **'निष्ठापाकः'** प्रारभ्यते। प्रतिभूतं प्रतिधातु चाग्निभेदः। ते चाग्नयः समानगुणवदाहारपाचनक्षमाः, यथा—पार्थिवाग्निः पार्थिवभागस्य, जलाग्निः जलीयभागस्य पाचनं करोति (भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः। पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन्

---

१. अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः।
मलवृद्ध्या प्रवर्तन्ते विशेषेणोदराणि तु॥ (चरक० चि० १३।९)

२. अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति।
तद् द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम्॥
समानेनावधूतोऽग्निरुदर्यः पवनेन तु।
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये॥ (चरक० चि० १५।६-७)

पचन्ति हि)। ततश्च सोऽन्नरसो द्रवीभूतो ग्रहणीकलाकोशिकाभिर्गृहीतः प्रथमं प्रतिहारिणीसिरामाध्यमेन यकृति याति, ततः तिसृषु यकृतीसिरासु, ततोऽधरामहासिरायाम्, ततश्च हृदि, हृदयाच्च रक्तपरिभ्रमणद्वारेण सम्पूर्णे शरीरे परिभ्रमन् धातूनां सान्निध्यं भजते। धात्वग्नयश्च तस्मादेव स्वानुकूलांशं गृहीत्वा तत्सात्म्यीकरणार्थं पुनश्च पचन्ति। परिणामतश्च सोऽयं रसः प्रसाद-किट्टभागयोर्विभक्तो भवति। तथा च—

सप्तभिर्देहधातारो धातवो द्विविधं पुनः।
यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत्॥ (चरक० चि० १५।१५)

कायाग्नेः समुचितेन कर्मणा शरीरस्य संभरणं पोषणञ्च जायते। एतावता च कायाग्निर्भगवानीश्वरश्च कथितः। तथापि सत्यपीश्वरत्वे स खलु प्राणापानसमानवाय्वधीनः। प्राणोऽन्नादानकर्मणा, अपानो यथाकालं मल-मूत्रादिनिर्हरणेन, समानोऽग्निश्च स्वसन्धुक्षणस्वभावेन कायाग्निं प्रज्वलितं संरक्ष्य तत्पालयति। एवञ्च समस्तस्य शरीरस्य जीवनव्यापारः ( Mechanism of digestion ) कायाग्निः ( जठराग्निः ) नैव सञ्चालितो भवति। स च पचनव्यापारो वातसंस्थानाधीनः (Nervous control) 'समीरणोऽग्नेः'[1]। तथा हि—

जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः।
सौक्ष्म्याद् रसानाददानो विवेक्तुं नैव शक्यते॥
प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः।
ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः[2]॥

**मन्दाग्नि-परिचयः**

अनात्मवान् लोलुपो जनो यदाऽग्निबलमसमीक्ष्य रागवशादतिमात्रमाहारराशिमाददाति, तदा तस्य जाठरोऽग्निस्तमाहारराशिं न पाचयति सम्यक्। भोजनानन्तरमामाशयेऽलसीभूत आहारस्तिष्ठति। शरीराङ्गेषु मर्दः, हृल्लासः, व्यग्रता, उदरे पीडा, स्तब्धता, आलस्यम्, अम्लोद्गारः, करणानामसामर्थ्यञ्चोपजायते। तथा च—

अग्निदुष्ट्या यदा सम्यग्भोजनेच्छा न जायते।
अपाको वा भवेच्चापि मन्दाग्नित्वं तदोच्यते॥

**निदानं सम्प्राप्तिश्च**

अभोजनाद् अध्यशनाद् अतिमात्रभोजनाद् विषमाशनात् प्रकृति-सात्म्यविपरीतभोजनाद् अतिगुरु-शीत-रूक्ष-दूषिताहारसेवनाद् वमन-विरेचन-स्नेहपानातियोगाद् मिथ्याहारविहाराभ्याञ्च जठराग्निर्मन्दतां व्रजति। दीर्घव्याधिपीडनाद् आप्ययिकव्याधिकारणाद् रोगजन्यकार्श्याद् मलमूत्राद्यधारणीयवेगधारणाच्च मन्दाग्नित्वमुपजायते।

---

१. चरकसं० सू० १२।८; २. सुश्रुतसं० सू० ३५।३१-३२।

आमाशयिकदाहशोथौ, तीक्ष्णचायपानम्, तीक्ष्णमरीचाम्लादियुक्तव्यञ्जन-सेवनम्, मद्यातिपानम्, अनाहारे मद्यपानम्, आमाशयार्बुदम्, गलशोथ एवमादि चान्यानि निदानानि मन्दाग्नितां जनयन्ति।

एभिश्च हेतुभिरामाशयिकपाचकरसस्राविग्रन्थिभ्यः पूर्वमतिमात्रं स्रावो भवति, तदा दाहाधिक्यमपि सम्भवति। क्रमेण च रसस्राविण्यः क्षीणा भवन्ति, तथा हि पाचनशक्तिराहारस्य पुरःसरणक्रिया च शैथिल्यं भजते। परिणामतश्च दीर्घकालमाहारस्तत्रामाशय एव तिष्ठति। कोथजननाच्चोपद्रवा जायन्ते। दुष्टवायोश्चोत्पत्तिर्भवति, ततश्चाध्मान-शूली भवतः। पुनः पुनश्च विकारोपहतत्वादामाशयस्य शैथिल्यं विस्तारश्च भवति। श्लेष्मलत्वङ्नाशात् क्लेदककफस्रावे न्यूनता जायते। पाचकरस-स्राविग्रन्थयश्च निष्क्रियाः शिथिलाश्च भवन्ति, अवरुद्धाश्च जायन्ते।

अतिजलपानाद् विषमभोजनाद् धारणीयवेगाविधारणाद् अधारणीयवेगधारणाद् निद्रावैषम्यात् सात्म्यं लघु चापि भुक्तं न सम्यक् पच्यते, सेयं दशा 'मन्दाग्निः' इति रोगाभिधाना[१]।

**मनोविकारजमन्दाग्निः**

परसम्पत्तावीर्ष्या, भय-शोक-चिन्ता-क्रोध-लोभ-मद-मात्सर्य-दैन्य-द्वेषादिमानस-विकारव्यापृतचेतसश्च जठराग्निः क्षीयते[२]। काम-क्रोध-लोभ-मोह-लज्जा-गर्व-उद्वेग-कष्टप्रदानिद्रादिकारणजन्यमनोव्यथादशायां यदाहारजातमुपभुज्यते, न च तत्पाकाय

---

१. (क) अभोजनादजीर्णातिभोजनाद् विषमाशनात्।
असात्म्यगुरुशीतातिरूक्षसंदुष्टभोजनात् ॥
विरेकवमनस्नेहविभ्रमाद् व्याधिकर्षणात्।
देशकालर्तुवैषम्याद् वेगानां च विधारणात् ॥
दुष्यत्यग्निः.............................. ॥ (चरक० चि० १५।४२-४४)

(ख) अतीतकालं भुञ्जानो वायुनोपहतेऽनले।
कृच्छ्राद् विपच्यते भुक्तं द्वितीयं न च काङ्क्षति ॥ (सुश्रुत० सूत्र० ४६-४७३)

(ग) अत्यम्बुपानाद्विषमाशनाच्च
सन्धारणात् स्वप्नविपर्ययाच्च।
कालेऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य ॥ (सुश्रुत० सूत्र० ४६।५००)

२ ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न पाकं भजते नरस्य ॥ (सुश्रुत० सूत्र० ४६।४९९)

कल्पते यथायथम् । फलतश्चाग्निमान्द्यजरोगाणामाश्रयीभूतं शरीरमाक्राम्यते व्याधि-निकरैः। चिन्ता-दैन्य-शोकादिमनोविकारप्रभावेण सम्पूर्णमेव वातसंस्थानमवसन्नं भवति । वातसहकारविरहेण पचनसंस्थानमप्यवसन्नं जायते, तत्परिणतिश्च मन्दाग्नौ पर्यवस्यति[1]।

मानसिकक्षोभसहकृतभावावेशाच्चामाशयिकरसस्य अन्यविधस्य पाचकरसस्य च क्षरणं क्षीणं भवति, तेन चाग्निर्मन्दतां व्रजति । मनोविकारप्रभावेण लालाग्रन्थि-भ्योऽपि मन्दं मन्दमेव लालास्रवणं भवति । व्यवहारायुर्वेदे किल विद्यत एषा प्राचीना प्रणाली यद् अपराध-परीक्षणार्थमभियुक्ताय किञ्चिन्मात्रं शुष्कं सक्तुकं खादनाय दीयते। एतत्कर्मणश्चेदं रहस्यमस्ति यद् यदि चेदभियुक्तः सत्यमेव कृतापराधो भवेत्, न तदा सः मुखस्थं चूर्णमत्तुं प्रभवेत्, यतो हि भयलज्जाऽऽशङ्कादिमनोविकारप्रभावेण न सम्यग् लालास्रावो जायते, तेन तच्चूर्णं नहि भवति क्लिन्नम्, न च सोऽपराधी सक्तु-मत्तुं समर्थो भवेत् । एवञ्चापराधः सिद्ध्यति ।

भावावेशवशाच्च पाचनसंस्थानं निष्क्रियमल्पक्रियं वा भवति । मनसि क्षुब्धे आहारविधिविशेषायतान्यविगणय्य भुज्यते यदृच्छया, न च भुक्तं स्वदते, न च चर्व्यते, अतश्च पाचनस्य क्रमो विरुध्यते, पाचनक्रियाव्यवधानेन च जायतेऽग्निमान्द्यमिति ।

कफप्रधानेषु जनेषु यदाग्निस्थानं कफाक्रान्तं भवति, तदा किल मन्दता जायतेऽग्नेः[2] । कफप्रकृतिको जनो यदाऽऽलस्यपरिगृहीत आस्यासुखं स्वप्नसुखं चाति-मात्रं सेवते, मधुराम्ललवणानि सेवते, नवान्नं दधि च भुङ्क्ते, ग्राम्यपशूनां जलेचराणां वा मांसमश्नाति, मिष्टान्नं कफवर्धकाहारविहारौ च नैरन्तर्येण सेवते, तदा वृद्धो कफोऽग्निमान्द्यकरो भवति[3] ।

**लक्षणानि**

आहारस्यामाशयेऽलसीभावः, अम्लोद्गारः, आलस्यम्, शैथिल्यम्, शिरःशूलम्, मूर्च्छा, भ्रमः, जृम्भा, अङ्गमर्दः, पिपासा, वमनेच्छा, प्रवाहणेच्छा, अन्नाविपाकः, उदावर्तानाहौ, विष्टम्भताप्रभृतीनि लक्षणानि मन्दाग्निं प्रकटयन्ति[4] ।

---

१. कामक्रोधलोभमोहेर्ष्याह्रीशोकमानोद्वेगभयोपतप्तमनसा वा यदन्नपानमुपयुज्यते, तदप्याम-मेव प्रदूषयति । भवति चात्र—
मात्रयाप्यभ्यवहृतं पथ्यं चान्नं न जीर्यति ।
चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ( चरक० विमान० २।८-९ )

२. श्लेष्मलानां श्लेष्माभिभूतेऽग्न्यधिष्ठाने मन्दा भवन्त्यग्नयः । ( चरक० विमान० ६।१२ )

३ श्लेष्मा तु छर्द्यरोचकाविपाकशीतज्वरालस्यगात्रगौरवाणि । ( चरक० विमान० २।७ )

४. तस्य लिङ्गमजीर्णस्य विष्टम्भः सदनं तथा ।
शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठकटिग्रहः ॥
जृम्भाङ्गमर्दस्तृष्णा च ज्वरश्छर्दिः प्रवाहणम् ।
अरोचकोऽविपाकश्च घोरमन्नविषं च तत् ॥ (चरक० चि० १५।४५-४६)

यदाऽल्पमपि भोजनं बहुना कालेन पच्यते, शिरसि गौरवम्, कास-श्वास-वमनाङ्गमर्द-गौरवादयश्चोत्पद्यन्ते, तदा मन्दाग्निरिति विजानीयात्। यदाऽऽहारनियमानां स्वल्पमप्यतिक्रमणं न सहतेऽग्निः, पूर्वोक्तानि च लक्षणानि प्रकटयितुमीष्टे, तदा मन्दाग्नित्वं परिलक्ष्यते। इयं खलु तीक्ष्णाग्निविपरीता दशा **'तत्र तीक्ष्णोऽग्निः सर्वापचारसहस्तद्विपरीतलक्षणस्तु मन्दः'**[1] इति।

**मन्दाग्नेरुपद्रवाः**

मन्देऽग्नौ लघ्वपि भोजनं न पाकं याति, अपक्वं तदन्नं शुक्तत्वं (अम्लतां) याति, तच्च विषरूपतां व्रजति, तद्घोरमन्नविषमित्याख्यायते, तदेव च आमविषमिति कथ्यते[2]। इदं चामविषं जठराग्नेर्मन्दत्वात् स्वतन्त्ररूपेण समुत्पद्यते। येन धातुना मलेन दोषेण वैतत् संयुज्यते, तदनुसारमेव लक्षणानि जनयति[3]।

**चिकित्सासूत्रम्**

मन्दाग्नौ कफदोषस्य प्राधान्यं भवति। तस्य च प्रतीकारे शोधनचिकित्सा श्रेष्ठतमा समाख्याता, यतः शोधनप्रक्रियया कफे निर्हृते रोगस्य पुनराक्रमणभयं निवर्तते। यथा चाह चरकः—

---

१. यस्त्वल्पमप्युपयुक्तमुदरशिरोगौरव-कास-श्वास-प्रसेक-च्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति, स मन्दः। (सुश्रुत० सूत्र० ३५।२८)

२. (दुष्यत्यग्निः) स दुष्टोऽन्नं न तत् पचति लघ्वपि।
अपच्यमानं शुक्तत्वं यात्यन्नं विषरूपताम्॥ (चरक० चि० १५।४४)

३. (क) संसृज्यमानं पित्तेन दाहं तृष्णां मुखामयान्।
जनयत्यम्लपित्तं च पित्तजाँश्चापरान् गदान्॥
यक्ष्मपीनसमेहादीन् कफजान् कफसङ्गतम्।
करोति वातसंसृष्टं वातजाँश्च गदान् बहून्॥
मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतम्।
रसादिभिश्च संसृष्टं कुर्याद् रोगान् रसादिजान्॥ (चरक० चि० १५।४७-४९)

(ख) रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात्॥ (अ० हृ० नि० १२।१)

(ग) अग्निदोषान्मनुष्याणां रोगसंघाः पृथग्विधाः। (चरक० चि० १३।९)

(घ) करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्। (सुश्रुत० सू० ३५।२५)

(ङ) धातूष्मणां चापचयाद् राजयक्ष्मा प्रवर्तते। (चरक चि० ८।४०)

(च) नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते। (चरक० चि० १६।३९)

दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः[१] ॥

एवञ्च कफविकारे कफशोधनार्थं वमनकर्म विधीयते । मन्दाग्नौ च श्लेष्मशोधनमावश्यकं कर्म (मन्दे श्लेष्मविशोधनम्) । वमनकर्मणः पूर्वम् आतुरं समाश्वास्य, दोष-भेषज-देश-काल-बल-शरीर-सात्म्य-सत्त्व-वयो-बलानि समीक्ष्य आकण्ठं दुग्धम्, दधि, तक्रं वा पाययेत्, अनन्तरञ्च मदनफलमात्रां पाययित्वा वामयेत् । मदनफलस्य २० ग्राममितान् कणान् ४०० मिलीलीटरमिते दुग्धे संपेष्य पानाय दद्यात् । एवमेव निम्बपत्राणि, सर्षपाः केवलं लवणोदकं वा सुखोष्णं वमनार्थमुपयुज्यते ।

मन्देऽग्नौ दुर्जनवद्व्यवहर्तव्यं कफदोषापनयनाय । अग्निञ्च कटुतिक्तकषाय-रसाहारेण प्रदीपयेत् । तीक्ष्णैश्च वमनविधानैः कफं जयेत्[२] । वमनकर्म पञ्चकर्म विशेषज्ञचिकित्सकनिर्देशे कर्त्तव्यम् ।

यथाऽल्पोऽग्निरिन्धनाभावे सति शाम्यति, यद्वाऽधिकेन्धनभारेण मर्दितो मन्दतरो भवति, तद्वत् मन्दो जाठराग्निर्भोजनालाभाद् यद्वाऽधिकभोजनान्न प्रदीप्तो भवति । अतश्च कायाग्निसन्धुक्षणार्थं स्निग्धान्नपानम्, विविधं रोचकमन्नम्, दीपन-पाचनयोगाः, आसवा अरिष्टाः सुराप्रकाराश्च सेव्याः । पूर्वभोजने जीर्णे सति समुचित-मात्रया भोजनेन कायाग्निर्दीप्यते, चिरकालञ्चारोग्यमवाप्यते[३] ।

---

१. चरकसं० सू० १६।२० ।

२. कफं दुर्जनवत्तीक्ष्णैर्वातं स्नेहैन मित्रवत् ।
पित्तं जामातरमिव मधुरैः शीतलैर्जयेत् ॥
मन्दे कटुतिक्तकषायैर्वमनैश्च ॥ (सुश्रुत० सूत्र० ३५।३०)

३. (क)—नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ।
यथा निरिन्धनो वह्निरल्पो वाऽतीन्धनावृतः ॥
स्नेहान्नविधिभिश्चित्रैश्चूर्णारिष्टसुरासवैः ।
सम्यक् प्रयुक्तैर्भिषजा बलमग्नेः प्रवर्धते ॥
यथा हि सारदार्वग्निः स्थिरः सन्तिष्ठते चिरम् ।
स्नेहान्नविधिभिस्तद्वदन्तरग्निर्भवेत् स्थिरः ॥
हितं जीर्णे मितं चाश्नंश्चिरमारोग्यमश्नुते ।
अवैषम्येण धातूनामग्निवृद्धौ यतेत ना ॥
(चरक० चिकित्सा० १५।२१२-२१५)

(ख)—रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं
स्त्रीसेवाध्वनियुद्धजागरजलक्रीडापदाघातनम् ।
धूमस्तापशिरोविरेकवमनं स्वेदोपनाहादिमं ।
पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं जयेत् ॥ (योगरत्नाकरे दोषत्रयशमनम्)

**आवस्थिकी चिकित्सा**

घृतं श्रेष्ठमग्निदीपनम् —मन्दस्याग्नेः पुनरुद्दीपनाय औषधसिद्धस्य केवलस्य वा स्नेहस्य (घृतस्य) प्रयोगो प्रशस्यते। स्नेहसमृद्धोऽग्निः सुगुर्वप्यन्नं पचति। तथा च—

स्नेहमेव परं विद्याद् दुर्बलानलदीपनम्।
नालं स्नेहसमृद्धस्य शमायान्नं सुगुर्वपि॥
मन्दाग्निरविपक्वं तु पुरीषं योऽतिसार्यते।
दीपनीयौषैर्युक्तां घृतमात्रां पिबेत्तु सः॥
तया समानः पवनः प्रसन्नो मार्गमास्थितः।
अग्नेः समीपचारित्वादाशु प्रकुरुते बलम्॥
काठिन्याद्यः पुरीषं तु कृच्छ्रान्मुञ्चति मानवः।
स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत्॥
रौक्ष्यान्मन्दे पिबेत्सर्पिस्तैलं वा दीपनैर्युतम्।
अतिस्नेहात्तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः॥
उदावर्तात्तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः।
भिन्ने गुदोपलेपात्तु मले तैलसुरासवाः॥
दोषवृद्ध्या तु मन्देऽग्नौ शुद्धो दोषविधिं चरेत्।
व्याधियुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनम्॥
उपवासाच्च मन्देऽग्नौ यवागूभिः पिबेद् घृतम्।
अन्नावपीडितं बल्यं दीपनं बृंहणं च तत्[1]॥

**मन्दाग्नौ तक्रप्रयोगः**—दध्नः सर उद्धृत्य यथोचितं तत्र जलं निक्षिप्य मन्थानेन मथ्नीयात्, नवनीतं पृथक् कुर्यात्, तच्च मथितं नातिद्रवं नातिगाढं विदध्यात्। किञ्चिदम्लमधुरकषायं तद्द्रवं **'तक्रम्'** इत्यभिधीयते। इदञ्च लघु पथ्यं भवति **'समुद्धृतघृतं तक्रं पथ्यं लघुविशेषतः'** इति भावप्रकाशे। अग्नेरुद्दीपनाय स्रोतसामनावरणाय तद्गतविकाराणां प्रशमनाय च तक्रं श्रेष्ठतमं पथ्यमस्ति। मन्दाग्नौ च भृष्टजीरकचूर्णसैन्धवमिश्रं भोजनोत्तरं पानाय प्रशस्यते[2]।

अग्निदीपनाद् लघुगुणत्वाच्च तक्रं मन्दाग्नौ विशेषेण हितकरम्। मधुरविपाकित्वान्न च पित्तं प्रकोपयति, कषायोष्णविकासिरूक्षत्वात् कफजे विकारे लाभप्रदम्। स्वाद्वम्लसान्द्रत्वाच्च वाते हितकरं भवति। देवलोके यथाऽमृतम्, तथैव मर्त्यलोके तक्रं सर्वगुणात्मकमुच्यते[3]।

---

१. चरकसं० चिकित्सा० १५।२०२–२०९।
२. वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम्।
पिबेत्तक्रं कफे चापि व्योषक्षारसमन्वितम्॥ (सुश्रुत० सूत्र० ४५।८९)
३. न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः।
यथा सुराणाममृतं हिताय तथा नराणां भुवि तक्रमाहुः॥ (योगरत्नाकरे)

**प्रयोगा औषधयोगाश्च**

१. भोजनकालादव्यवहिते पूर्वकाले त्वग्विरहितार्द्रकखण्डान् कणशो विधाय निम्बुरससैन्धवयुतान् खादेत्, तेन चास्यम्, जिह्वा, कण्ठश्च शुद्धयति। रुचिरुत्पद्यते क्षुधा च जागर्ति।

२. हरीतकीचूर्णं द्विग्राममितं शुण्ठीचूर्णं द्विग्राममितं समशर्कराभागेन प्रातःकाले सेवनेनाग्निः सन्धुक्षितो भवति।

३. हरीतकी-पिप्पली-सैन्धव-चित्रकाणां समभागचूर्णं विधाय प्रातः-सायं ३ ग्राममात्रां कोष्णेन जलेन पिबेत्, तेनाग्निः प्रदीप्तो भवति, गुर्वाहारपावने च क्षमो भवति।

४ दाडिमबीजचूर्णः—२ ग्राममात्रा समगुडयुता प्रातः-सायं लीढा मन्दाग्नि-दोषमपाकरोति।

५. यवक्षारचूर्णः—½ ग्राममितः, १ ग्राममितशुण्ठीचूर्णेन सह घृतेन सेवितोऽग्निवृद्धिं करोति।

६. हिङ्ग्वष्टकचूर्णः—भोजनस्य प्रथमग्रासेन सह ३ ग्राममितमात्रया घृत-मिश्रितं विधाय द्विवारं सेवेत। अयमतीवाग्निदीपनं वातानुलोमनञ्च।

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणघृतानामष्टमो हिङ्गुभागः।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगांश्च हन्ति॥

७. बृहदग्निमुखचूर्णः—३ ग्राममिता मात्रा निम्बुरसेन प्रातःसायं सेव्या। 'अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम्'।

८. वडवानलचूर्णः—३ ग्राममिता मात्रा कोष्णेन जलेन प्रातःसायम्। 'वडवानलनामैतच्चूर्णं स्यादग्निदीपनम्'।

९. भास्करलवणचूर्णः—३ ग्राममात्रा शीतेन जलेन प्रातःसायम्। 'मन्दाग्नेरश्नतो नित्यं भवेदाश्वेव पावकः'।

१०. रामबाणरसः—२ रक्तिमिता मात्रा निम्बुजलेन प्रातःसायम्। अयं रसो मन्दाग्निजेषु रोगेषु विश्रुतः 'वह्निमान्द्यदशवक्त्रनाशनो रामबाण इति विश्रुतो रसः'।

११. अग्नितुण्डीवटी—२ रक्तिमिता मात्रा शर्करया शीतलेन जलेन प्रातः-सायम्। रिक्ते कोष्ठे एतद्वटीसेवनात् त्वरितमेव क्षुधा दीप्यति। अस्याः प्रयोगसाफल्यं दृष्टचरम्।

१२. महोदधिवटी—२ रक्तिमिता मात्रा प्रातःसायं मधुना लेह्या 'महोदधि-वटीनाम्ना नष्टमग्निं प्रदीपयेत्'।

**१३. क्रव्यादरसः**—क्रव्यपदेन मांसमुच्यते । अयं रसो मांसपाचनक्षमं जठराग्निं प्रदीप्तं करोति । २ रक्तिमिता मात्रा प्रातःसायं मधुना देया ।

**१४. शिवाक्षारपाचनचूर्णः**—भोजनात् प्राग् द्विसन्ध्यं ३ ग्राममात्रया कोष्णेन जलेन ग्राह्यः । अयमग्निदीपनो वातानुलोमनश्च ।

**१५. बाहुशालगुडः**—६ ग्राममात्रया कोष्णेन जलेन प्रातःसायं देयः । अस्य प्रयोगेण द्रुतमेवाग्निर्दीप्यते, क्षुधा वर्धते । बहुशश्च दृष्टप्रत्ययोऽयं योगः । अर्शोरोगे प्रशस्ततमं भेषजमिदम् ।

अन्ये च अग्निकुमाररसः, पाशुपतरसः, हिङ्ग्वुद्विरुत्तरादिचूर्णः, हिंग्वादिचूर्णः, चित्रकादिवटी, महाशङ्खवटी, गन्धकवटी, काङ्कायनवटी, सञ्जीवनीवटी, अजीर्णकंटकरसः, रसोनादिवटी, द्राक्षारिष्टः, लोहासवः, कुमार्यासव एवमादि योगा मन्दाग्नितामुपहृत्य जठरानलप्रदीप्तये कल्पन्ते (एषां योगा भैषज्यरत्नावल्यां द्रष्टव्याः) ।

**औषधव्यवस्थापत्रम्**

१. प्रातः सायम्—अग्नितुण्डीवटी ४ रक्तिका
कासीसभस्म ४ ,,
शङ्खभस्म ४ ,,
यवानीषाडवचूर्णः $\frac{\text{२ ग्रामः}}{\text{२ मात्रा}}$ मधुना ।

२. भोजनस्य प्रथमे ग्रासे द्विवारं हिंग्वष्टकचूर्णः $\frac{\text{६ ग्रामः}}{\text{२ मात्रा}}$ घृतेन ।

३. भोजनोत्तरम् द्विवारं द्राक्षारिष्टः $\frac{\text{५ तोलकम्}}{\text{२ मात्रा}}$ समानेन जलेन पेयः ।

४. रात्रौ शयनकाले—आरोग्यवर्धिनी $\frac{\text{१ ग्राममिता}}{\text{१ मात्रा}}$ कोष्णेन दुग्धेन ।

चिकित्सकपरामर्शानुसारं भेषजमिदं सेवमानमारोग्याय कल्पते । महता प्रयत्नेन कायाग्निसौष्ठवाय प्रयतितव्यम् । यतो जीवनव्यापारस्य कायाग्निरेव मूलाधारम् । तद्यथा—

अस्तु दोषशतं क्रुद्धं सन्तु व्याधिशतानि च ।
कायाग्निमेव मतिमान् रक्षन् रक्षति जीवितम् ॥

एवं संक्षेपेणात्र कायाग्निमाश्रित्य विवेचनं विहितमिति शम् ।

• • •

# कालिदासस्य रूपकाणां भाषिकी संरचना

डॉ० वनेश्वरपाठकः, एम्० ए०, डी-लिट्०

अध्यक्षः—संस्कृतविभागस्य, सेंटजेवियर्स कालेज राँची, (बिहार)

❀ ❀ ❀

(१) संस्कृतनाटकेषु प्रयोज्या भाषा, तस्या भेदोपभेदाः, तेषां प्रयोगविधानञ्च।

(२) कालिदासीयरूपकाणां भाषिकप्रयोगविधा।

(३) कालिदासीयरूपकाणां भाषिकसौन्दर्यविधिः।

(४) उपसंहारः।

'कालिदासस्य रूपकाणां भाषिकी संरचना' इत्येष विषयः कालिदासीयरूपकत्रय्या भाषिकप्रयोगविधां भाषिकसौन्दर्यविधिञ्च प्रति स्वाभाविकीं जिज्ञासां समुत्पादयति। आद्यरङ्गाचार्येण भरतेन नाटकेषु भाषाप्रयोगविषयमधिकृत्य नाट्यशास्त्रस्य सप्तदशेऽध्याये विस्तरेण प्रतिपादितम्। तमनुसरता दर्पणकारेण विश्वनाथेनापि तथैव प्रोक्तम्। आचार्यभरतेन देशभाषाप्रभेदान् प्रपञ्चयता प्रयोगेऽधिकार्याया भाषायाश्चातुर्विध्यं प्रदर्शितम्—

> अतिभाषार्यभाषा च जातिभाषा तथैव च।
> तथा जात्यन्तरी चैव भाषा नाट्ये प्रकीर्तिताः[1]॥

तत्र अतिभाषा देवैः, आर्यभाषा च नृपैः प्रयुज्यते। जातिभाषा संस्कारपाठ्यसंयुक्ता सम्यग् ग्रामप्रतिष्ठिता द्विविधा भवति-संस्कृतम्, प्राकृतञ्च[2]। जात्यन्तरीभाषा तु ग्राम्या भवति। जातिभाषाया उपर्युक्तं द्विविधं रूपम्-संस्कृतं प्राकृतञ्च, नाट्ये प्रयुज्यते। यथाह भरतः—

> भाषा चतुर्विधा ज्ञेया देशरूपप्रयोगतः।
> संस्कृतं प्राकृतञ्चैव यत्र पाठ्यं प्रयुज्यते[3]॥

उत्तमानां पात्राणां संस्कृतं प्रयोज्यं भवति; किन्तु तानि कारणवशात् प्राकृतमपि प्रयुज्यते—'कारणव्यपदेशेन प्राकृतं संप्रयोजयेत्[4]।' विश्वनाथोऽप्याह—

---

१. ना० शा० १७।२३।

२. जातिभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम्।
संस्कृतं प्राकृतञ्चैव चातुर्वर्ण्यसमाश्रयम्॥ (ना० शा० १७।३०)

३. ना० शा० १७।२२; ४. तदेव—१७।३२।

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्[1] ।
कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः[2] ॥

भरताभिमतं प्राकृतरूपमप्यत्रोल्लेख्यमस्ति—

**एतदेव (संस्कृतमेव) विपर्यस्तं संस्कारगुणवर्जितम् ।**
**विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम्[3] ॥**

एतदनन्तरं तेन परिज्ञानाय संस्कृतस्थानीयाः केचन विशिष्टाः प्राकृतशब्दा अपि निर्दिष्टाः सन्ति ।

प्राकृतभाषायाः प्रयोगे भरतस्यानुशासनमेवमस्ति । स प्रथमं तस्याः स्थानकृतान् भेदान् प्रतिपादयति—

**मागध्यवन्तिजा प्राच्या सूरसेन्यर्धमागधी ।**
**वाह्लीका दाक्षिणात्या च सप्तभाषाः प्रकीर्तिताः[4] ॥**

अर्थाद् मागधी, अवन्तिजा, प्राच्या, सूरसेनी (शौरसेनी), अर्द्धमागधी, वाह्लीका, दाक्षिणात्या चेति सप्त प्राकृतभाषाः सन्ति । ततः परं पात्राणां स्थितेरनुरूपं भाषाप्रयोगमनुशासता तेन शाकारी (शकारभाषा), शाबरी, द्राविडी, आभीरी, चाण्डाली, पैशाचीप्रभृतिविभाषाणामप्युल्लेखः कृतोऽस्ति ।

प्राकृतभाषायाः प्रयोगे भरतस्य सामान्यसिद्धान्तोऽयं यन्नाटके सर्वत्र शौरसेनी (सूरसेनी) प्रयोक्तव्या; किन्तु प्रयोक्तारः स्वेच्छया देशभाषामपि प्रयोक्तुं शक्नुवन्ति—

**सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।**
**अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः[5] ॥**

---

१. सा० द० ६।१५८—अनीचानाम् = मध्यमानाम् । कृतात्मनाम् = उत्तमानाम् ।

२. सा० द० ६।१६८ ।

३. ना० शा० १७।२—एतदेवाधृत्य भाषाविद्भिर्विद्वद्भिः संस्कृतं प्राकृतस्य मूलोद्गमो मन्यते । अत्रेदं तथ्यं प्रतिभाति यत् प्राकृतस्य विकासो लौकिकसंस्कृतान्न; अपि तु वैदिकसंस्कृतादस्ति ।

४. ना० शा० १७।४८—भरतः सूरसेनी, सौरसेनी, सौरसेनं वेति नाम व्यवहरति । दर्पणकारोऽपि तथैव लिखति । भाषावैज्ञानिकैः 'शौरसेनी' इति निगद्यते । भाषावैज्ञानिकास्तु प्राकृतस्य केवलं पञ्चैव भेदान् स्वीकुर्वन्ति—शौरसेनी, पैशाची, महाराष्ट्री, मागधी, अर्द्धमागधी चेति । साहित्यिकदृष्ट्या आसामेव ग्रहणमास्ते ।

५. ना० शा० १७।४६ ।

भाषाप्रयोगं विस्तरतो विचार्य भरतेन वाक्यप्रयोगस्यापि विधानं कृतम्। (दर्पणकारोऽपि तमेवानुवदति—"प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते"। तद् यथा—शाकुन्तले (प्रथमेऽङ्के) ऋषी—"गच्छामः इत्यर्थे 'साधयामस्तावत्' इति"[1]।) एतस्मिन् वाक्यप्रयोगविचारप्रसङ्गे भरतेन उत्तम-मध्यम-हीनैर्नरैर्ये नराः समानोत्कृष्ट-हीनास्ते कथं वाच्याः, अर्थात् ते कथं सम्बोध्या इति विचारो विहितः। तदनन्तरं तेन पात्राणां जातिगुणकर्मानुसारं नामकरणमपि निरूपितमस्ति।

भाषाप्रयोगविषये कालिदासो भरतस्य विधानं सर्वथाऽनुसरति। नाटकेषु सुसंस्कृतभाषायाः प्रयोगे कालिदासस्य बलवद् ध्यानमासीत्। उक्तञ्च तेन **'संस्कारवत्येव गिरा मनीषी**[2]**.....'** इत्यादि, अर्थात् सुसंस्कृतभाषैव मनीषिणां शोभा।

कालिदासस्य संस्कृतभाषाऽपि विकसितरूपमेवाश्रयते। संस्कृतस्य प्राचीनतम-नाटककारस्य भासस्य भाषायामिव कालिदासस्य वाक्यप्रयोगेऽपि व्याकरणनियमा-नामवहेलना यत्र तत्र दृष्टिपथमायाति। एषाऽवहेलना काव्यशास्त्रिभिष्टीकाकारैश्च समुद्भाविता वर्त्तते।

यद्यपि कालिदासस्य व्याकरणविरुद्धाः प्रयोगा वामनाद्याचार्यैरन्यैर्वा यथा-कथञ्चित् समाहिताः सन्ति;[3] तथापि कालिदासस्य तादृशाः प्रयोगास्तस्य कवेरेष स्वातन्त्र्यविलासः प्रतिभाति।

व्याकरणं भाषाविज्ञानस्य महत्त्वपूर्णमङ्गमस्ति। काव्यशास्त्रेऽपि काव्यदोषाणां मध्ये व्याकरणदोषस्य (च्युतसंस्कृतिनामदोषस्य) नित्यदोषेषु परिगणना कृताऽस्ति।

नाटकेषु संस्कृतभाषायाः प्राकृतभाषायाश्च प्रयोग इति प्रयोगद्वैविध्यं नाट्यशास्त्र-काराणां नियमः। प्राकृतभाषायाः प्रयोगेऽपि गद्ये शौरसेनी पद्ये च महाराष्ट्री प्रयोक्तव्येति

---

१. सा० द० ६।१४४;  २. कुमार० १।२८।

३. कालिदासस्य नाटकेषु 'ततः प्रविशति कामयानावस्थो राजा' इत्यत्र 'कामयमान' इत्यस्य स्थाने 'कामयान' इति प्रयोगो व्याकरणविरुद्धः। यतः कर्मणिङि शानचि च कृते 'कामयमानः' इति रूपं भवति, न तु 'कामयानः' इति। एवमेव तस्य काव्येष्वपि 'लावण्य उत्पाद्य इवास यत्नः' (कुमार० १।३५), 'तेनास लोकः पितृमान् विजेत्रा' (रघु० १४।२३), 'प्रभ्रंशयां यो नहुषं चकार' (रघु० १३।३६), 'स पातयां प्रथममास पपात पश्चात्' (रघु० ९।६१) इत्यादयो वाक्यप्रयोगा व्याकरणविरुद्धाः सन्ति। अस् धातोर्लिटि 'अस्तेर्भूः' इति सूत्रानुसारं 'बभूव' इति भवति, न तु 'आस' इति। लौकिक-संस्कृते 'प्रभ्रंशयाञ्चकार', 'पातयामास' इत्यादयोऽखण्डप्रयोगा भवन्ति, न तु वैदिक-संस्कृतवदुपर्युक्ताः खण्डशः प्रयोगाः।

शास्त्रकाराणां सम्मतिस्तादृशी परम्परा च[1]। कालिदासः शास्त्रकाराणां तद् विधानम्, भासशूद्रकादिप्राचीननाटककाराणां परम्पराञ्च सम्यक् परिपालयति। विदूषकादीनाम्, निम्नपात्राणाम्, स्त्रीपात्राणाञ्च भाषणे प्राकृतस्य प्रवेशके प्राकृतस्य, विष्कम्भके संस्कृतभाषायाः, तथा मिश्रविष्कम्भके मिश्रभाषायाः (संस्कृतस्य प्राकृतस्य च) प्रयोगे स सर्वथा भरतमतमनुवर्तते।

नाट्यशास्त्रीयं विधानमनुसरताऽपि प्रवीणप्रतिभाया महानाटककारेण तेन प्राकृतभाषायाः प्रयोगेऽपि यत्रकुत्रचित् स्वातन्त्र्यमवलम्बितमास्ते। तद् यथा— भिक्षूणां (श्रमणानां) वल्कलधारिणां (तपस्विनां) च कृते प्राकृतभाषाप्रयोगस्य विधानमस्तीति भरतस्य तदनुयायिनो विश्वनाथस्य च मतम्[2]; किन्तु विक्रमोर्वशीये (तृतीयेऽङ्के) नियमस्यास्य व्यत्यासो दृश्यते। तत्र भरतस्य प्रथमः शिष्य गालवः संस्कृतं ब्रूते, द्वितीयः शिष्यः पेलवः प्राकृतं प्रयुङ्क्ते। अत्र कालिदासस्याभिमतमिदमेवाभाति यत् सर्वजनहिताय सर्वजनसुखबोधाय च सुखग्राह्यनिबन्धनायाः प्राकृतभाषायाः प्रयोगोऽपि सहैव कर्तव्य एव। अत एव कुमारसम्भवे सरस्वती संस्कारपूतेन संस्कृतेन वरं शिवम्, सुखग्राह्यनिबन्धनेन प्राकृतेन च वधूं पार्वतीं सममेव स्तौति—

**द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।**
**संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन[3]॥**

भिन्नरुचेर्जनस्य समाराधनरूपस्य प्रयोगस्य (नाट्यस्य) साफल्यं प्रेक्षकाणां समाराधनमेव। अत एव कुमारसम्भवे शिवपार्वत्योः परिणयावसरे प्रणयोल्लासे प्रदर्शिते प्रयोगे सरस्वती वाङ्मयस्य द्विधा प्रयोगं (संस्कृतरूपं प्राकृतरूपञ्च) कुरुते। अत एव च विक्रमोर्वशीये भरतस्य प्रथमः शिष्यः संस्कृतम्, द्वितीयः प्राकृतं प्रयुङ्क्ते; किन्त्वभिज्ञानशाकुन्तले प्रथमेऽङ्के सशिष्यो वैखानसः संस्कृतं ब्रूते, तथा चतुर्थेऽङ्के कण्वशिष्यौ गौतमनारदावपि संस्कृतं ब्रूतः। अत्र कालिदासो नाट्यशास्त्रस्य नियममिमं परिपालयन् दृश्यते—

**परिव्राण्मुनिशाक्येषु वाक्येषु श्रोत्रियेषु च।**
**द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत्[4]॥**

---

१. शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत्॥ (सा० द० ६।१५९)

२. (क) "व्याजलिङ्गप्रतिष्ठानां श्रमणानां तपस्विनाम्।
भिक्षुवल्कधराणाञ्च प्राकृतं सम्प्रयोजयेत्॥" (ना० शा० १७।२४-३५)
(ख) "भिक्षुवल्कधरादीनां प्राकृतं सम्प्रयोजयेत्।" (सा० द० ६।७७)

३. कुमार० ७।९०; ४. ना० शा० १७।३६–३७।

उत्तमसंन्यासिनीनां कृते संस्कृतभाषाप्रयोगस्य विधानमस्ति—'संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च'[1] अत्रापि कालिदासः स्वातन्त्र्यमवलम्बितवानस्ति। शाकुन्तले गौतमी, विक्रमोर्वशीये (पञ्चमेऽङ्के) च तापसी प्राकृतं ब्रूतः। (भासस्य स्वप्नवासवदत्तेऽपि तापसी प्राकृतं प्रयुङ्क्ते); किन्तु मालविकाग्निमित्रे परिव्राजिका पण्डितकौशिकी (केवलमेकमेव स्त्रीपात्रं कालिदासस्य) संस्कृतं ब्रूते। अत्र—

योषित्सखीबालवेश्याकितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा[2]॥

इति मतं कालिदासस्याभिमतं प्रतिभाति। अत एव पाण्डित्यप्रदर्शनाय पण्डितकौशिकी संस्कृतं व्याहरति।

शाकुन्तले बालकः सर्वदमनो बालोचितं प्राकृतं ब्रूते—"जिंभ ले सिंहशावका! जिंभ दन्ताई दे गणइश्शं।" बालकानां कृते प्राकृतभाषाप्रयोगो नाट्यशास्त्रकाराणामभिमतः[3]; किन्तु विक्रमोर्वशीये कुमार आयुः पाण्डित्यपूर्णं संस्कृतं ब्रूते—(नारदं प्रति) भगवन्! और्वशेय आयुः प्रणमति। (पितरं प्रति) नार्हति तातः पुङ्गवधारितायां धुरि दम्यं नियोजयितुम्[4]। सम्भवतोऽत्रापि कुमारस्यायुषः पाण्डित्यप्रदर्शनायैव भाषाविपर्ययः।

"कारणव्यपदेशेन प्राकृतं सम्प्रयोजयेत्"[5] इति भरतमतं कालिदासस्याप्यभिमतमस्ति। अत एव शाकुन्तले चतुर्थेऽङ्के प्रियंवदा संस्कृतमाश्रित्य छन्दोमयीं वाणीं प्रयुङ्क्ते—'दुष्यन्तेनाहितं तेजो..........' इत्यादि[6]। महर्षिकण्वश्च (वैदिकयज्ञप्रसङ्गात्) ऋक्छन्दसा आशीर्वादं ददाति—"अमी वेदिं परितः क्लृप्तधिष्ण्याः[7]" ..........इत्यादि।

अभिज्ञानशाकुन्तलस्य धीवरप्रसङ्गेऽपि प्राकृतप्रयोगे कालिदासस्य स्वातन्त्र्यमभिलक्ष्यते। हीनपात्राणां प्रकृत्यनुसारं शाबरीप्रभृतिविभाषाणां प्रयोगो विधेय इति नाट्यशास्त्रसिद्धान्तः। शाकुन्तले षष्ठेऽङ्के रक्षिणो धीवरश्च मागध्याः प्रयोगं कुर्वन्ति; किन्तु राष्ट्रियः श्यालः, यः शकारस्य प्रातिनिध्यं कुरुते, न शाकारीम्, (यथा शास्त्र-

---

१. सा० द० ६।१६७; २. सा० द० ६।१६९।
३. (क) 'बाले ग्रहोपसृष्टे च..........प्राकृतं पाठ्यमिष्यते।' (ना० शा० ३५-३६)
(ख) 'बालानां षण्डकानाञ्च नीचग्रहविचारिणाम्'.......इत्यादि। (सा० द० ६।१६५)
४. विक्रमो० अङ्कः—५।
५. ना० शा० १६।३२, विश्वनाथोऽपि तथैवाह (सा० द० १५८)
६. शाकु० ४।४; ७. शाकु० ४।८।

कारणां नियमः) न वा मागधीम्, न वा दाक्षिणात्यां प्रयुङ्क्ते; अपितु स शौरसेनीं प्रयुङ्क्ते[1]। तद् यथा—"रक्षिणी 'अले कुम्भोलआ! कहेहि कहिं तुए एशे मणिबन्ध-णुक्किण्णामहेए लाअकीए अंगुलीए शमाशादिए" (अरे कुम्भीरक! कथय कुत्र त्वयैतन्महारत्नभासुरम् उत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ?)

धीवरः—पशीदंतु भावमिश्शे! हगे णे ईदिश कम्मकाली (प्रसीदन्तु भावमिश्राः! अहं नेदृशकर्मकारी)·········हगे शक्कावदालब्भंतरालवाशी धीवले। (अहं शक्रावताराभ्यन्तरालवासी धीवरः।)

श्यालः—सूचअ! कहेदु शब्बं अणुक्कमेण मा णं अन्तरा पडिबंधह (सूचक! कथयतु सर्वमनुक्रमेण, मैनमन्तरा प्रतिबधान)।

कालिदासस्य प्राकृतप्रयोगस्तदानीन्तनलोकप्रचलितप्राकृतभाषारूपं नाधत्ते। तत्रापि स साहित्यिकप्राकृतभाषाया एव रूपमाश्रयते। संस्कृतनाटकेषु प्रयुक्ता प्राकृत-भाषा साहित्यस्याङ्गतया संस्कृतेन प्रभाविताऽस्ति। तत्र प्राकृतस्य प्राकृतं रूपं न दृश्यते। कालिदासस्य प्राकृतभाषाया रूपं वररुचेः प्राकृतव्याकरणेन परिष्कृतं विकसितसाहित्यिकरूपमस्ति। तस्य नाटकेषु नाट्यशास्त्रीयसिद्धान्तानुसारं गद्ये शौरसेनी प्राकृतं तथा पद्ये महाराष्ट्री प्राकृतं प्रयुक्तमस्ति। मध्यदेशः संस्कृतस्य केन्द्र-मासीत्। अत एव मध्यदेशीया शौरसेनी प्राकृतभाषा संस्कृतेन विशेषतः प्रभा-विताऽस्ति। राजशेखरस्य कर्पूरमञ्जरीनामसट्टके गद्ये शौरसेन्याः सुन्दरः प्रयोगो दृश्यते।

---

१. मागधी—मगधं परितो भाष्यमाणा मागधी। वररुचिमते शौरसेनीतो निःसृतेयं भाषा। अर्द्धमागधी—मागध्याः शौरसेन्याश्च मध्यवर्तिनी भाषा। बौद्धविद्वद्भिः पालिभाषैव मागधी निगद्यते। संस्कृतनाटकेषु निम्नश्रेण्याः पात्राणि मागधीं प्रयुञ्जते। शाकारी भाषा मागध्या एव विभाषाऽस्ति। "शत्रराणां शकादीनां तत्स्वभावश्च यो गणः। शकार-भाषा योक्तव्या·········" (ना० शा० १७।५४)॥ वाह्लीकी, शाबरी तथा चाण्डाली अस्या एव जातिरूपाः सन्ति। मागध्यां सषयोः शो भवति, यथा—हस्तः=हश्तः, सप्त=शत्त, पुरुषः=पुलिश इत्यादि। अस्यां सर्वत्र रस्थाने लो भवति, यथा—अरे=अले, राजा=लाजा इत्यादि। जस्थाने यो भवति, यथा—जानाति=याणादि, जानुकः=याणुअ इत्यादि। प्रथमाविसर्गस्थाने ए भवति, यथा—दत्तः=दिण्णे, धीवरः=धीवले, धर्मः=धम्मे इत्यादि। शौरसेन्यां विसर्गस्थाने ओ भवति, यथा—धर्मः=धम्मो, आजीवः आजीवो इत्यादि। मागध्यां काचन स्वतन्त्ररचना नास्ति। अर्द्धमागध्याः प्राचीनः प्रयोगः अश्वघोषस्य शारिपुत्रप्रकरणे, ततः परं मुद्राराक्षसे एवं प्रबोधचन्द्रोदये दृश्यते।

महाराष्ट्री शौरसेन्या सहाधिकं साम्यं बिभर्ति[1]। सा प्राकृतभाषासु परिनिष्ठिता भाषाऽस्ति। आचार्यदण्डी महाराष्ट्रीमेव प्रकृष्टं प्राकृतं मन्यते—'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः[2]।' दण्डिप्राग्वर्त्तिना वररुचिनापि मागध्यास्तथा पैशाच्या विशेषता अनुक्त्वा, महाराष्ट्र्या एव विशेषताः प्रथममुक्त्वा च 'शेषं महाराष्ट्रीवत्' इति ब्रुवता महाराष्ट्र्याः प्रकृष्टत्वं प्रतिपादितमस्ति[3]।

महाराष्ट्रीप्राकृतभाषायाः काव्यसाहित्यं सुसमृद्धमस्ति। गाहासत्तसई-सेतुबन्ध-(दहमुहबहो) गउडबहोप्रभृतिकाव्यानि महाराष्ट्र्यामेवोपनिबद्धानि सन्ति। संस्कृत-नाटकेषु प्राचीनेष्वर्वाचीनेषु च महाराष्ट्र्याः पद्यरूपः प्रयोगोऽस्या व्यापकतां लोक-प्रियताञ्चाभिव्यनक्ति।

महाराष्ट्री शौरसेन्यास्तथा तस्या अपभ्रंशस्य च मध्यस्थिता भाषाऽस्ति। केचन भाषाविदस्तु महाराष्ट्रीं शौरसेन्या एव शैलीविशेषम्, अथवा प्राकृतकाव्यरचनाशैल्याः कृत्रिमं रूपं मन्यन्ते। कालिदासस्य महाराष्ट्रीप्राकृतभाषाऽपि 'गाहासत्तसई' इत्यस्या भाषावत् साहित्यिकरूपमेवाश्रयते। अस्मिन् प्रसङ्गे कालिदासस्य महाराष्ट्रीप्रयोगः (विशेषतो विक्रमोर्वशीये) द्रष्टव्योऽस्ति।

विक्रमोर्वशीये चतुर्थेऽङ्के कालिदास उन्मत्तस्य राज्ञः पुरूरवसो मार्मिकं चित्रणं कृतवानस्ति। उन्मादावस्थायां राजा कदाचित् संस्कृतं वदति, कदाचित् प्राकृतमपभ्रंशं वा। उन्मादावस्थायामपि राजा संस्कृतं वदति चेदर्थाच्छास्त्रीयमर्यादां पालयति चेत्, तदा स उन्मत्तः कथं स्यात्? पुरूरवा एतादृश उन्मत्तोऽस्ति यत् स कृष्णमेघम् उर्वश्या अपहारिणं राक्षसं मत्वा तं लोष्ठेन प्रहर्तुं धावति—'आः दुरात्मन् रक्षः! तिष्ठ,

---

१. शौरसेनी-महाराष्ट्र्योः सामान्यमन्तरम्, यथा—शौरसेन्यां 'गच्छति' इत्यस्य स्थाने 'गच्छदि' भवति, महाराष्ट्र्यां 'गच्छइ' भवति। महाराष्ट्र्यां कतपगादीनां प्रायो लोपो भवति। शौरसेन्यां थकारस्य धकारो भवति, यथा 'कथय' = कधोहि। महाराष्ट्र्यां 'कहेहि' भवति। महाराष्ट्र्यां कथफधादीनां हो भवति। शौरसेन्यां पूर्वकालिकक्रियायाम् 'इअ' प्रत्ययो भवति; किन्तु महाराष्ट्र्याम् 'उण' प्रत्ययो भवति, यथा—पृष्ट्वा = पुच्छिअ (शौरसेन्याम्), 'पुच्छिउण' (महाराष्ट्र्याम्)। शौरसेन्यां 'गम्यते' इत्यस्य स्थाने 'गमिअइ' भवति। महाराष्ट्र्यां 'गमिज्जइ' भवति। शौरसेन्यां 'तव' इत्यस्य स्थाने 'तुह' भवति, यथा—तव हस्ते=तुह हत्थे। क्वचित्तु 'तव' इत्येव तिष्ठति, यथा—तावनुकृतिम् = तव अणुकिदिं इत्यादि। महाराष्ट्र्यां 'तव' इत्यस्य स्थाने 'तुज्झ' इति भवति, यथा 'तुज्झ ण जाणे हिअअं (तव न जाने हृदयम्) इत्यादि।

२. काव्यादर्शः—१।३४;

३. प्राकृतप्रकाशः—१२।३२।

तिष्ठ ! मे प्रियामादाय गच्छसि'...इत्यादि। अस्यामवस्थायामसौ कदाचित् संस्कृतम्, कदाचित् प्राकृतं वदति चेदत्र का आश्चर्यवार्त्ता ?

आचार्यभरतेनापि प्रोक्तम्—'कारणव्यपदेशेन प्राकृतं संप्रयोजयेत् ... उन्मत्तस्यापि ब्रुवतः प्राकृतं सम्प्रयोजयेत्[1]।'

दर्पणकारो विश्वनाथोऽप्याह—'उन्मत्तानामातुराणां सैव (शौरसेन्येव) स्यात्, संस्कृतं क्वचित्[2]।', 'कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः[3]।' अत उन्मत्तस्य राज्ञः पुरूरवसः प्राकृतप्रयोगे निषेधस्य सम्भावना कुतः ?

विक्रमोर्वशीये चतुर्थेऽङ्के गाथासु (छन्दःसु) प्रयुक्ता महाराष्ट्री स्वीये शुद्धरूपे नास्ति। सा कालिदासस्य नाटकेषु प्रयुक्तायाः शौरसेन्या महाराष्ट्रयाश्च विपरीत-रूपाऽस्ति। अत एव नेपथ्यतः प्रयुक्तास्ता गाथाः (जम्भलिका, खण्डधारा, द्विपदिका, चर्चरीप्रभृतयो गीतयः) कालिदासकृता न, सर्वा एव ताः प्रक्षिप्तांशा इति केषाञ्चन विदुषां मतम्।

अपरञ्च, विक्रमोर्वशीयस्योत्तरभारतीयप्राचीनहस्तलिखितप्रतीनां चतुर्थेऽङ्के एतादृशरूपाणि बहून्यपभ्रंशपद्यानि सन्ति, यानि दक्षिणभारतीयप्रतिषु न विद्यन्ते। उत्तर-भारतीयं संस्करणं विक्रमोर्वशीयं त्रोटकं[4] वदति। तस्याधारोऽस्ति तैः प्राकृतपद्यैः सह नृत्यानां विधानम्। दक्षिणभारतीयं संस्करणं विक्रमोर्वशीयं नाटकं वदति; अस्य कारणमस्ति तत्र प्राकृतपद्यानामभावः।

कालीदासस्यान्यनाटकयोः प्राकृतभाषाप्रयोगस्य, अस्य नाटकस्य च प्राकृतपद्य-प्रयोगस्य (विशेषतश्चतुर्थाङ्कीयस्य) अनुशीलनं कुर्वाणैर्भाषाविद्भिस्तथा कातयवेम-भूपालस्य विचारेण व्याख्यया[5] च प्रभावितैर्विद्वद्भिरेष सिद्धान्तः स्थापितोऽस्ति यद् विक्रमोर्वशीयस्य चतुर्थेऽङ्के राज्ञः पुरूरवसः प्राकृतपाठः प्रक्षिप्तोऽस्ति। विक्रमोर्वशीयस्ये-मानि पद्यानि तदानीं प्रचलितानि लोकगीतानि सन्ति, येषां समावेशस्तत्र कालिदासेन कृत इत्यपि केषाञ्चिन्मतम्; परन्तु गद्य-पद्येषु प्राकृतभाषायाः प्रयोगे एतादृशमन्तरं

---

१. ना० शा० १६।३२–३४।

२. सा० द० ६।१६५; ३. सा० द० ६।१६८।

४. सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्॥ (सा० द० ६।२७३)

५. उत्तरभारतीयहस्तलिखितप्रतेः प्राचीनतमव्याख्याकारोऽस्ति श्रीरङ्गनाथपण्डितः (१६५७ खीस्ताब्दीयः)। इयं प्रतिर्वङ्गलिप्यां देवनागरीलिप्यां चास्ति। दक्षिणभारतीयहस्त-लिखितप्रतेः प्राचीनतमव्याख्याकारोऽस्ति कातयवेमभूपालः (१४०० खीस्ताब्दीयः)।

मालतीमाधव-प्रसन्नराघव-महानाटकादिष्वपि दृश्यते; अतो विदुषामुपर्युक्तं मतं भ्रान्तिपूर्णमस्ति[1]।

वस्तुतः कालिदासस्यैव प्राकृतप्रयोगो महाराष्ट्रचा अपभ्रंशरूपोऽस्ति। अपभ्रंशस्य सर्वप्रथमं साहित्यिकरूपं कालिदासस्य विक्रमोर्वशीये चतुर्थेऽङ्के विरहोन्मत्तस्य राज्ञः पुरूरवसः पद्यरूपासूक्तिष्वेव दृष्टिपथमायाति। अपभ्रंशस्य चर्चा सर्वप्रथमं पातञ्जलमहाभाष्ये दृश्यते[2]। भरतस्य नाट्यशास्त्रेऽपभ्रंशस्यापभ्रंशशब्देन न; किन्तु आभीरादिजातीनां भाषासु बीजरूपेण सङ्केतो लभ्यते[3]। कालिदासेनापभ्रंशस्यैव विकसितं रूपं विक्रमोर्वशीयस्य चतुर्थेऽङ्के प्रयुक्तमास्ते। तानि पद्यानि कालिदासस्यैवेत्यङ्गीकारे न काचन विप्रतिपत्तिः।

कालिदासस्य भाषासौष्ठवमप्यवलोकनीयमस्ति। भाषायां सौष्ठवमाधातुं रीतेः, सदुक्तेः, वक्रोक्तेश्च समुचितयोजना परमावश्यकी। पदसंघटनाया रीतेर्भेदेषु[4] वैदर्भी सर्वोत्कृष्टा रीतिरस्ति। कालिदासस्य सर्वेषु ग्रन्थेषु वैदर्भ्याः सुन्दरः प्रयोगो दृश्यते। **'वैदर्भी कालिदासस्य'** इत्युक्तिः सुप्रसिद्धैव। माधुर्यगुणव्यञ्जकैर्वर्णैर्युक्ता, समासरहिता, अल्पसमासा वा ललितपदरचना वैदर्भी कथ्यते—

> **माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका।**
> **अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते[5]॥**

संस्कृतभाषा तु स्वत एव मधुराऽस्ति। अस्या माधुर्यं विवर्धयितुं कालिदासेन टवर्गीयपरुषवर्णानां संयुक्ताक्षराणां दीर्घसमासानां च प्रयोगो नाकारि। कालिदासस्य

---

१. अस्मिन् प्रसङ्गे लेखकस्य (डॉ० वनेश्वरपाठकस्य) 'कालिदास—साहित्य एवं सन्दर्भ' नामा ग्रन्थः (पृ० ६–७) द्रष्टव्योऽस्ति।

२. 'एकस्यैव हि शब्दस्य बहवोऽपभ्रंशाः, तद् यथा गौरित्यस्य शब्दस्य गावी, गोणी, गोता, गोपोतलिकेत्यादयो बहवोऽपभ्रंशाः' (महाभा० आ० १)।

तदनुसरता भर्तृहरिणापि प्रोक्तम्—

> शब्दसंस्कारहीनो यो गौरिति प्रयुयुक्षिते।
> तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्॥
>
> (वाक्यपदीयम्, प्रथमं काण्डम्, का० १४८)।

३. ना० शा० १७।५५, ( सा० द० ६।१६३ ), दण्डिना तु स्पष्टमेवोक्तम्—"आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः" ( काव्यादर्शः—१।३६ )।

४. विशिष्टपदरचना अथवा पदसंघटना रीतिश्चतुर्धा—वैदर्भी, गौडी, पाञ्चाली, लाटी च।

५. सा० द० ८।२-३।

काव्यनाटकेषु शृङ्गारस्य तथा करुणरसस्य प्रामुख्यमस्ति। अत एव तेनानयो रसयो-रनुरूपं भाषाशैल्याः प्रयोगः कृतोऽस्ति। रसयोरनयोर्वर्णने कोमलकान्तपदावल्याः संयोजना परमावश्यकी। अत्र कालिदासस्य ध्यानमस्ति। अत एव कालिदासस्य वैदर्भीरीतेः प्रशस्तिः सर्वैः कृताऽस्ति।

लिप्ता मधुद्रवेणासन् यस्य निर्विषया गिरः।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम्॥
(दण्डी-काव्यादर्शः)

कालिदासस्य भाषासु सहजतया निबद्धाः सदुक्तयस्तस्य गिरां सौन्दर्यमभिवर्द्ध-यन्ति। प्रत्येकपात्रस्य मुखात् तदनुरूपभाषायाः सदुक्तीनाञ्च प्रयोगे कालिदासस्य कौशलं दर्शनीयमस्ति। लतावृक्षादीनां सम्पर्के संवर्द्धितानां तापसबालानां प्रियंवदा-दीनां मुखाद् लतावृक्षादिसम्बद्धा एव सूक्तयो निःसरन्ति; यथा—'क इदानीं सहकार-मन्तरेणातिमुक्तलतां पल्लवितां सहते[1]', 'को नामोष्णोदकेन नवमालिकां सिञ्चति[2]।'

यज्ञकर्मण्यध्यापने च निरतस्य महर्षिकण्वस्य मुखात् तथैव सूक्तयो निर्ग-च्छन्ति—'दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता[3]', 'वत्से! सुशिष्यपरिदत्तेव विद्याऽशोचनीयासि संवृत्ता[4]।'

भोजनभट्ट उदरम्भरिर्विदूषकः खाद्यसामग्रीसम्पन्नामेव सूक्तिमुपयुङ्क्ते—'यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरि-भाविनो भवत इयमभ्यर्थना[5]', 'एतत् खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता[6]', 'दृढं विपणिकन्दुरिव मे उदराभ्यन्तरं दह्यते[7]' (चन्द्रं विलोक्य), 'एष खलु खण्ड-मोदकसदृश उदितो राजा द्विजातीनाम्[8]'। विदूषकस्येमामुक्तिमाकर्ण्य राजा कथयति—'सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः[9]।'

हीनपात्राणां मुखादपि तदुचिताया उक्तेः प्रयोगे शाकुन्तलीयो धीवरप्रसङ्गः (उपर्युल्लिखितः) द्रष्टव्यः।

---

१. अभि० शाकुन्तलम्—तृतीयाङ्के। २. तदेव—४। ३. तदेव।
४. तदेव। ५. तदेव—अङ्कः—२।
६. मालविका० अं० ३, मत्स्यण्डिका = मत्स्याण्डनिर्मितः पानविशेषः, अथवा शर्करा-लुण्डद्रवः।
७. मालविका० अं० २, कन्दुः = कटाहः; ८. विक्रमो० अं० ३।
९. तदेव।

एवमेव कालिदासस्य रूपकेषु यत्र तत्र प्रयुक्ता लोकोक्तयोऽपि द्रष्टव्याः सन्ति। दिङ्मात्रं यथा मालविकाग्निमित्रे विदूषकः—( राजानं प्रति ) 'मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनं वहसि[१]', 'बन्धनभ्रष्टो गृहकपोतो विडालिकाया आलोके पतितः[२]', 'कथं न भेष्यामि सिमसिमायन्ति मेऽङ्गानि[३]', 'दर्दुरा व्याहरन्तीति किं देवाः पृथिव्यां वर्षितुं विरमन्ति[४]।'

विक्रमोर्वशीये विदूषकः—( देवीं धारिणीमभिलक्ष्य ) 'छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भणति—गच्छ धर्मो मे भविष्यति[५]।'

अभिज्ञानशाकुन्तले विदूषकः—'ततो गण्डस्योपरि पिटकः संवृत्तः', 'अरण्ये मया रुदितमासीत्', 'न खलु दृष्टमात्रस्य तवाङ्कं समारोहति[६]' इत्यादि।

कालिदासस्येमाः सरसाः सदुक्तीरेवाभिलक्ष्य बाणभट्टेन स्वीये हर्षचरिते प्रोक्तम्—

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥ इति।

कालिदासस्य वक्रोक्तयस्त्वतीव मनोहराः सन्ति। वक्रोक्त्या वाचिकरसः समुद्भवति, यः स्वाभाविकरसस्य (शृङ्गारादेः) परिपोषे सहायको भवति। तद् यथा—( शाकुन्तलस्य प्रथमेऽङ्के अनसूया )"आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलङ्क्रियते ? कतमो वा विरहपर्युत्सुकीकृतो देशः ? किं निमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः ?" तत्रैव पञ्चमेऽङ्के शकुन्तला—"अनार्य ! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते" इत्यादि।

कालिदासस्य नाटकेषु प्रयुक्तं सम्भाषणम् ( कथोपकथनम् ) अप्यतीव सरलं विद्यते। अत एव तस्मिन् सर्वत्र स्वाभाविकं सौन्दर्यं दृष्टिमेति। सम्भाषणे सरलता, संक्षिप्तता, ओजस्विता चेति गुणत्रयमपेक्षितमस्ति। पात्रानुरूपं परिस्थित्यनुरूपञ्च कथोपकथनमायोजयितुं कालिदासः सर्वत्र यत्नवानस्ति। मालविकाग्निमित्रस्य प्रथमे अङ्के राज्ञोऽग्निमित्रस्योत्सुकताम्, परिव्राजिकायाः कौशिक्या धूर्तताम्, आचार्यगणदास-हरदत्तयोः कलहम्, ताभ्यां सह विदूषकस्य व्यङ्ग्यविनोदं प्रदर्शयितुं कालिदासेन यादृशं कथोपकथनं प्रस्तुतीकृतम्, तदवश्यमेव मनोहारि वर्तते।

---

१. मालविका० अं० ४; २. तदेव; ३. तदेव।
४. तदेव; ५. विक्रमो० अं० ३; ६. अभि० शाकुन्तलम्—अं० २।

अस्मिन् प्रसङ्गे शाकुन्तलस्य पञ्चमेऽङ्के कण्वाश्रमादागतानां राज्ञा दुष्यन्तेन सह सम्भाषणमुदाहरणीयमस्ति—

**शारद्वतः**—शार्ङ्गरव ! विरम त्वमिदानीम् । शकुन्तले ! वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययवचनम् ।

**गौतमी**—( राजानं प्रति ) महाभाग ! नार्हस्येवं मन्त्रयितुम् । तपोवनसम्बर्द्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।

**राजा**—तापसवृद्धे ! 'स्त्रीणामशिक्षितपटुत्वममानुषीषु' इत्यादि ।

**शकु०**—अनार्य ! आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ?

**राजा**—( शार्ङ्गरवं प्रति ) अयि भोः ! किमत्रभवतीप्रत्ययादेवास्मान् सम्भृतदोषाक्षरैः क्षिणुथ ।

**शार्ङ्ग०**—श्रुतं भवद्भिरधरोत्तरम् ? 'आजन्मनः शाठ्यमशिक्षितो यः' इत्यादि ।

**राजा**—भोः सत्यवादिन् ! अभ्युपगतं तावदस्माभिरेवंविधा वयम् । किं पुनरिमामतिसन्धाय लभ्यते ?

**शार्ङ्ग०**—विनिपातः ।

**राजा**—विनिपातः ? विनिपातः पौरवैः प्रार्थ्यत इत्यश्रद्धेयमेतत् ।

**शार०**—शार्ङ्गरव ! किमुत्तरेण ? अनुष्ठितो गुरोर्निदेशः । प्रतिनिवर्त्तामहे वयम् । ........गौतमि ! गच्छाग्रतः ।

सम्भाषणं नाट्यस्य सर्वाधिकमहत्त्वपूर्णोंऽशः । शाकुन्तलस्य पञ्चमेऽङ्के आयोजितस्य कथोपकथनस्य भाषिकसौष्ठवमेवाभिलक्ष्यालोचकैर्नाटकस्यास्य चतुर्थाङ्कस्यापेक्षया पञ्चमाङ्केऽधिकं रामणीयकं दृश्यते—

**शाकुन्तलचतुर्थोऽङ्कः सर्वोत्कृष्ट इति प्रथा ।**
**न सर्वसम्मता यस्मात् पञ्चमोऽस्ति ततोऽधिकः ॥**

नादमधुरशब्दयोजनायामपि कालिदासः सिद्धहस्तः कविः । तद् यथा—'निह्रादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि'[1] । अत्र मकारानुवृत्त्या मृदङ्गस्य तालध्वनेर्मनोरममनुकरणं श्रुतिपथमेति । एतादृशं नादमाधुर्यं तस्य काव्येष्वनेकत्र दृष्टिमायाति यत् सहृदयपाठकानां मनांसि हठादावर्जयति ।

---

१. मालविका० १।२१ ।

भाषागतसौन्दर्यस्याभिवृद्धये शब्दालङ्काराणां (विशेषतोऽनुप्रासस्य) संयोजनाऽपि महत्त्वपूर्णां भूमिकामाधत्ते। 'मायूरी मदयति मार्जना मनांसि' इति नादमाधुर्य-सम्पन्ना कवेरानुप्रासिकशब्दयोजनाऽत्रोद्धरणीयाऽस्ति।

वस्तुतो भाषाया नैसर्गिकं रूपं निर्मातुं कालिदास एव क्षमो नापरः। कालिदासो यादृशं भावमभिव्यक्तीकर्तुमभिवाञ्छति, तादृशी भाषा तादृशाः शब्दाश्च अहमहमिकया तस्य सम्मुखमापतन्ति। सारस्वतकवेः कालिदासस्येदमनन्यदृष्टं वैशिष्ट्यं द्रष्टव्यमस्ति। उदाहरणार्थम् (शाकुन्तले)—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती[1]॥

अस्मिन्नेकस्मिन्नेव पद्येऽनुमानोत्प्रेक्षा-सन्देह-रूपकातिशयोक्तिकारकदीपककाव्य-लिङ्गाद्यलङ्काराणामङ्गाङ्गिभावेन समावेशो भरतागममर्मज्ञानामाश्चर्यस्य विषयः। सौन्दर्यसृष्टिस्तत्त्वान्वेषिभिः कदापि सम्भवा न। तत्त्वान्वेषिणो (गुणालङ्कारादितत्त्वा-न्वेषिणो) विद्वांसः कवयश्च काव्यमार्गे हताः, कालिदासस्तु महान् कृती।

कालिदासस्य नैसर्गिकलालित्यपूर्णा भाषाऽनलङ्कृताऽपि तस्य निसर्गकन्या शकुन्तलेवाधिकमनोज्ञा प्रतिभाति—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्[2]॥

सरलता, स्वाभाविकता, प्राञ्जलता, वक्रोक्तेश्चमत्कारिता चेति कालिदासस्य प्रसादपूर्णाया भाषाया उल्लेखनीया विशेषताः सन्ति। अत्रोदाहरणार्थं कालिदासस्या-यमेक एव श्लोकः पर्याप्तोऽस्ति—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः[3]॥

---

१. अभि० शाकु० १।२३; २. तत्रैव १।१९; ३. विक्रमो० १।१०।

कालिदासस्य प्राकृतभाषायाः सौन्दर्यमप्यवलोकनीयमस्ति। तदर्थं कानिचिदुदाहरणान्यत्र प्रस्तूयन्ते। कालिदासस्य शौरसेनी (गद्ये शाकुन्तले) यथा— "अणज्ज ! अत्ताणो हिअआणुमाणेण पेक्खसि। को दाणिं अण्णो धम्म-कंचुअ-प्पवेसिणोतिणच्छण्णकूवोवमस्स तुह अणुकिदिं पडिवदिस्सदि[1] ?"

महाराष्ट्री (पद्ये मालविकाग्निमित्रे) यथा—

दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं
अम्हो अपंगओ मे परिस्फुरइ किं वि वामओ।
एसो सो चिरदिट्ठो कहँ उण उवणइदव्वो
णाह मं पराहीणं तुइ परिगणअ सतिण्हम्[2] ॥

(शाकुन्तले) यथा—

"तुज्झ ण जाणे हिअअं मम उण मदणो दिवावि रत्तिं वि।
णिग्घिण ! तवइ बलीअं तुइ वुत्तमणोरहाइँ अंगाइं[3] ॥"

अपभ्रंशस्य प्रयोगः (पद्ये विक्रमोर्वशीये) यथा—

"रे रे हंसा किं गोइज्जइ, गइ अणुसारें महँ लक्खिज्जइ।
कहँ पइँ सिक्खिउ ए गइलालस, सा पइँ दिट्ठी जहणभरालस[4] ॥"
"हउँ पइँ पुच्छिमि आ अक्खहि, गअवर ललिअ पहारें णासिअ तरुवर।
दूर विणिज्जिअ ससहरु कंती, दिट्ठि पिआपइँ सम्मुह जंती[5] ॥"

---

१. "अनार्य ! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।" (शाकु० अं० ५)

२. दुर्लभः प्रियो मे तस्मिन् भव हृदय निराश-
महो अपाङ्गो मे परिस्फुरति किमपि वामः।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥ (मालविका० अं० २)

३. 'तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रावपि।
निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥' (शाकु० अं० ३)

४. 'रे रे हंसाः ! किं गोपाय्यते गत्यनुसारेण मया लक्ष्यते।
केन तव शिक्षिता गतिः लालसा सा त्वया दृष्टा जघनभरालसा ॥' (विक्रमो० ५।१७)

५. अहं त्वा पृच्छामि आचक्ष्व गजवर ! ललितप्रहारेण नाशिततरुवर।
दूरविनिर्जितशशधरकान्तिः दृष्टा प्रिया त्वया सम्मुखं यान्ती ॥ (विक्रमो० ४।२२)

वस्तुतः कालिदासस्य मनः प्राकृतभाषाया गीतरागेण प्रसभं हारितमासीत्। अत एव तस्य नाटकेषु आर्याछन्दसः प्रयोगोऽन्यच्छन्दसामपेक्षयाऽधिको दृश्यते[1]। नाटकेषु आर्यायाः प्रयोगस्याधिक्यं प्राकृतभाषायाः प्रभावोऽस्ति। आर्याछन्दः प्राकृतभाषायाः छन्दोऽस्ति। संस्कृते तस्य प्रवेशः (कालिदासस्य काले) प्राकृतकाव्यशैल्याः लोकप्रियतां द्योतयति।

उपसंहारः—तात्पर्यमिदं यत् संस्कृतनाटकेषु भाषायाः प्रयोगे कालिदासस्तत्पूर्ववर्त्तिनो भासादयस्तत्परवर्त्तिनो विशाखदत्तादयश्च सर्वं एव नाटककारा नाट्यशास्त्रीयं विधानमनुसरन्तीत्यत्र न कश्चनापवादः; किन्तु नाट्यशास्त्रीयस्यान्यशास्त्रीयस्य वा मापदण्डस्य सर्वांशतोऽनुसरणं कालिदासस्य सर्वातिशायिन्याः प्रतिभायाः स्वीकार्यं नास्ति।

स्थूलं निदर्शनम्—नाट्ये संगीतस्य ( नृत्यगीतवाद्येति त्रितयस्य ) महत्त्वपूर्णं स्थानमस्तीति भरतस्यान्येषां च नाट्याचार्याणामभिमतम्; किन्तु कालिदासस्य नाटकेषु मालविकाग्निमित्रे केवलमेकमेव गीतं केवलमेकमेव नृत्यं प्रयुक्तमास्ते[2]। शाकुन्तले केवलं गीतद्वयमेव प्रयुक्तमस्ति[3]। विक्रमोर्वशीये तु तयोरन्यतरमपि नास्ति। भाषायाः प्रयोगे वाक्यानां विन्यासे च कविना स्वातन्त्र्यमवलम्बितमिति पूर्वमुक्तमेव। नाट्ये प्राकृतगद्ये शौरसेन्याः, प्राकृतपद्ये महाराष्ट्र्याः प्रयोगः शास्त्रकाराणां विधानं तथैव परम्परा च। अत्रापि कालिदासस्य कविः स्वतन्त्रः। स प्राकृतगद्ये शौरसेनीं प्राकृतपद्ये महाराष्ट्रीं प्रयुञ्जानोऽपि शाकुन्तलस्य षष्ठेऽङ्के धीवरप्रसङ्गे मागधीमुपयुङ्क्ते। विक्रमोर्वशीये चतुर्थेऽङ्के च तेनापभ्रंशस्य प्रयोगः कृतोऽस्तीत्यपि पूर्वं प्रदर्शितमेव।

तथापि लोकोत्तरवर्णनानिपुणकवेः कालिदासस्य पात्राणां परिस्थितेश्चानुरूपं प्रयुक्तायां सरलप्राञ्जलपरिमार्जितायां भाषायां रसानुगुणगुणरीत्यलङ्काराणां तथा स्थाने स्थाने वक्रोक्तीनां सदुक्तीनां लोकोक्तीनाञ्चोपयोगेन, एवं कथोपकथनादीनां समुचितयोजनया तस्य भाषा समधिकसौन्दर्यपूर्णा सप्राणा च सञ्जाताऽस्ति। तस्य भाषिकसौन्दर्यविधानं प्रशंसता महर्ष्यरविन्देन प्रोक्तम्—

(भाषानुवादः) 'कालिदासो मूर्धन्यकलाकारोऽस्ति। स भावनायां गम्भीरः, रचनायां मधुरः, नादस्य भाषायाश्च स्वामी वर्त्तते। स गीर्वाणगिराया असीम-

---

१. मालविकाग्निमित्रे ३५ आर्याः, विक्रमोर्वशीये २९ आर्याः, शाकुन्तले ३८ आर्याः सन्ति।

२. मालविकाग्निमित्रे द्वितीयेऽङ्के शर्मिष्ठाकृतस्य छलिकप्रयोगस्य चतुष्पदा गीतिः—'दुल्लहो पिओ मे' इत्यादि।

३. शाकुन्तलस्य प्रथमाङ्कस्यारम्भे नट्या ग्रीष्मगानम्—'ईसीसि चुंबिआइं भमरेहिं' इत्यादि। पञ्चमाङ्कस्यारम्भे हंसपदिकाया आकाशगीतिः—'अभिणव-महु-लोलुवो' इत्यादि।

सम्भावनासु स्वस्मै पद्यपद्धतेः पदयोजनायाश्च एतादृशं निर्माणं कृतवानस्ति, यन्निश्चित-रूपेणात्यधिकं महत्, अत्यधिकं शक्तिशालि तथा नादविकसितमस्ति। कालिदासेन संस्कृतगिरा श्रेष्ठनादस्य भव्यप्रासादे (At the palace of noble sound) स्थापिताऽस्ति। तस्य भाषायाः शैलीगतविशेषताः सन्ति—सुसंघटिता; किन्तु नैसर्गिकी संक्षिप्तता, मसृणं गाम्भीर्यमेवं सुस्निग्धमौदार्यम्, पद्यगतश्रेष्ठस्वरसामञ्जस्यस्य तथा परिष्कृतगद्यस्य सशक्तमेवं प्राञ्जलं सौन्दर्यम्, संक्षिप्ततायास्तथा प्रभविष्णोः पद-योजनाया निश्चितार्थवत्ता च यत्र रङ्गस्य माधुर्यस्य समुच्छलितः प्रवाहोऽस्ति।

आभिः स्थायिविशेषताभिः सम्पन्नायां तस्य वाण्यां नादस्याभिव्यक्तेश्च सम्पूर्णभव्यताया मञ्जुलः समावेशो दृश्यते। तस्य नाट्यगतशैल्यामेकमनन्यसाधारणं सौन्दर्यं तथा माधुर्यं विद्यते, येन तस्य भाषा संलापस्य नाटकीयवृत्तेस्तथा सूक्ष्मातिसूक्ष्मभावाभिव्यक्तेः सर्वथोपयुक्ताऽस्ति[१]।

● ● ●

१. Shree Aurobindo—Kalidasa, Second Series, p. 16–17.

# महाकविकालिदासस्य काव्येषु संस्कारवर्णनम्

डॉ० रामाशीषपाण्डेयः,
संस्कृतविभागाध्यक्षः
मारवाड़ीमहाविद्यालये, राँची ।

❀ ❀ ❀

सम्+कृ+घञ् कृते निष्पन्नः संस्कारशब्दः शुद्धिवासनाप्रतियत्नानुभवमानसकर्मगुणविशेषप्रभृत्यर्थानभिव्यनक्ति[1] । जैमिनिसूत्रे संस्कारशब्दस्य प्रयोगो यागादौ शारीरिकमानसिकशुद्ध्यर्थञ्च दृश्यते[2] । शाबरभाष्ये—'संस्कारो नाम स भवति, यस्मिञ्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य[3]' । तन्त्रवार्तिके तु—'योग्यतां चादधानाः क्रियाः संस्कार इत्युच्यन्ते'[4] । वेदान्तसूत्रस्य शाङ्करभाष्ये—'संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयनेन वा'[5] । वीरमित्रोदये संस्कारो द्विधा वर्णितः—शरीरशुद्धये जातकर्मादिसंस्कारा अदृष्टफलावाप्तये उपनयनादिसंस्काराश्च विद्यन्ते । तत्र प्राप्यते यत्—'एते गर्भाधानादयः संस्काराः शरीरं संस्कुर्वन्तः सर्वेष्वदृष्टार्थेषु कर्मसु योग्यतातिशयं कुर्वन्ति । फलातिशयो योग्यतातिशयश्च[6] । कुमारसंभवमहाकाव्यस्य प्रसिद्धटीकाकारेण मल्लिनाथेन संस्कारशब्दस्य तात्पर्यं शुद्धिरेव दर्शिता—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥

(कुमारसम्भवम्—१।२८)

अत्र संस्कारवत्येव गिरा इत्यस्य व्याख्यायां मल्लिनाथः प्रतिपादयति यत् संस्कारो व्याकरणजन्याशुद्धिस्तद्वत्या गिरा वाचा इति । एवमेव रघुवंशमहाकाव्यस्य (७/९०, १५/७६) श्लोकयोरपि संस्कारशब्दः शुद्धताया अर्थमादधाति । अनेन वर्णनेन स्पष्टं प्रतीयते यत् शारीरिक-मानसिकशुद्ध्यर्थं प्रवर्तितः संस्कारशब्दो भारतीयसंस्कृतौ नितरां प्रामुख्यमादधाति । मनुस्मृतावपि—

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव हि[7] ॥

---

१. हलायुधः–६८० पृष्ठे ।
२. जैमिनिसूत्रे–३।८।३, ६।१।३५, ९।३।२५, १०।२।४९ ।
३. शाबरभाष्ये–६६० पृष्ठे ।
४. त० वा०–१०७८ पृष्ठे ।
५. वेदा० सू० शा० भा०–१।१।४ ।
६. द्र०–धर्मशास्त्र का इतिहास–६, पृ० १९१ ।
७. मनुस्मृतौ–२।१६९ ।

भारतीयसंस्कृतौ भारतीयानां जीवनं विशेषतो वैदिकमार्गावलम्बिनां जीवनं संस्कारैः संस्कृतं भवति विद्यते च। महाकविना कालिदासेनापि स्वकीयकाव्येषु संस्कारशब्दस्य प्रयोगः संस्कारार्थं कृतः। तद् यथा—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत्।
संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि॥ (रघु० १५।३१)

अत्र प्राप्यते यद् राज्ञो दशरथस्य जनकस्य च सखा मन्त्रद्रष्टा वाल्मीकिरुभयोः प्रीत्या सीतापुत्रयोर्जातकर्मादिसंस्कारं कृतवान्। संस्कारैः संस्कृतो जनः तेजसा युक्तोऽलौकिकप्रभां कान्तिञ्च बिभर्ति। अभिज्ञानशाकुन्तलनाटके संस्कारस्य फलं वर्णितमस्ति—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।
चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते[1]॥

अत्र प्राप्यते यत् संस्कारोल्लिखितः क्षीणोऽपि मणिः कान्तिपूर्णः दृश्यते। एवमेव रघुवंशमहाकाव्ये प्राप्यते यत् संस्कारयुक्ते 'सति' रघुः परममधिकां शोभां धारयामास—

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ[2]॥

एवमेव कुमारसम्भवमहाकाव्यस्य (१।२८, ७।९०), रघुवंशमहाकाव्यस्य (१०।७८, १२।५६, १४।७५, १५।७६) श्लोकेषु संस्कारशब्दस्योल्लेखो वर्तते।

**संस्कारसंख्यानिरूपणम्**

धर्मशास्त्रेषु संस्कारसंख्या निरूपिता वैविध्येनोपवर्णिताः सन्ति। गौतमधर्मसूत्रे चत्वारिंशत् संस्कारा वर्णिताः सन्ति[3]। तेषु चतुर्दशब्रह्मसंस्काराः, षड्विंशतिश्च दैवसंस्काराः सन्ति। आङ्गिरसप्रभृतयो धर्मशास्त्रकाराः पञ्चविंशतिसंस्कारान् स्वीकुर्वन्ति। व्यासस्मृतौ षोडशमुख्यसंस्कारा विद्यन्ते। संस्कारभास्करेऽपि षोडशसंस्कारा एव उल्लिखिताः सन्ति—

गर्भाधानमतश्च पुंसवनकं सीमन्तजाताभिधे
नामाख्यं सह निष्क्रमेण च तथाऽन्नप्राशनं कर्म च।
चूडाख्यो व्रतबन्धकोऽप्यथ चतुर्वेदव्रतानां पुनः
केशान्तः सविसर्गकः परिणयः स्यात् षोडशी कर्मणाम्॥

---

१. अभिज्ञानशाकुन्तलम्–६।६;  २. रघुवंशमहाकाव्यम्–३।१८।
३. गौ० ध० सू० ८।१४–२४।

**कालिदासस्य काव्येषु वर्णिताः संस्काराः**

महाकविकालिदासस्य काव्येषु गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरण-निष्क्रमणान्नप्राशनचूडाकरणोपनयनकेशान्तविवाहादिसंस्कारा वर्णिताः सन्ति।

**गर्भाधानसंस्कारः**

गर्भः सन्धार्यते येन कर्मणा तद् गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्[1]। संस्कारेषु प्रथमोऽयं संस्कारो निषेकशब्देनाप्याख्यायते। मनुस्मृतौ तु—**'निषेकादि श्मशानान्तः'**[2] इति वर्णनेन स्पष्टं प्रतीयते निषेकसंस्कारः। याज्ञवल्क्यप्रभृतयः शास्त्रकाराश्चापि गर्भाधानसंस्कारं निषेकशब्देन सूचयन्ति[3]। विवाहस्य चतुर्थरात्रौ गर्भाधानसंस्कारः कर्त्तव्य इति सूत्रग्रन्थेषु प्राप्यते[4]। प्रतीयते यत् पुरा विवाहकाले कन्या गर्भाधानयोग्या एव निषेकसंस्कारयुक्ता भवन्ति स्म।

> **अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।**
> **दशवर्षा भवेत् कन्या तत ऊर्ध्वं रजस्वला॥**

इति मनुस्मृतौ प्रोक्तेन वचनेन दशवर्षीया एव कन्या भवति। अतो विवाहितायां रजस्वलायामेव गर्भाधानस्यौचित्यम्, न तु तद्व्यतिरिक्तायाम्। अतो विवाहानन्तरं कस्मिन्नपि शुभे समये गर्भाधानयोग्याया गर्भाधानसंस्कारो विहितः। महाकविकालिदासेन स्वकीयकाव्येषु गर्भाधानसंस्कारस्य वर्णनं कृतम्। रघुवंशमहाकाव्ये प्राप्यते यत्—

> **अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।**
> **नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी गुरुभिरभिनिविष्टं लोकपालानुभावैः[5]॥**

अत्र गर्भमाधत्त राज्ञी इति विहितम्। 'आधत्त' इत्यनेन स्त्रीकर्तृकधारणे—**,यथेयं पृथिवी मह्युत्ताना गर्भमादधे। एवं त्वं गर्भमाधेहि दशमे मासि सूतवे'** इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारणाधानशब्दप्रयोगदर्शनादिति सञ्जीविन्याम्। गर्भाधानसंस्कारार्थं निषेकशब्दस्य प्रयोगः कालिदासेनापि कृतः—

> **तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व।**
> **योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्[6]॥**

---

१. पूर्वमीमांसा—१।४।२—
निषिक्तो यत्प्रयोगेण गर्भः संधार्यते स्त्रिया।
तद्गर्भालम्बनं नाम कर्म प्रोक्तं मनीषिभिः॥ (सं० प्र० १४१ पृष्ठे)

२. मनु०—२।१६।२६; ३. याज्ञ० ३।१०। ४. शाङ्खायनगृह्यसूत्रे।

५. रघुवंशम्—२।७५; ६. कुमारसम्भवम्—३।१६।

अनेन गर्भाधानसंस्कारस्य वर्णनं महाकविकालिदासस्य काव्येषु स्पष्टमेव। यद्यपि गर्भाधानसमयस्य संकेतो पूर्णतया न गृह्यते; तथापि विवाहान्तरमेव गर्भाधानसंस्कारः शास्त्रानुमोदितोऽत्रापि दृश्यते।

**पुंसवनादिसंस्कारः**

संस्कारेषु गर्भाधानसंस्कारानन्तरं द्वितीयोऽयं पुंसवनसंस्कारः। पुमान् सूयतेऽनेनेति पुंसवनमिति व्युत्पत्या पुत्रोत्पत्यर्थमेव संस्कारोऽयं विहितः[१]। पुंसवनसंस्कारो द्वितीये तृतीये वा मासि कर्त्तव्य इति प्राप्यते[२]। गर्भसंस्कारोऽयं विहिते काले विधीयते। रघुवंशमहाकाव्यानुसारं प्राप्यते यद् राजा दिलीपः स्ववैभवानुसारं स्वप्रियानुरागानुकूलं स्वीयालौकिकसन्तोषानुरूपञ्च पुंसवनादिगर्भसंस्कारान् कृतवान्—

**प्रियानुरागस्य मनः समुन्नतेर्भुजार्जितानां च दिगन्तसम्पदाम्।**
**यथाक्रमं पुंसवनादिका क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः[३]॥**

अभिज्ञानशाकुन्तलेऽपि पुंसवनसंस्कारस्य वर्णनं दृश्यते। यथा—'**देव इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निवृत्तपुंसवना जायाऽस्य श्रूयते**'[४]।

**सीमन्तोन्नयनसंस्कारः**

पुंसवनानन्तरं क्रमप्राप्तं सीमन्तोन्नयनं गर्भसंस्कारकं कर्म कर्त्तव्यमिति प्रथमे गर्भे मासि षष्ठे अष्टमे वा विहितम्। सीमन्तशब्दः केशवेशे प्रसिद्धः। सीमन्तोन्नयनसंस्कारे गर्भिण्याः सीमन्तस्योन्नयनं भवति यथाविहितकर्मणि[५]। महाकविकालिदासेन रघुवंशमहाकाव्ये पुंसवनादिका क्रिया इति कथयता सीमान्तोन्नयनसंस्कारः संकेतितः। मल्लिनाथेनापि सञ्जीविन्यां प्रकटितं यत्—'**आदिशब्देनानवलोभनसीमन्तोन्नयने गृह्येते**' इति।

**जातकर्मसंस्कारः**

जातस्य कर्म इति व्युत्पत्त्या जातकर्मसंस्कारो नवजातस्य शिशोर्जननानन्तरं प्रथमः संस्कारः। पारस्करगृह्यसूत्रे प्राप्यते यत् प्रसवकालादारभ्य जातस्य कर्म अत्र विहितम्[६]। प्रसवकालेऽभ्युक्षणम्, ततोऽवरापतनमिति सोष्यन्तीकर्म। जातकर्म तु

---

१. पूमान् प्रसूयते येन तत्पुंसवनमीरितम्—(सं० प्रका० १६७ पृष्ठे) शौनकवचनम्।
२. आश्व० गृ० सू० १।१३; संस्कारमयूखे चापि। ३. रघुवंशम्—३।१०।
४. अभिज्ञानशाकुन्तलम्—६।११३ पृष्ठे।
५. सीमन्त उन्नीयते यस्मिन् कर्मणि, तत् सीमन्तोन्नयनमिति कर्मनामधेयम्। (सं० प्र० पृष्ठ १७२)
६. पार० गृ० सू० १।१६।

द्विधा विभक्तम्—मेधाजननमायुष्यकरणञ्च। महाकविकालिदासस्य काव्येषु जातकर्म-संस्कारस्य वर्णनमतिशयेन लभ्यते। रघुवंशमहाकाव्यानुसारं दिलीपपुत्रः स्वतस्तेजस्वी सन्नपि महर्षिणा वसिष्ठेन जातकर्मसंस्कारे विहिते अतीव शोभामाप—

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ[1]॥

पुनः राज्ञो दशरथस्य जनकस्य च सखा मन्त्रद्रष्टा वाल्मीकिरुभयोः प्रीत्या सीतापुत्रयोर्जातकर्मादिसंस्कारं कृतवान्—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत्।
संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि[2]॥

अभिज्ञानशाकुन्तले मारीचः कथयति—'वत्स! कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः'[3]। तत्रैव राजा कथयति—'भगवता कृतसंस्कारे सर्वमस्मिन् वयमाशास्महे'। विक्रमोर्वशीये च तापसी कथयति—'शृणोतु महाराजः। एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः, यत्क्षत्रियकुमारस्य जातकर्मादिविधानम्, तदस्य भगवता च्यवनेनाशेषमनुष्ठितम्। गृहीतविद्यो धनुर्वेदेऽभिविनीतः'[4] इति।

अनेन स्पष्टं भवति यद् जातकर्मसंस्कारः कालिदासस्य काव्येषु प्रभूतेन चर्चितः।

**नामकरणसंस्कारः**

व्यवहारनिर्वाहार्थं नामकरणमावश्यकमेव कस्यापि वस्तुनः[5] प्रसवदिनमारभ्य दशम्यां सूतिकागृहादुत्थाय पिता अपत्यस्य नामधेयं करोति। मल्लिनाथस्तु—'अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते' इति शङ्खवचनं सञ्जीविन्यां प्रस्तौति[6]। मनुस्मृतौ तु—'नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत्'[7] इति प्राप्यते। अनेन वचनेन दशमे द्वादशे वा दिने नामकरणसंस्कारः कार्यः। महाकविकालिदासस्य काव्ये नामकरणसंस्कारस्योल्लेखो विद्यते। यथा रघुवंशमहाकाव्यानुसारं ज्ञायते यद् रघोः पत्नी ब्राह्मे मुहूर्ते कार्तिकेयसदृशं पुत्रं जनयामास। रघुरपि तं पुत्रं ब्राह्ममुहूर्तोत्पन्नत्वाद् अजं नाम चकार—

---

१. रघुवंशम्—३।१८।

२. रघु० १५।३१; ३. अभिज्ञानशा० ४, पृ० १३८; ४. विक्रमो० ५, पृ० २३६।

५. नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म॥ (सं० प्र० पृ० २४१)।

६. रघु०—३।२१; ७. मनु०—३।३०।

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार[1] ॥

पुनश्च रघुवंशमहाकाव्य एव कुशलवयोर्नामकरणे—

स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः[2] ॥

नाम्न आधारवर्णने बृहद्देवतायां प्राप्यते यत्—

निवासात्कर्मणो रूपात् मङ्गलाद्वाच आशिषः ।
यदृच्छयोपवसनात् तथामुष्यायणाच्च यत्[3] ॥

बौधायनगृह्यसूत्रानुसारं नामकरणे ऋषिदेवतावाचकशब्दाः प्रयोज्या इति प्राप्यते[4] । नाम्नः सार्थकत्वमपि नामकरणे ध्यातव्यमस्ति । कालिदासस्य काव्येषु प्रायः सर्वत्र नामकरणं सार्थकत्वं धारयति । रघुवंशमहाकाव्ये रघोः नामकरणे नाम्नः सार्थकत्वं द्रष्टव्यम्—

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्[5] ॥

अत्र नाम्नः सार्थकत्वं तु विद्यत एव । मल्लिनाथेन नामकरणसंस्कारस्योल्लेखः सञ्जीविन्यां प्रतिपादितः अशौचे तु इति शङ्खवचनेन ।

रघुवंश एव रामस्य नामकरणे—

राम इत्यभिरामेण वपुषा तस्य चोदितः ।
नामधेयं गुरुश्चक्रे जगत् प्रथममङ्गलम्[6] ॥ इति ।

पुनश्चाभिज्ञानशाकुन्तले भरणाद् भरतः, सर्वदमनात् सर्वदमन इति प्राप्यते—

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्[7] ॥

यद्यपि गुणानुप्राणितं कर्मानुप्राणितं नाम कालिदासस्य पात्रेषु प्रायेण दृश्यते; तथाप्यनेन प्रतीयते यत् कालिदाससमयेऽपि नामकरणसंस्कारो यथाविधिर्यथासमये च सम्पाद्यते स्म । पुनश्च कल्पसूत्रानुमोदितं नाम जातस्य कृते विहितमासीत् ।

---

१. रघु० ५।३६; २. तदेव—१५।३२ ।
३. बृहद्देवता—१।२५; ४. बौधा०—२।१।२८।२१; ५. रघुवंशम्—३।२१ ।
६. रघु०—१०।६७; ७. अभिज्ञानशा०—७।३३ ।

**निष्क्रमणान्नप्राशनसंस्कारौ**

अथ निष्क्रमणं नाम गृहात् प्रथमनिर्गमः।
अकृतायां क्रियायां स्यादायुः श्रीर्नाशनं शिशोः[1] ॥ इति बृहस्पतिः।

कुमारस्य जननाच्चतुर्थे मासि निष्क्रमणिका गृहाद्बहिर्नयनं कर्त्तव्यम्—'चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्' इति मनुस्मृतौ[2]।

एवमेवान्नस्य प्राशनं यस्मिन् कर्मणि तदित्यन्नप्राशनसंस्कारोऽपि षष्ठे मासि कर्त्तव्य इति मनुस्मृतौ प्राप्यते[3]। महाकविना कालिदासेन जातकर्मादिविधानं वर्णयता आदिपदेन निष्क्रमणान्नप्राशनादिसंस्काराणां वर्णनं संकेतितम्[4]।

महामहोपाध्यायेन मल्लिनाथेनापि प्रतिपादितं यत्—'जातकर्मादयः शब्दा निष्क्रमणान्नप्राशनसंस्कारान् सूचयन्ति'।

**चूडाकर्मसंस्कारः**

चूडा शिखा क्रियते स्थाप्यते यस्मिन् कर्मणि तच्चूडाकरणम्। अतश्चूडाकरणे शिखास्थापनस्य व्यवस्था क्रियते[5]।

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्[6] ॥ (इति मनुस्मृतौ)

आश्वलायनगृह्यसूत्रे—तृतीये वर्षे चूडाकरणं यथाकुलं कार्यमिति प्राप्यते। चूडाकरणस्योपयोगित्वमपि वसिष्ठस्मृतौ वर्णितम्—

सर्वेषामेव वर्णानां चूडाकर्मविधिस्मृतः।
केशमूलं पिता ज्ञेयः केशाग्रं जननी तथा ॥
चौलेनैव यशोवृद्धिः चौलेनैवायुषो मतः।
तस्माच्चौलं प्रयत्नेन कारयेद् बुद्धिमान्नरः[7] ॥

चूडाकरणसमयनिरूपणे तत्रैव—

"तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतो हितम्।
चौलं शिशूनां यत्नेन स्वगृह्योक्तं विधानतः ॥
आधानतो जन्मतो वा सप्तमेऽब्देऽपि कारयेत् ॥

---

१. सं० र० मा० पृ० ८८६। २. मनु०—२।३४।
३. 'षष्ठेऽन्नप्राशनं मासि यथेष्टं मङ्गलं कुले' (मनु०—२।३४)।
४. विक्रमो० ५, पृ० २३६।
५. पारस्करगृह्यसूत्रस्य हरिहरभाष्यम्—२१ (द्र०); ६. मनु०—२।३५।
७. पञ्चरत्नविवाहपद्धतौ—प्रक० ३, पृ०-९०।

महाकविकालिदासस्य काव्येषु चूडाकरणसंस्कारस्य वर्णनं प्राप्यते। रघुवंश-महाकाव्ये लभ्यते यत्—निष्पन्नचूडाकर्मा रघुः मन्त्रिपुत्रैः सह लिपिशिक्षणेन समस्तं वङ्मयं ज्ञातवान्—:

> स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितैः।
> लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्[1]॥

अत्र मल्लिनाथेन व्याख्यातम्—"चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनादिति" मनुस्मरणात् तृतीये वर्षे वृत्तचूलो निष्पन्नचूडाकर्मा सन् स रघुः (प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत्) इति वचनात् पञ्चमे वर्षे चलकाकपक्षकैश्चञ्चलशिखण्डकैरिति। 'बालानां तु शिखा प्रोक्ता काकपक्षशिखण्डकः' इति हलायुधः। महाकविना कालिदासेन स्वकाव्येषु अनेकेषु स्थलेषु[2] काकपक्षशिखण्डयोः[3] प्रयोगः कृतः।

**उपनयनसंस्कारः**

आपस्तम्बधर्मसूत्रे—'उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः। विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः। तस्यायं श्रुतिविहितः संस्कार उपनयनं नाम'[4] उपनयनं नाम येन कर्मणा यस्मिन् वा कर्मणि आचार्येण विद्यार्थं सुमुहूर्ते कुमारस्य स्वसमीपे नयनम्। तच्च सङ्कल्पप्रभृतिसावित्रीव्रतविसर्गान्तकर्मसमुदायात्मकम्। मनुस्मृतौ उपनयनसंस्कारकालो यथा—

> गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
> गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥
> ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
> राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे[5]।

ब्रह्मचर्याश्रमप्रवेशात्पूर्वमुपनयनं कर्त्तव्यमिति धर्मसूत्रे सूत्रितम्। रघुवंशमहा-काव्यानुसारं प्राप्यते यत् कृतयज्ञोपवीतसंस्कारं रघुं विपश्चितो गुरवः शिक्षितवन्तस्ते च सफलप्रयत्ना अभूवन्—

---

१. रघु०—३।२८।

२. (क) 'काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते' (रघु० ११।१)।
(ख) 'तौ प्रणामचलकाकपक्षकौ भ्रातराववभृथाप्लुतो मुनिः' (रघु० ११।३१)।

३. (क) 'तौ पितुर्नयनजेन वारिणा किञ्चिदुक्षितशिखण्डकावुभौ' (रघु० ११।५)।
(ख) 'को नु खल्वेष स बाणासनः पादपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति' (विक्र० ५। पृ० २३८)।

४. आप० १।१ सं० त० मा०, १६४ पृष्ठे; ५. मनु० २।३७-३८।

**यथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।**
**अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति[1] ॥**

उपनयनानन्तरमेव ब्रह्मचारिभिः वेदाध्ययनं कर्त्तव्यमिति मूलप्रयोजनमुपनयनस्य धर्मसूत्रे ब्रह्मचारी प्रकरणे—

**मेखलामजिनं दण्डं सूपवीतञ्च सर्वदा ।**
**कटिसूत्रञ्च कौपीनं ब्रह्मचारी तु धारयेत् ॥**

कुमारसम्भवमहाकाव्ये पञ्चमसर्गे ब्रह्मचारिवेषधारी शिवः प्रविशति—

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा[2] ॥

अनेन वर्णनेन कालिदासस्य काव्येषूपनयनसंस्कारस्योल्लेखः सुस्पष्टः ।

**केशान्तसंस्कारः**

केशस्य श्मश्रुप्रभृतेः अन्तो यत्र तत् कर्मेति अन्वर्थमिदमपि नामधेयं संस्कारस्य । केशानां श्मश्रुकूर्चयोश्चात्र वपनं कर्त्तव्यं भवति[3] ।

यथोक्तं मनुना—

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।**
**राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥**

वेदाध्ययनानन्तरं विवाहात् पूर्वं संस्कारोऽयं विहितः । ब्रह्मचर्याश्रमान्ते गृहस्थाश्रमप्रवेशात्पूर्वं विहितोऽयं संस्कारो महाकविकालिदासस्य रघुवंशमहाकाव्ये संकेतरूपेण प्राप्यते—

**अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद् गुरुः ।**
**नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः[4] ॥**

अस्मिन् श्लोके प्रयुक्तगोदानविधिशब्दो मल्लिनाथेन प्रतिपादितः सञ्जीविन्याम्—'गावो लोमनि केशा दीयन्त एव खण्ड्यन्तेऽस्मिन्निति' व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्त्तव्यं केशान्ताख्यं कर्मोच्यते ।

**विवाहसंस्कारः**

गृहस्थाश्रमः सर्वोपकारक्षम आश्रम इति महाकविना कालिदासेन प्रतिपादितम्[5] । मनुस्मृतावपि—

---

१. रघु० ३।२९; २. कुमारसं० ५।३० ।

३. (क) 'केशश्मश्रिवति च केशान्ते' (पा० गृ० १।२४) ।
(ख) 'प्रतिपत्तौ सर्वान् केशान् वापयति' (बौ० गृ० ३।२।२५) ।

४. रघु० ३।३३ ।

५. अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीयः सर्वोपकारक्षममाश्रमं ते ॥ (रघु० ५।१०) ।

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः॥

इत्यनेन गृहस्थाश्रमस्य महत्त्वमतितरां स्पष्टं भवति। गृहस्थाश्रमप्रवेशात्पूर्वं विवाहसंस्कारविहितोऽथवा गृहस्थाश्रमस्य विहितो विवाहसंस्कारः।

वि+वह्+घञ् इत्यनेन निष्पन्नो विवाहशब्दो विशिष्टो वहनमिति व्युत्पत्त्या स्वार्थमावहति। विवाहशब्दस्य पर्यायभूता दारपरिग्रहपाणिग्रहणकरग्रहोपयमपरिणयादयः शब्दा विद्यन्ते। विवाहसंस्कारस्तु पुत्रोत्पादनार्थं शास्त्रविहितमिति कालिदासेनापि स्वीकृतम्[1]। पुत्रस्तु पूर्वेषामृणनिर्मोक्षकारकः[2]।

विवाहसंस्कारस्य चित्रं रघुवंशमहाकाव्ये प्रथमं दर्शनीयं भोजराजगृहे अग्निकल्पस्तस्य पुरोधा आज्यादिभिः अग्निं हुत्वा अग्निमेव विवाहसाक्ष्य आधाय इन्दुमती-अजौ वधूवरौ सङ्गमयाञ्चकार—

तत्रार्चितो भोजपतेः पुरोधा हुत्वाग्निमाज्यादिभिरग्निकल्पः।
तमेव चाधाय विवाहसाक्ष्ये वधूवरौ सङ्गमयाञ्चकार[3]॥

तथा च मालविकाग्निमित्रे विदूषकः कथयति—**'भो वयस्य! विवाहनेपथ्येन सविशेषं खलु शोभते मालविका'**[4]। एवमेव कुमारसम्भवमहाकाव्यस्य श्लोके विष्टराघ्यं-मधुपर्कप्रदानस्य, पाणिग्रहणस्य, प्रदक्षिणायाः, लाजाहुतिविधानस्य, प्रतिज्ञावाक्यस्य, ध्रुवदर्शनस्य वर्णनं विवाहसंस्कारान्तर्भूतं विद्यते। एवञ्च रघुवंशमहाकाव्यस्य (७।२१) श्लोके पाणिग्रहणस्य, (७।२४) श्लोके अग्निप्रदक्षिणायाः, (७।२५) श्लोके लाजाहुतिविधानस्य वर्णनं विद्यते। तथा च तत्रैव (७।२६,११।३२,१२।२९) श्लोकेष्वपि विवाहस्य वर्णनमायाति।

**अन्त्येष्टिसंस्कारः**

मृत्योरनन्तरं शवसंस्कारोऽन्त्येष्टिसंस्कारो नैष्ठिकसंस्कारो वा कथ्यते। धर्मसूत्रानुसारमन्त्येष्टिक्रियायां नैष्ठिकक्रियायाञ्च पार्थक्यं दृश्यते। नैष्ठिकक्रियाया वर्णनं महाकविकालिदासस्य काव्येषु प्रथमं दर्शनीयम्। अग्निचिदजः पितुमनग्निं नैष्ठिकं विधिं यतिभिः सार्धं विदधे—

---

१. त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्॥ (रघु० १।७)।

२. न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम्।
सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम्॥ (रघु० १०।२)।

३. रघु० ७।२०।

४. मालविकाग्निमित्रम्—५, पृ० ३३२।

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमग्निमनग्निचित्[1] ॥

अनेन श्लोकेन प्राप्यते यद् योगिनां दहनक्रिया तदा विवर्जिता आसीत्। तस्मिन् समये भिक्षोः कलेवरं बिले निदध्यादिति. विधिः प्रचलितः[2]। शौनकस्योक्तिस्तु तदा चरितार्था आसीत्।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च।
न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया।
निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम् ॥
प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत् ॥

एवमेवाग्निसंस्कारोऽपि महाकवेरस्य काव्येषु वर्णितः। राम-लक्ष्मणौ गृध्रराजस्य पितृवदौर्ध्वदेहिकं चक्रतुः—

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात् पराववृतिरे क्रिया[3] ॥

तथा चाग्निवर्णस्याग्निसंस्कारोऽपि रघुवंशमहाकाव्यस्य (१९।५४) श्लोके वर्णितः। कुमारसम्भवमहाकाव्यस्य (४।३६) श्लोके चिताया वर्णनं लभ्यते।

**श्राद्धसंस्कारः**

पितृभ्यः श्रद्धया यद्दीयते तत् श्राद्धमिति श्राद्धसंस्कारः प्रजानिःश्रेयसे महत्त्वमण्डितः[4]। मनुरपि प्रजानां निःश्रेयसे श्राद्धस्योपयोगित्वमुपवर्णयति। रघुवंशमहाकाव्ये श्राद्धसंस्कारो द्रष्टव्यः। पितृकार्यकल्पविदजः पितृभक्त्या तदौर्ध्वदेहिकमकरोत्—

अकरोत् स तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्यकल्पवित्।
न हि तेन यथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः[5] ॥

श्राद्धे पितृभ्यः प्रियवस्तुनो दानमावश्यकमिति रतिः वसन्तं कथयति यत् कामदेवाय प्रिया आम्रमञ्जरी त्वया श्राद्धे दातव्या—

परलोकविधौ च माधव! स्मरमुद्दिश्य विलोलपल्लवाः।
निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा[6] ॥

श्राद्धे जलाञ्जलिदानस्य तिलोदकेन तर्पणस्य च महत्त्वं प्राप्यते। रतिः माधवं कथयति यद् नौ एक एव सलिलस्य अञ्जलिर्दीयताम्—

इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ।
अविभज्य परत्र तं मया सहितः पास्यति ते स बान्धवः[7] ॥

---

१. रघु० ८।२५; २. आश्व० गृ० सू० ४।५।७; ३. रघु० १२।८७।
४. अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच। प्रजानिःश्रेयसाय च। (आप० ध० सू० ७।१)
५. रघु० ८।२६; ६. कुमारसं० ४।३८; ७. तदेव—४।३७।

रघुवंशमहाकाव्ये—'अनुपास्यसि वाष्पदूषितं परलोकोपनतं जलाञ्जलिम्'[1] इति जलाञ्जलिदानस्य वर्णनमस्ति। अभिज्ञानशाकुन्तले राजा कथयति यद् नः कुले श्रुतिसम्भृतानि निवपनानि कः करिष्यति—

**अस्मात् परं बत यथाश्रुति संभृतानि को नः कुले निवपनानि करिष्यतीति।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति[2]॥**

विदुषा अजेन गुणविशेषां भामिनीमिन्दुमतीमुद्दिश्य दश दिनात् परे महर्द्धयः क्रिया नगरस्योपवने एव अनुष्ठिताः—

**अथ तेन दशाहतः परे गुणशेषामपदिश्य भामिनीम्।**
**विदुषा निधयो महर्द्धयः पुर एवोपवने समापिता[3]॥**

एवमेव रघुवंशमहाकाव्यस्य (८।८६), कुमारसम्भवमहाकाव्यस्य (७।३७), एवमभिज्ञानशाकुन्तलनाटकस्य (६।२५) श्लोकेष्वपि श्राद्धो वर्णितः।

निष्कर्षतः कथनमिदं सर्वथा सत्यं प्रतीयते यत् कालिदाससमये गृह्यसूत्रधर्मसूत्रस्मृत्यादिभिरनुमोदिताः संस्काराः प्रचलिता आसन्। वैदिकपद्धत्या एव सर्वे संस्काराः सम्पाद्यन्ते स्म। परं सर्वे संस्काराः स्त्रीणां कृते विहिताः। नामकरणान्नप्राशनचौलोद्वाहप्रभृतिसंस्काराः स्त्रीशूद्रादीनां कृतेऽपि प्रशस्याः, परम् उपनयनवेदारम्भादिसंस्कारास्तेषां कृते सामान्येन नैव विहिताः। वैदिककाले तु ब्रह्मवादिन्यः स्त्रिय उपनयनसंस्कारयुक्ता वेदाध्ययने निरता आसन्। कुमारसम्भवमहाकाव्ये पार्वती तपोनिरता दृश्यते, मौञ्जीं बध्नाति, अध्ययनेऽपि प्रशंसार्हा दृश्यते—

**कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम्।**
**दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते[4]॥**

कल्पसूत्रानुसारं स्त्रीशूद्रादीनां संस्कारेषु लौकिकमन्त्राणां पुराणोक्तानां मन्त्राणां वा प्रयोगः कर्त्तव्यः, न तु वैदिकमन्त्राणाम्। स्त्रीविवाहकाले तु वैदिकमन्त्राणां प्रयोगो विहितः। कुमारसम्भवमहाकाव्ये प्राप्यते यत् पार्वत्या विवाहो वैदिकपद्धत्या एव सम्पन्नः[5]। कालिदासकाले स्त्रीणां श्राद्धसंस्कारोऽपि यथाविहितपद्धत्या सम्पाद्यते स्म। स्वयं विदुषा अजेन इन्दुमत्याः श्राद्धसंस्कारो यथाविहितपद्धत्या[6] कृतः, तथा राज्ञा रामेण मातॄणां श्राद्धसंस्कारः वैदिकविधिना एव सम्पादितः[7]। अतो भारतीयसंस्कृतेराधारभूताः संस्काराः कालिदासस्य काव्येषु सम्यक्तया वर्णिताः सन्तीति दिक्।

● ● ●

---

१. रघु० ८।६८; २. अभिज्ञा० ६।२५; ३. रघु० ८।७३।
४. कुमारसं० ५।१६; ५. कुमा० ७।७०-८७।
६. रघु० ७।८, ७१, ८।७३; ७. रघु० १५।९१।

# काव्यदोषाणां नित्यानित्यत्वमीमांसा

डॉ० जगन्नारायणपाण्डेयः

प्राध्यापकः,

जयपुरकेन्द्रीयसंस्कृतविद्यापीठस्य

❀ ❀ ❀

संस्कृतकाव्यशास्त्रे दोषविवेचनप्रसङ्गे दोषाणां नित्यानित्यत्वविचारणा किमपि विशिष्टं स्थानमाबिभर्तीति सुविदितमेव प्रेक्षावताम्। दोषाणामनित्यत्वसम्बन्धे तस्मादेव कालाद् विवेचनमारब्धं तज्ज्ञैर्यदा काव्यदोषाणां सामान्यवाग्दोषेभ्यः पार्थक्यं स्फुटं नावर्तत। तथा हि अर्थशास्त्रे विशिष्टार्थप्रतिपादनाभावे पुनरुक्तिं दोषाय प्रतिपादयता कौटिल्येन सङ्केतितं यद् वैशिष्ट्यप्रतिपादिका पुनरुक्तिरदोषाय सम्पद्यते[1]। विष्णुधर्मोत्तरपुराणेऽपि विस्मयासूयाद्यवस्थासु पुनरुक्तेरदोषत्वमुपवर्णितं दृश्यते[2]।

अग्निपुराणकारः प्रत्यपादयद् यद् विरुद्धासिद्धप्रभृतयो न्यायदोषाश्चेत् काव्ये वर्णिताः स्युः, तदा तेषां दोषत्वं हीयते[3]। दुष्करस्थलेषु एकादशनिरर्थत्वमपि दोषाय[4] न भवति। दुष्करस्थले गूढार्थता लोकशास्त्रे प्रथिता ग्राम्यता चादोषाय भवतः। कारकस्याक्षेपे भ्रष्टकारकत्वं दुर्वचने, विसन्धित्वम् अनुप्रासे, व्यस्तसम्बन्धत्वम् अर्थसङ्ग्रहणे च व्युत्क्रमत्वं दोषत्वेन न परिगण्यते[5]। उपमानोपमेययोर्भिन्नलिङ्गत्वे संख्यालिङ्गविभक्तिजन्या दोषा अदोषावहा भवन्ति।

---

१. कौटिलीयार्थशास्त्रम्—पृ० सं० १५४।

२. विस्मये वाऽभ्यसूयायां भयशोकत्वरासु च।
   हर्षे च वीप्सा कर्त्तव्या पुनरुक्तं न तद्विदुः॥ (वि० ध० पु० ३।५।११)

३. अग्निपुराणम्—३४७।२२–२३।

४. एकादशनिरर्थत्वं दुष्करादौ न दुष्यति। (अ० पु० ३४७।२४)

५. भ्रष्टकारकताक्षेपबलाध्याहृतकारके।
   प्रगृह्यते गृह्यते नैव क्षतं विगतसन्धिना।
   कष्टपाठाद्विसन्धित्वं दुर्वचादौ न दुर्भगम्॥
   अनुप्रासे पदावृत्तिर्व्यस्तसम्बन्धिता शुभा।
   नार्थसङ्ग्रहणे दोषो व्युत्क्रमाद्यैर्न लिप्यते॥ (अ० पु० ३४७।२६,२७,२८)

यद्यपि भरतमुनिना दोषाणामनित्यत्वसन्दर्भे सुस्पष्टं किमपि न प्रतिपादितम्, तथापि ह्यद्येनैकेन पद्येनैतद्रहस्यं तु प्रकाशितमेव यत्—ये[1] चेक्रीडितप्रभृतयः श्रुतिकटुशब्दा रौद्रादौ गुणावहास्त एव सुकुमारतरे शृङ्गारे तत्प्रतिकूलतया दोषावहा भवन्तीति। अतः शृङ्गारादौ तेषां प्रयोगो नैव कार्यः। यद्यपि श्रुतिकटुनाम्ना कश्चिदपि दोषो मुनिना नोक्तः; परं तेन शब्दच्युतदोषस्य यल्लक्षणमुक्तम्—अशब्दस्य[2] योजनमिति; तत्र अशब्देत्यत्र नञ्समासोऽप्राशस्त्येऽर्थे वा विरोधेऽर्थेऽपि स्वीकार्यः। तेन व्याकरणविरुद्धस्य वर्णनीयरसविरुद्धस्य च शब्दस्य प्रयोगे शब्दच्युतनामा दोषः प्रावर्तत—इत्येवं मुनेः मनोभावमुरीकृत्य वक्तुं शक्यते यत्तेन चेक्रीडितप्रभृतीति पद्ये शब्दच्युतस्यैवानित्यत्वं सङ्केतितम्।

नाट्यशास्त्रीयदोषाणां नित्यानित्यत्वविचारः श्रीमदभिनवगुप्तेन निजाभिनवभारत्यां किञ्चिद् विस्तरेण विहितः। तन्मतेऽपशब्दो नित्यदोषः, यतोऽपशब्दात् कश्चिदप्यर्थो न प्रतीयते। गूढार्थं[3] गूढलेखप्रहेलिकापताकास्थानकादिषु, अनुवादेऽर्थान्तरम्, हास्यवर्णनेऽर्थहीनादिकम्, उन्मादादौ चाभिप्लुतार्थं गुणावहं भवतीति श्रीमदभिनवगुप्तस्य घोषणा। तेनेदमपि प्रतिपादितं यद् हास्यादौ[4] ग्राम्यं न हि केवलमिष्टम्; अपि त्विष्टतमं भवति। अनेन ज्ञायते यदभिनवगुप्तमते क्वचित् क्वचित् केचिद् दोषा न केवलमदोषाय; प्रत्युत गुणायापि सम्पद्यन्ते।

आचार्यभामहेन काव्यालङ्कारे चतुर्षु स्थलेषु दोषाणामनित्यत्वमुपपादितम्—श्रुतिकटुदोषविवेचनान्ते, अयुक्तिमद्दोषप्रसङ्गे, पुनरुक्तदोषप्रसङ्गे, उपमादोषनिरूपणावसरे च। तत्र प्रथमस्थले पूर्वं साधारणतया दोषाणामनित्यता प्रतिपादिता, ततो विशेषेण श्रुतिदुष्टस्यानित्यत्वमुक्तम्। कान्तानयनलग्नमञ्जनमिवाश्रयसौन्दर्येणासाधुदोषो[5] गुणायते। सन्निवेशवैशिष्ट्याद् दुरुक्तमपि[6] मालामध्यनिबद्धदलमिव शोभते।

---

१. चेक्रीडितप्रभृतिभिर्विकृतैश्च शब्दै-
 र्युक्ता न भान्ति ललिता भरतप्रयोगाः।
 यज्ञक्रियेव रुरुचर्मधरैर्घृताक्तै-
 र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः॥ (ना० शा० १६।१२७)

२. नाट्यशास्त्रम्—१६।९४।

३. यथा च गूढार्थं गूढप्रहेलिकादिपताकास्थानकादिषु प्रयोज्यम्, अर्थान्तरमनुवादे, अर्थहीनादि हास्ये, अभिप्लुतार्थमुन्मादादौ। (नाट्यशास्त्रस्याभिनवभारती—पृ० ३३३)

४. 'ग्राम्यं हास्यादौ तस्येष्टतमत्वात्' (अभिनवभा० पृ० ३३३)।

५. भामहस्य काव्यालङ्कारः—१।५५। ६. तदेव—१।५४।

सोत्कण्ठमुन्मत्तप्रलापेऽप्युक्तिमद्दोषोऽदोषाय[1] कल्पते। भयशोकविस्मयादौ भामहोऽपि विष्णुधर्मोत्तरपुराणवत्[2] पुनरुक्तेरदोषत्वमुक्तवान्। लिङ्गभेदाख्योपमादोषं स्त्रीलिङ्ग-पुल्लिङ्गशब्दसादृश्य एव प्रतिपाद्य तद्भिन्नलिङ्गशब्दयोरदोषत्वमपि तेन कटाक्षितमेव।

दोषाणामनित्यत्वप्रतिपादने भामहापेक्षया दण्डिना किञ्चिद् विस्तृतिः समादृता, यतस्तन्मते अनित्यदोषाणां सङ्ख्याऽधिकतरा। प्रायः सर्वे गुणविपर्ययात्मका दोषा दण्डिमते मार्गविशेष एव दोषत्वमुपयान्ति। तथा हि श्लेषप्रसादसमतासौकुमार्य-कान्तीनां विपर्ययाणामव्युत्पन्नवैषम्यदीप्तत्वात्युक्तीनां वैदर्भमार्ग एव दोषत्वमङ्गीकृतम्, न तु गौडमार्गेऽपि। दण्डिना भगिनी[3]भगवतीत्यादिपदानां प्रयोगे ग्राम्यत्वस्याभावं प्रतिपाद्य तस्यानित्यत्वमुपपादितम्। निष्ठ्यूतादिशब्दानामग्राम्यता[4] गौणवृत्त्या लक्ष्यार्थसूचने तेन स्वीकृतैव। दण्डी त्वपार्थादिदोषेषु शब्दहीनभिन्नवृत्तौ विहायाव-शिष्टानां समेषामपि दोषाणामनित्यतां प्रतिपादितवान्। उन्मादादिभिर्निर्विवेकमनसां कथनेऽपार्थत्वम्, वियोगाद्यभिभूतस्य कथने विरुद्धार्थत्वम्, अनुकम्पाद्यतिशये चैकार्थत्वं गुणाय सम्पद्यते[5]। संशयजनकमपि वाक्यं संशयप्रतिपादनार्थमेव प्रयुक्तं सद् गुणा-वहं भवति[6]।

प्रगृह्यादिसंज्ञास्थले विसन्धिर्न हि दोषाय[7]। यथा पदान्ते लुप्तेऽवशिष्टस्य पदत्वं निश्चितम्, तथैव सन्धिविकारावशिष्टस्यापि पदत्वात् तत्र यतिभ्रंशदोषस्या-वसरो नायाति[8]। कविकौशलाद् देशकालकलालोकागमविरुद्धा दोषा अपि गुणायन्ते[9]। उपमादोषविवेचनसन्दर्भे दण्डिना सतामुद्वेगाभावे उपमा[10]लङ्कारदोषाणामपि नित्य-त्वाभावः सङ्केतितः।

आचार्यवामनेनाश्लीलयतिभ्रष्टैकार्थदोषाणां लिङ्गभेदाख्योपमादोषस्य चानि-त्यता प्रदर्शिता। गुप्त[11]लक्षितसंवृतावस्थायामश्लीलत्वमदोषाय भवति। प्रकृतिप्रत्यययो-र्यतिना विभागो सन्ध्यनन्तरं विभागो वा दोषं न जनयति। अतस्तत्र यतिभ्रष्टत्वं न

---

१. काव्य–१।४४। २. तुलनीयं तदेव–१।१४, (वि० ध० पु० ३।१५।११)

३. काव्यादर्शः–१।६८; ४. तदेव–३।१९५; ५. तदेव–३।१३०, १३३।

६. अनुकम्पाद्यतिशयो यदि कश्चिद् विवक्ष्यते।
न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया॥ (काव्यादर्शः—३।१३७)

७. तदेव—३।१५९।

८. काव्यादर्शः—३।१५४।

९. विरोधः सकलोऽप्येष कदाचिद् कविकौशलात्।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते॥ (काव्यादर्शः—३।१७९)

१०. काव्यादर्शः—२।५१; ११. काव्यालङ्कारसूत्रम्—२।१।१५।

दोषावहम्[1]। एकार्थस्य सूक्ष्मदृष्ट्याऽदोषत्वं विचारयता तेनोक्तं यद् मुक्ताहार इत्यत्र मुक्तापदेन नैर्मल्यप्रतिपादनाद् धनुर्ज्याध्वनिरित्यत्र ज्यापदेन तदारूढेः प्रतिपत्तेः कर्णावतंस इत्यत्र कर्णपदेन सान्निध्यसूचनात्, करिकलभ इत्यत्र करिपदेन तादूरूप्य-बोधनात्, पुष्पमालेत्यत्र च पुष्पेण तदुत्कर्षसूचनात्, मुक्ताज्यादिपदानि निर्दुष्टानि सन्ति। अस्मादेकार्थदोषोऽनित्यः। उपमायां[3] लिङ्गभेदे पुन्नपुंसकलिङ्गभेदमयं दोषाय न मन्यते।

आचार्यरुद्रटेन निरगादि यदनुकरणेऽसमर्थादिदोषा अदोषतां भजन्ते। किञ्चा-भिनयेन प्रकरणेन शब्दान्तरेण वाऽर्थनिर्णये सत्यसमर्थत्वम्[4] अदोषाय सम्पद्यते। अर्थविशेषाद् विभक्तिविशेषाद् वा सभ्यासभ्यार्थवाचकं पदं ग्राम्यत्वं जहाति[5]। पुनरुक्त-स्यानित्यतां[6] तु रुद्रटो विस्तरेण प्रत्यपादयत्। इत्थं रुद्रटेनैव सर्वप्रथमं स्फुटतयाऽनु-करणे समेषामपि दोषाणामनित्यता प्रदर्शिता। तेन वक्तृविषयभावप्रयोजनौचित्याद् दोषाणामनित्यत्वमुपपाद्य प्रशस्यतरं कार्यमकारि।

आनन्दवर्धनाचार्येण यथा रसध्वनिदृशा दोषाणां दोषत्वमुपपादितं तेन, तथैव श्रुतिदुष्टप्रभृतिदोषाणामनित्यत्वमपि प्रदर्शितम्[7]। सर्वप्रथममानन्दवर्धन एव स्फुटतया रसदोषाणामनित्यतां प्रतिपादितवान्। परस्परविरोधिरसानां विरोधमपा-कर्तुं तेनोक्तं यद् लब्धपरिपोषे विवक्षितरसे[8] बाध्यानामङ्गभावं प्राप्तानां वा विरोधि-रसानामुक्तिरदोषाय सम्पद्यते। अनुवादावस्थायां द्वयोर्विरोधिरसयोः समावेशे न दोषस्यावसरः[9] समायाति। ययो रसयोर्मिथो बाध्यबाधकभावस्तत्राङ्गिनि रसान्तरे प्रबन्धव्यङ्ग्ये सति विरोधी अविरोधी वा रसः परिपोषं न नेयः[10]। अनेनोभयोरदोषत्वं सिद्ध्यति। तेन निरगादि यद् विरोधी द्विविधः—ऐकाधिकरण्यविरोधी, नैरन्तर्य-विरोधी चेति। तत्र प्रबन्धस्थेन स्थायिनाऽङ्गिरसेनौचित्यापेक्षया यो विरुद्धैकाश्रयो विरोधी रसः, तस्य भिन्नाश्रयत्वेन वर्णने दोषो न भवति। यश्च एकाश्रयत्वे निर्दोषोऽपि नैरन्तर्ये विरोधी रसः, प्रबन्धे तस्य रसान्तरव्यवधानेन निवेशने दोषस्य प्रसङ्गो नायाति[11]।

---

१. का० अ० सू० २।२।७—द्रष्टव्यम्; २. का० अ० सू० २।२।१५, १६, १७, १८।

३. 'इष्टः पुन्नपुंसकयोः प्रायेण' (का० अ० सू० ४।२।१३)।

४. रु० अ० ६।८। ५. तदेव—६।२३। ६. तदेव—६।२९, ३२, ३४, ३६।

७. ध्वन्यालोकः—२।११; ८. तदेव—३।२०।

९. एहि गच्छ'''इत्यादौ। अत्र हि विधिप्रतिषेधयोरनूद्यमानत्वेन समावेशे न विरोधः, तथेहापि भविष्यति। (ध्वन्यालोकः—पृ० २०६, काव्यमाला-सीरिज)

१०. तदेव—३।२४; ११. ध्वन्यालोकः—३।२५-२६।

आनन्दवर्धनेनेदमपि विवेचितं यद् विनेयान् सुकुमारमतीन् उन्मुखीकर्तुं वा काव्यशोभार्थं शृङ्गारविरोधिशान्तादौ शृङ्गारस्याङ्गानां संस्पर्शोऽपि दोषाय[1] न भवति ।

**भोजराजेन** कृतं काव्यदोषाणामनित्यत्वविवेचनमाकारेणालङ्कारशास्त्रे विपुलतरम् । शृङ्गारप्रकाशे तेनानौचित्यपरिहारेण दोषपरिहारो वर्णितः[2] । भोजेन सर्वेषामपि दोषाणामनित्यत्वं प्रतिपादितमिति तस्य वैशिष्ट्यम्[3] । तेन दोषाणामनित्यत्वेनादोषतामात्रं नोरीकृतम्; अपि तु गुणत्वमपि । तेन शब्दार्थगुणेभ्यः पृथग् वैशेषिका[4] गुणा अपि स्वीकृताः । वस्तुतो ये दोषाः कदाचिद् गुणायन्ते, त एव भोजराजस्य वैशेषिका गुणाः सन्ति, न तु न्यायवैशेषिकसम्मता[5] गुणाः । काव्यगता इमे गुणा भोजेन कामिनीगुणदृष्टान्तेन स्फुटीकृताः[6] । अतो दोषा एतन्मते स्थितिविशेषाद् गुणायन्ते ।

भोजराजोऽनुकरणेऽसाध्वप्रयुक्तयोः, दुर्वचने कष्टस्य, यमकालङ्कारेऽनर्थकस्य प्रहेलिकायामन्यार्थकनेयार्थदोषयोः, छन्दोऽनुरोधाद् अपुष्टार्थस्य, विद्वत्सम्भाषणेऽप्रतीतस्य, महाकविनिबद्धतायां देश्यस्य च गुणत्वं प्रत्यपादयत् । ग्राम्यत्वस्य गुणत्वमनेन वामनोक्तमश्लीलत्वस्यादोषत्ववदेवोपपादितम्, झटित्यर्थप्रतीतौ क्लिष्टत्वमप्रसिद्धार्थसम्बन्धव्याख्याने गूढार्थत्वम्, प्रकरणेनार्थनिश्चये सन्दिग्धत्वम्, विरोधिवर्णनविवक्षायां विरुद्धत्वम्, स्वरूपमात्रप्रतिपादनेऽप्रयोजकत्वम्, सीत्कृतादौ चासमर्थत्वमेतन्मते गुणावहम्[7] ।

भोजराजो वाक्यदोषाणां गुणत्वं प्रतिपादयन् कथितवान् यद् विवक्षावशाच्छब्दहीनम्, विरूपसन्धौ प्रगृह्यादौ च विसन्धि, अनुकम्पाद्यतिशये पुनरुक्तिमद् अनेकवक्तृप्रश्नोत्तरादौ सङ्कीर्णम्, रसान्तरतिरस्कारे च वाक्यगर्भितं वाक्यं गुणाय सम्पद्यते[8] । तेन भिन्नलिङ्गभिन्नवचनयोर्विदुषामनुद्वेगे, प्रसिद्धौ हीनोपमायाः, झटित्युपमेयविशेषानुसन्धानेऽधिकोपमायाः, तीव्रप्रयत्नेन संयोगादेरगुरुत्वे छन्दोभङ्गस्य चादोषता प्रतिपादिता[9] । स्वरसन्धिकृतत्वाद् अविभिन्नानामधातुशरीरत्वाच्च

---

१. विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ ( ध्वन्यालोकः—३।३० )

२. 'तत्र दोषहानमनौचित्यादिपरिहारेण' ( शृ० प्र० २।११ पृ० ४१० ) ।

३. द्रष्टव्यम्—सरस्वतीकण्ठाभरणम्—पृ० ८६-१३९ ।

४. शृङ्गारप्रकाशः—द्वितीयभागः, पृ० ४९;

५. द्रष्टव्यः—तर्कसंग्रहः ।

६. सरस्वतीकण्ठाभरणम्—१।१०६;

७. तदेव—१।९१-१०५ ।

८. तदेव—१।१११, ११४, ११५, ११७, ११९;

९. तदेव—१।१२०-१२३ ।

यतिभ्रंशेऽपि भग्नयतित्वम्, क्रियापेक्षाया अभावेऽशरीरत्वम्[1], भाषावैचित्र्ये चापदत्वमदोषाय[2] भवति। शैथिल्यदोषेऽपि बन्धप्राशस्त्येन गौडैरादृतत्वाद् अरीतिमत्त्वं गुणाय[3] भवति।

वाक्यार्थदोषेषून्मत्तवचनेऽपार्थत्वम्, रसाक्षिप्तचेतसां कथने एकार्थत्वम्, सन्दिग्धवर्णने सन्दिग्धत्वम्, चित्रहेतावपक्रमत्वम्, छायाहीनत्वाभावे खिन्नत्वम्, वार्तादावतिमात्रत्वम्, विरुद्धलक्षणाद्युक्तिषु परुषत्वं चादोषाय सम्पद्यते। अप्राधान्येन रसवस्तुनोर्ग्रहणं विरसो रागातिशये हीनोपमः, शिष्टादृतत्वेऽधिकोपमः, व्यतिरेकेऽपदृशोपमः, अर्थौर्जित्येषु निरलङ्कारः, कविकौशलाद् विरोधश्च गुणत्वमाप्नोति[4]। व्यर्थाश्लीलाप्रसिद्धोपमानां कुत्र गुणत्वं भवतीति विशेषेण नोक्त्वा भोजेन एतावदेव सङ्केतितं यत् क्वचित् क्वचिदेषामपि गुणत्वं जायते[5] इति।

इत्थं दोषाणां गुणत्वोपपादने भोजराजेन महान् यत्नो विहितः। तेन केषाञ्चिदेव दोषाणां गुणत्वं धीमतामनुद्वेगावस्थायां स्वीकृतम्; परं वस्तुत एष राद्धान्तोऽन्यदोषेष्वपि वक्तुं शक्यते, अस्मान्नात्र वैशिष्ट्यम्।

किञ्चानुद्वेगे धीमतां दोषस्यादोषत्वं सिद्ध्यति, न तु गुणत्वम्। परमेतावताऽप्यौचित्यमाश्रित्य दोषाणां गुणत्वमुदीर्य विरसदोषस्य गुणत्वे च रसौचित्यं सविशेषं स्वीकृत्य भोजराज आलङ्कारिकेषु परमां प्रतिष्ठामवापेत्यत्र न कश्चन सन्देहः।

**आचार्यमम्मटेन** त्वनुकरणे सर्वेऽपि दोषा अनित्यत्वेन[6] प्रतिपादिताः। तेन केषाञ्चिद् दोषाणां परिस्थितिविशेषाद् अदोषता वर्णिता। अपुष्टार्थस्यादोषता प्रायेण वामनोक्तस्यैकार्थस्यादोषतैव प्रतीयते। वामन इव मम्मटोऽपि सन्निधानाद्यर्थबोधे कर्णावतंसादिपदानामदोषत्वं प्रतिपादितवान्। तत्र मम्मटेनेदमपि स्फुटीकृतं यच्चमत्कारजनकतया स्थितेषु महाकविप्रयुक्तेष्वेव पदेष्वेतत्समर्थनम्;[7] न तु स्वेच्छया जघनकाञ्च्यादिपदप्रयोगेऽपि। प्रसिद्धेऽर्थे निर्हेतुरदोषाय सम्पद्यते[8]।

वक्त्राद्यौचित्यवशात् कदाचिद् दोषस्यादोषत्वं तु भवत्येव, क्वचिद् गुणत्वमपि[9] सम्भवति। यथा वैयाकरणे वक्तरि रौद्रादिरसे कष्टत्वं गुणाय कल्पते। श्लेषयमकादावप्रयुक्तनिहतार्थावदोषत्वं भजेते[10]। सुरतारम्भगोष्ठ्यां व्रीडाव्यञ्जकम्, शम-

---

१. सरस्वतीकण्ठाभरणम्—१।१२४-१२५।

२. तदेव—१।११८; ३. तदेव—१।१२६।

४. तदेव—१।१३६, १३८-१५६; ५. तदेव—१।१३७, १५०, १५२।

६. काव्यप्रकाशः—७।८०; ७. तदेव—७।७८; ८. तदेव—७।७९।

९. 'वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ' (का० प्र० ७।८१)।

१०. काव्यप्रकाशः—सप्तम उल्लासे, पृ० ३७३।

कथासु जुगुप्साव्यञ्जकम्, भाविसूचनासु चामङ्गलव्यञ्जकमश्लीलत्वं गुणावहम्। क्वचिद् वाच्यमहिम्ना नियतार्थप्रतीतिकारित्वेन व्याजस्तुतिपर्यवसायित्वे सन्दिग्धदोषो गुणायते[1]। प्रतिपाद्यप्रतिपादकयोस्तच्छास्त्रपटुत्वे सत्यप्रतीतत्वम्, अधमप्रकृत्युक्तिषु च ग्राम्यत्वं[2] गुणः। स्थितिविशेषे न्यूनतायामभिमतायां न्यूनपदत्वम्, हर्षभयादियुक्ते वक्तर्यधिकपदत्वम्, लाटानुप्रासेऽर्थान्तरसङ्क्रमितवाच्यध्वनौ विहितस्यानुवाद्यत्वे च कथितपदत्वं गुणाधायकं[3] भवति।

यत्र विशेषणमात्रदानार्थं न पुनर्ग्रहणम्; अपि तु वाक्यान्तरमेव क्रियते, तत्र समाप्तपुनरात्तत्वम्, न तु दोषाय, न वा गुणायैव[4] भवति। मम्मटेन पतत्प्रकर्षपदस्थ-समासगर्भितानामपि[5] क्वचित् क्वचिद् गुणत्वमुपपादितम्।

आलङ्कारिकोद्भटो मम्मटो नैकदोषाणामदोषत्वं गुणत्वं चोपपाद्य पुनरुक्तवान् यद् एवमेवान्यत्राप्यवशिष्टेष्वपि दोषेष्वदोषत्वविषये विचारः कर्तुं शक्यते। एवं तन्मते प्रायः सर्वे दोषा अवस्थाविशेषे अनित्याः सन्तो दोषत्वं त्यक्तुमर्हाः[6]।

मम्मटाचार्योऽप्यानन्दवर्धनाचार्य इव रसदोषाणामदोषत्वं प्रतिपादितवान्। तथा हि प्रकृतरसविरोधिरसस्य सञ्चारिभावादीनां बाध्यतया वर्णनं दोषाय न[7] भवति। अयमप्यानन्दवर्धन इवाश्रयैक्ये विरुद्धं रसं भिन्नाश्रयं कृत्वा नैरन्तर्ये च विरुद्धं रसं रसान्तरेण व्यवहितं विधाय रसविरोधम[8]पाकरोत्। एष रसविरोधपरिहारो न केवलं प्रबन्ध एव; प्रत्युतैकस्मिन् वाक्येऽपि सम्भवतीति[9] सविशेषं मम्मटोऽप्यानन्द-वर्धनाभिमतमेव मतमङ्गीकृतवान्। अयमपि ध्वनिकार इव सुस्पष्टमुक्तवान् यद् विव-क्षितरसेन सह तद्विरुद्धः कश्चिद् रसः स्मर्यमाणो भवेत्, अथवा साम्येन वर्णितो भवेत्, अथवाऽङ्गत्वेन स्थितः स्यात्, तदा तयोर्मिथो विरुद्धयोरपि रसयोर्विरुद्धता निवर्तते[10]।

आचार्यचन्द्रेण हेमचन्द्रेण कृतं काव्यदोषाणामनित्यत्वविवेचनं प्रायस्तत्पूर्व-वर्त्याचार्यैः प्रतिपादितानामेतत्सम्बन्धिमतानां सङ्ग्रहमात्रम्[11]। केवलं दोषचतुष्टयस्या-नित्यत्वमनेन स्वसूक्ष्मधिया किञ्चिन्नूतनरीत्या निरूपितम्। तेन निगदितं यद् वक्त्राद्यौ-चित्ये भग्नप्रक्रमस्यादोषत्वं[12] विदूषकोक्तौ चाप्रयुक्तस्य गुणत्वं[13] भवति। आकाङ्क्षाया

---

१. काव्यप्रकाशः—सप्तम उल्लासे, पृ० ३७५।

२. तदेव—पृ० ३७७; ३. तदेव—पृ० ३७८-७९।

४. तदेव—पृ० ३८०; ५. तदेव—पृ० ३८०-८१।

६. 'एवमन्यदपि लक्ष्याल्लक्ष्यम्' (का० प्र० ७ उ० पृ० ३८१)।

७. काव्यप्रकाशः—७।६३; ८. तदेव—७।६४।

९. काव्यप्रकाशः—सप्तम उल्लासे, पृ० ३९८। १०. तदेव—७।६५।

११. काव्यानुशासनम्—पृ० १५९–१६१। १२. तदेव—पृ० २२२। १३. तदेव—पृ० २२७।

अभावे साकाङ्क्षस्य दोषत्वं खण्डितं[1] भवति। हेमचन्द्रः क्वचित् क्वचिद् अतिशयोक्तावक्रमत्वस्य गुणत्वमुरीकृतवान्।

सम्मानितमहादेवेनाचार्यजयदेवेन दोषाङ्कुशरूपेण दोषाणामनित्यत्वमुपवर्णितम्। यो मनसि समापतितं प्रसरन्तं विशृङ्खलं त्रिधा निवारयति, स दोषाङ्कुशपदेन[2] व्यवह्रियते। स च कदाचिद् दोषे गुणत्वं तनुते, क्वचिद् दोषत्वं निरस्यति, अथवा दोषत्वमत्याज्यतां[3] नयति। दोषाङ्कुशस्य इम एव त्रयः प्रकाराः सन्ति। तत्र विद्याविरुद्धः कविसमयाद्[4] अदोषत्वं भजति। निरर्थकः श्लेषाद्यलङ्कारेषु सादरं[5] गृह्यते, ग्राम्यत्वं हास्यरसे प्रशस्यते[6]। दोषानित्यतायास्त्रयोऽपि प्रकारा इमे मम्मटहेमचन्द्राभ्यामपि स्वीकृता विद्यन्ते। अस्मादत्र वस्तुतो जयदेवस्य मौलिकी नूतनकल्पना न प्रतीयते। एतद्दोषत्रयातिरिक्तमन्यदोषाणामनित्यत्वं जयदेवेन न हि प्रदर्शितमिति चन्द्रालोकविलोकनेन ज्ञायते।

आचार्यविश्वनाथेन अधिकांशतो रुद्रटभोजराजमम्मटजयदेवैरुक्ता सरणिरेव दोषाणामनित्यत्वप्रतिपादने स्वीकृता। तेनापि दोषाणामनित्यत्वं गुणरूपतयाऽदोषतयाऽदोषगुणतया चेति प्रकारत्रयेण[7] प्रदर्शितम्। वर्गत्रये दोषानित्यत्वोपपादने विश्वनाथो मुख्यतया मम्मटस्याधमर्णः। कुपिते वक्तरि समुद्धते वाच्ये वा रौद्रादिरसे दुःश्रवत्वं[8] गुणाय सम्पद्यते। तेन प्रतिपादितं यद् वैयाकरणमुख्ये वक्तरि प्रतिपाद्ये कष्टत्वं दुःश्रवत्वं वा गुणावहं[9] भवति। एतन्मतेऽपि सुरतारम्भगोष्ठ्यादावश्लीलत्वस्य श्लेषादौ निहतार्थप्रयुक्तत्वयोः, वक्तृवाच्ययोर्ज्ञत्वे वा स्वयं परामर्शेऽप्रतीतत्वस्य, विहितानुवाद्यत्वे विषादे विस्मये क्रोधे दैन्ये लाटानुप्रासेऽनुकम्पायां प्रसादने, अर्थान्तरसङ्क्रमितवाच्यध्वनौ प्रमोदेऽवधारणे च कथितपदत्वस्य गुणत्वं सिद्ध्यति[10]। व्याजस्तुतिपर्यवसायित्वे सन्दिग्धत्वम्, अधमोक्तिषु ग्राम्यत्वम्, प्रसिद्धकविसमये निर्हेतुत्वम्, आनन्दमग्नादेरुक्तौ न्यूनपदत्वं च गुणाय[11] सम्पद्यते। क्वचिद् रसानपकर्षकत्वपुरस्सररसानुत्कर्षकत्वस्थले न्यूनपदत्वम्, समाप्तपुनरात्तत्वं च न तु दोषाय

---

१. काव्यानुशासनम्–पृ० २६३।

२. दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम्।
निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम्॥ (चन्द्रालोकः–२।४०)

३. चन्द्रालोकः–२।४१।

४. तदेव–२।४३।

५. तदेव–२।४४।

६. तदेव–२।४५।

७. 'अदोषता च गुणता ज्ञेया चानुभयात्मता' (सा० द०, पृ० २७३)

८. सा० द० ७।१६।

९. तदेव–७ परि० पृ०–२५५।

१०. साहित्यदर्पणः—७।१८,१९;

११. तदेव—७।२०,२१,२७।

न वा गुणायैव भवतः। एवमेव क्वचिद् अधिकपदत्वम्, गर्भितत्वं तथा पतत्प्रकर्षत्वमपि गुणावहं[1] भवति।

रसदोषाणामनित्यत्वप्रतिपादने विश्वनाथो मम्मटाचार्यमेव मुख्यतया अन्वगच्छत्। दोषाणामनित्यत्वप्रदर्शने विश्वनाथस्य नवीना कल्पना न हि लोचनमार्गमधिरोहति।

काव्यप्रकाशस्य प्रसिद्धटीकाकारेण गोविन्दठक्कुरेण निरगादि यद् येषां दोषाणां समाधानम् अनुकरणभिन्नेन प्रकारेण कर्तुमशक्यं स्यात्, ते नित्या[2] दोषा भवन्ति, तद्भिन्नाश्चानित्या इति। केशवमिश्रेण भोजोक्तदिशैव दोषगुणत्वेन वैशेषिकगुणा प्रतिपादिताः; किन्तु वैशेषिकगुणत्वेन तेन दोषाणामदोषत्वमेव निरूपितमिति तस्य वैशिष्ट्यम्[3]। तन्मते रसोत्पत्तिप्रतिबन्धकत्वमेव दोषत्वमूलम्[4]। अतस्तदभावे दोषत्वमपि न सिद्ध्यति। अयमाचार्योऽपि दोषानित्यत्वविवेचने रुद्रटभोजमम्मटानामधमर्णः। केवलं तेन अवाचकविसन्धिव्याकीर्णयतिभङ्गदोषाणामदोषत्वविवेचने किञ्चिन्नवीनता प्रदर्शिता।

पण्डितराजजगन्नाथस्य रसगङ्गाधरेऽपि रसविरोधस्य परिहारोपाया निरूपिता दृष्टिपथमवतरन्ति। तेन रचनाया विशिष्टदोषा रसदोषाश्च यथाऽऽनन्दवर्धनमम्मटाचार्ययोः सरणिमाश्रित्य वर्णिताः, तथैव तेषामदोषत्वं गुणत्वं च प्रतिपादितमिति न हि तत्र काचिन्नूतनता[5] प्राप्यते।

गङ्गानन्दकवीन्द्रेण, अमृतानन्दयोगिना, नरसिंहकविना चापि काव्यदोषाणां नित्यानित्यत्वप्रसङ्गे प्रमुखप्राचीनाचार्यैः स्वीकृतो राद्धान्त एव परिपालित इति न तेषामत्र किञ्चिद् वैलक्षण्यमनुभूतमस्माभिः[6]।

इत्थमुपर्युक्तविवेचनेन ज्ञायते यद् आचार्यैर्या दोषाणामनित्यता प्रतिपादिता, सा लोकोत्तरवर्णनानिपुणानां कवीनां कृते काव्यनिर्माणे तन्नियमबन्धने किञ्चिच्छैथिल्यरूपा; किन्तु सुकविभिस्तस्या दुरुपयोगो नैव कार्यः। अस्मादेवालङ्कारिका विषयेऽस्मिन् सविशेषं दत्तावधानाः सुस्पष्टं निरूपयामासुः यद् दोषाः सुकविभिर्यथासम्भवं परित्याज्या एव। अत एव काव्यस्य कारणत्वेन शक्त्या सह व्युत्पत्त्य[7]भ्यासयोरपि महत्त्वं सादरमालङ्कारिकैः स्वीकृतं वरीवर्ति।

---

१. सा० द०—७।२७,२८।
२. काव्यप्रदीपः—पृ०११७।
३. अलङ्कारशेखरः, दोषप्रकरणं द्रष्टव्यम्;
४. तदेव।
५. रसगङ्गाधरस्य दोषप्रकरणं द्रष्टव्यम्।
६. काव्यडाकिन्याः पञ्चमा दृष्टिः, अलङ्कारसङ्ग्रहस्य दोषनिरूपणम्, नञ्जराजयशोभूषणस्य दोषप्रकरणं च द्रष्टव्यम्।
७. द्रष्टव्यः—काव्यप्रकाशः १।३, काव्यादर्शः—१।१०३, रुद्रटालङ्कारः—१।१४।

प्रायः सर्वैरप्यालङ्कारिकैरेवं स्वीकृतं यदनुकरणादन्येन प्रकारेण येषां दोषाणां दोषत्वं न हीयते, ते च्युतसंस्कृत्यनुचितार्थनेयार्थप्रभृतयो दोषा नित्याः सन्ति। येषां च दोषाणामनुकरणादन्येन प्रकारेणादोषत्वं गुणत्वं वा सिद्ध्यति, ते श्रुतिकटुनिहतार्थकथितपदादयो दोषा अनित्या भवन्ति। अनेन निर्णीयते यद् ये दोषाः सर्वथा हेयाः, ते नित्याः, तद्भिन्नाश्चानित्या इति। ते चानित्या दोषा आश्रयविशेषात्, पदादीनां सन्निवेशविशेषाद् भयशोकानुकम्पादिविशेषात्, प्रयोजनविशेषात्, देशकालादिवैशिष्ट्यात्, वक्तृवाच्यप्रकरणाद्यौचित्यवशाद् वा क्वचिददोषत्वं तु क्वचिद् गुणत्वं भजन्ते। एवमेव रसदोषा अपि प्रायेणाश्रयभेदाद् अङ्गाङ्गिभावेन सन्निवेशात् साम्येन वर्णनात् प्रकृत्याद्यौचित्याद् वा क्वचिद् अदोषत्वं क्वचिद् गुणत्वं वा प्राप्नुवन्ति।

नित्यानित्यत्वसिद्धान्तोऽयमौचित्यमाश्रित्य प्रवर्तते। औचित्यं च स्थितिसापेक्षतया सर्वथा न स्थिरम्। दोषाणां नित्यानित्यत्वनिर्णये कवेर्विवक्षायाः सहृदयस्यानुभवस्य च महत्तरं स्थानम्। यदि कवेर्विवक्षितार्थप्रतीतौ दोषा बाधां सहृदयानां हृदये चोद्वेगं न जनयेयुः, तदा तेषामदोषत्वं स्वीकर्तुं शक्यते, यत्र च तेभ्यः किञ्चिच्चमत्कृतिरप्युत्पद्येत, तत्र तेषां गुणत्वमपि दुर्निवारमेवेति सुधीभिराकलनीयमिति शम्।

● ● ●

लघु-ग्रन्थमाला
[ ४० ]

पुष्पदन्ताचार्यप्रणीतं

# शिवमहिम्नस्तोत्रम्

मधुसूदनसरस्वतीविरचितया
'मधुसूदनी' टीकया
अथ च
पण्डितनारायणपतित्रिपाठिप्रणीतया
'पञ्चमुखी' व्याख्यया च
संवलितम्




सम्पादकः
आचार्यश्रीकरुणापतित्रिपाठी
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
अथ च
अध्यक्षः,
उत्तर-प्रदेश-संस्कृत-अकादम्याः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वि० सं० २०४१



"कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्।
सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि" ॥

(शिवपुराणम्, ज्ञानसंहिता—६८। १८)

"यह देख धतूरके पात चबात औ गातसो धूलि लगावतु हैं,
चहुं ओर जटा अटकैं लटकैं फनि सेक फनी फहरावतु हैं।
'रसखान' जोइ चितवै चितहै तिनके दुख दुन्द भजावतु हैं,
गजखाल कपालके माल 'वसाल सो गाल बजावत आवतु हैं॥

"गुरु पितु मातु महेस भवानी,
प्रनवौं दीनबंधु दिन-दानी। (तु० रा०)"

# आभारप्रदर्शनम्

सानन्दं विज्ञाप्यते यद् अस्यां विश्वेश्वरपुर्यां विश्वेश्वराराधनरूपं 'मधुसूदनी-पञ्चमुखी' टीकोपेतं पुष्पदन्ताचार्यविरचितं 'शिवमहिम्नस्तोत्रम्' सम्पूर्णानन्द-संस्कृतविश्वविद्यालयेन प्रकाश्यत इति महत्प्रमोदास्पदम्। ग्रन्थमिमं लघुग्रन्थमालायां प्रकाशयितुं सोल्लासं सोत्साहञ्च स्वीकृतिं प्रदाय विश्वविद्यालयस्यास्य कुलपतिचरैः विविधविद्याविद्योतितान्तःकरणैः डॉ० गौरीनाथशास्त्रिवर्यैर्या प्रेरणा प्रादायि, तदर्थं कृतिनस्ते भूयो भूयः साधुवादैः संयोज्यन्ते।

एवमेव सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदं समलङ्कुर्वद्भ्यः संस्कृतसेवासंसक्तमानसेभ्यो दिग्दिगन्तदोधूयमानकीर्तिभ्यो डॉ० रामकरणशर्म-महोदयेभ्यो वारं वारं सहर्षं धन्यवादा वितीर्यन्ते, येषां प्रोत्साहनेन ग्रन्थोऽयं प्राकाश्यं सम्प्राप्तः।

तदनु ग्रन्थस्यास्य शीघ्रप्रकाशनेऽनुपदं साहाय्यमनुतिष्ठते प्रियशिष्याय सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिणे डॉ० हरिश्चन्द्रमणित्रिपाठिने सस्नेहं शुभाशीर्वचांसि प्रदीयन्ते। अन्ते च ग्रन्थस्यास्य सौष्ठवपूर्णमुद्रणकर्मणि समर्पितमानसाय तारायन्त्रालयसञ्चालकाय श्रीरमाशङ्करपण्ड्यामहोदयाय भूरिशो धन्यवादाः समर्प्यन्ते, यस्य हि सहयोगेन ग्रन्थोऽयं शीघ्रं प्राकाश्यमुपपन्न इति।

विदुषां वशंवदः
करुणापतित्रिपाठी

# प्राक्कथनम्

नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च
मयस्कराय च नमः शिवाय च शिवतराय च ॥

नमो नेदिष्ठाय प्रियदव ! दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर ! महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन ! यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः ॥

**भारतीयवाङ्मये स्तोत्राणां वैपुल्यम्—**

जानन्त्येव संस्कृतभाषानुशीलनचञ्चवो यदस्यां भाषायाम् ऋग्वेदसंहिता-कालादारभ्याद्य यावत् स्तुतिभणितीनां वैपुल्यं विराजते। ऋग्वेदसंहितायामेव स्तवनपरकसूक्तानां देवादिमहिमगायनपराणां बाहुल्यं दरीदृश्यते। केचन पाश्चात्य-देशीयाः ख्रीष्टमतानुयायिनो विश्वसन्ति यत्किलेशामसीह-विषयकस्तुतीनां विश्व-वाङ्मये प्राचुर्यमस्ति। तासां खलु ईशामसीहप्रशंसापरकस्तुतीनां संख्याऽधिक-तमाऽस्ति। स तु तेषां भ्रम एव। स्वसम्प्रदायासक्तिजन्यालीकाग्रहजन्या सा भ्रान्ति-रेवेत्यत्र न मन्मतेन सन्देहलेशोऽपि।

वैदिकलौकिकोभयसंस्कृतभाषानिबद्धानां स्तुतिसूक्तमन्त्रादीनां स्तोत्राणां स्तवानाञ्च गणनातीततानभिज्ञानादेव तेषामेतादृश आग्रहः। यतो हि ऋग्वेदसंहितायां तदुत्तरकालवर्त्तिसंहितासु च सर्वत्र देवस्तुतयः, प्रार्थनाः, स्तवाः, प्रशंसावचनानि च प्राचुर्येण विकीर्णानि दृश्यन्ते।

भारतीयवाङ्मये न खलु केवलं देवादीनाम्, अलौकिकयोनिवतां च स्तुतयो विजृम्भन्ते; अपि तु पृथ्वी-सागर-नद-नदी-वन-पर्वत-वृक्षप्रभृतिनैसर्गिकविभूतीनामपि गायनानि बाहुल्येन विद्यन्ते। ऋग्वेदसंहितायामेव गङ्गा-यमुना-सरस्वती-शतद्र्वादि-सप्तसिन्धूनाम्, अथ च प्राकृतसुषमानिधानभूतायाः प्रकाशागमनप्रथमसन्देशवाहिन्याः प्राचीदिग्रङ्गमञ्चं प्रति नर्तकीवदवतरिताया उषादेव्याः कविसुरुभाभिनिवेशेन वर्णनं कृतम्।

एवमेव चाथर्ववेदे पृथ्वीसूक्तद्वारा भूमिदेवा भृशं स्तुताः। एवमेव च किला-न्येषामपि द्युलोकान्तरिक्षलोकभूलोकदेवप्रभृतीनां विभूतयो वारं वारं मर्मस्पर्शिभि-र्गीतिभिरुद्गीरिताः।

लौकिकसंस्कृतस्यादिकाव्ये वाल्मीकीयरामायणेऽपि विष्णु-सूर्यादिदेवानां स्तुतयः समुपलभ्यन्ते। आदिपुराणभूते महाभारते, अथ चोत्तरकालवर्तिषु पुराणोपपुराण-संहितासु च तेषां तेषां स्तवानामसंख्येयत्वमुपलभ्यते।

संस्कृतवाङ्मये विविधदेवादिविषयकरतिभावभरितानां स्वतन्त्रस्तोत्राणामपि संख्या पारेसंख्यं विराजते। पालि-प्राकृतापभ्रंशावहट्टभाषासु, अथ चान्यासु च विविधासु वर्तमानकालिकीसु भाषोपभाषासु च बौद्ध-जैन-सिक्ख-हिन्दूप्रभृतिसम्प्रदा-यान्तर्गतनिर्मितेषु भक्तिसाहित्येषु, अथ चाधुनिकेषु द्राविडार्यभाषावाङ्मयेषु स्तुति-काव्यस्य वैपुल्यमभिलक्ष्यते।

देववाण्यां चाधुनापि स्तवरचनायाः कल्पनातीता अविच्छिन्ना परम्परा प्रवहमाणा सती संस्कृतसाहित्यस्य श्रियं समेधयति। अतः कथयितुं शक्यते यद् यथा हिन्दूदेवपरिवारः संख्यातीतः, तथैव तेषां स्तुतयोऽपि संख्यातीताः।

अत्र वैविध्यपूर्णानां स्तुतीनां वर्गीकरणं वक्ष्यमाणरूपेण कर्तुं शक्यते—

१. केचन पारम्परिकस्तवनपराः,
२. केचन वर्णनमात्रात्मकाः,
३. अपरे च साहित्यिकलालित्यपरिपूर्णा उक्तिपरकवक्रभङ्गिमजुष्टा रुचिरभाव-भरिताः, रसोक्तिरम्या विद्यन्ते।

एषु तृतीयप्रकारकस्तोत्राणि पद्मपुराण-स्कन्दपुराण-श्रीमद्भागवतपुराण-देवी-पुराण-ब्रह्मवैवर्तपुराणादिष्वपि प्राचुर्येण विकीर्णानि सन्ति। स्वतन्त्रस्तोत्रवाङ्मये खल्वेतादृश्यः स्तुतयो बाहुल्येन संस्कृतस्तोत्रसाहित्यानुशीलनतत्परैः सम्यग्रूपेण लब्धुं शक्यते।

सौन्दर्यलहर्यानन्दलहर्यपराधक्षमापन - ललिताष्टक-त्रिपुरसुन्दर्यष्टक-गङ्गालहरी-प्रभृतिस्तोत्राणि, अन्येषां च देवोपासनशीलानामसंख्येयानि स्तोत्राण्येतादृशानि सन्ति, येषु काव्यगत-गुणालङ्काररीति-वक्रोक्ति-भाव-रस-ध्वन्यादिकृतरामणीयत्वस्याजस्रा निरर्गला च धारा सततं प्रवहमाणा दृश्यते।

अत्रावस्ताद् निदर्शनरूपेण-आद्यशङ्कराचार्यकृतसौन्दर्यलहरी-बाणभट्टकृतचण्डी-शतक-मयूरभट्टकृतसूर्यशतक-पण्डितराजजगन्नाथकृतगङ्गालहर्यादिभ्यः केचन काव्य-लालित्यनिस्यन्दिनः स्तवाः प्रस्तूयन्ते[1]—

---

१. त्रिपुरसुन्दरी-राधाकृष्णस्तवनलीलाविषयकाः स्तवा श्लोकाश्च विशेषरूपेण बहुशो शब्दा-लङ्कारार्थालङ्कारभणितिलालित्य - गुण - रीति - वक्रोक्ति - भाव-रस-व्यङ्ग्य-ध्वनिमनोहराः स्तोत्रवाङ्मये विप्रकीर्णाः। केवलं पण्डितराजस्यानेकलहर्यान्तर्गतसंकलनात्मकस्तोत्रेषु तादृक् श्लोकानां बाहुल्यं वर्तते। दिङ्मात्ररूपेणात्र केषाञ्चन स्तोत्राणामेकैकानि पद्यानि समुद्धृतानि। नैतेन ललितस्तोत्राणि मम मते एतावन्त्येवेति शङ्कनीयमिति दिक्।

१. (क) शङ्कराचार्यकृतानन्दलहर्य्याम्—

विराजन्मन्दारद्रुमकुसुमहारस्तनतटी
नदद्वीणानादश्रवणविलसत्कुण्डलगुणा ।
नताङ्गी मातङ्गी रुचिरगतिभङ्गी भगवती
सती शम्भोरम्भोरुहचटुलचक्षुर्विजयते ॥

(ख) सौन्दर्यलहर्य्याम्—

अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी
जडानां चैतन्यस्तवकमकरन्दश्रुतिझरी ।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥

(ग) त्रिपुरसुन्दरीस्तवराजे—

ईषत्फुल्लकदम्बकुड्मलमहालावण्यगर्वापह-
स्निग्धस्वच्छसुदन्तकान्तिविलसन्मन्दस्मितालङ्कृता ।
ईशित्वाद्यखिलेष्टसिद्धिफलदा भक्त्या नतानां सदा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥

(घ) त्रिपुरसुन्दरीस्तोत्रे—

कुचाञ्चितविपञ्चिकां कुटिलकुन्तलालङ्कृतां
कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् ।
मदारुणविलोचनां मनसिजारिसम्मोहिनीं
मतङ्गमुनिकन्यकां मधुरभाषिणीमाश्रये ॥

२. मयूरभट्टविरचितसूर्यशतके—

आयान्तीं किं सुमेरोः सरणिररुणिता पद्मरागैः परागै-
राहोस्वित्स्वस्य माहारजनविरचिता वैजयन्ती रथस्य ।
माञ्जिष्ठी पृष्ठवाहावलिविधुतशिरश्चामरालो तु लोकै-
राशङ्क्यालोकितैवं सवितुरघनुदे स्तात्प्रभातप्रभावः ॥२७॥

३. रावणकृते शिवताण्डवस्तोत्रे—

नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुर-
त्कुहूनिशीथिनीतमः प्रबन्धबन्धुकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः
कलानिधानबन्धुरः श्रियं जगद्धुरन्धरः ॥७॥

४. पण्डितराजजगन्नाथकृतायां गङ्गालहर्याम्—

मरुल्लीलालोलल्लहरिलुलिताम्भोजपटली-
स्खलत्पांशुव्रातच्छुरणविसरत्कौङ्कुमरुचि ।
सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिलं
जलं ते जम्बालं मम जननजालं जरयतु ॥२०॥

५. वाल्मीकिकृते गङ्गाष्टके—

एतत्तालतमाल-साल-सरल-व्यालोलवल्लीलता-
च्छत्रं सूर्यकरप्रतापरहितं शङ्खेन्दुकुन्तोज्ज्वलम् ।
गन्धर्वामरसिद्ध-किन्नर-वधूतुङ्गस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम् ॥

६. अस्मत्पूर्वपुरुषमहाकविरामानन्दविरचिते विन्ध्यवासिनीकल्पद्रुमस्तोत्रे—

यस्याः कारुण्यपूर्णां दिनकरकिरणोत्फुल्लकह्लारदीर्घां
दृष्टिं सम्प्रार्थयन्ते सकलसुरगणा ब्रह्मविष्णुप्रधानाः ।
सेयं सर्वासुरेन्द्रप्रखरविदलनोद्दामगर्वादखर्वा
सर्वाभीष्टप्रदात्री त्रिभुवनजननी विन्ध्यवासा शिवा स्तात् ॥

अस्मिन् ग्रन्थेऽपि दुर्वाससः कृते शक्तिमहिम्नस्तोत्रे काव्यगतलालित्यरुचिरत्वं पाठकैः प्रकाममास्वादनीयम् ।

अत्रैतत्सर्वं यन्निगदितं तस्यायमेवाभिप्रायोऽस्ति, यत् संस्कृतवाङ्मये निर्मितानां स्तोत्राणां मध्ये काव्यसौन्दर्यभणितिरुचिराः सहस्रशो मनोरमाः स्तवा विद्यन्ते । एतद्धि खलु भारतीयहिन्दूस्तवसाहित्यस्य वैशिष्ट्यम् ।

महिम्नस्तोत्रस्य साहित्यिकलालित्यम्—

गन्धर्वपुष्पदन्तकृतमेतन्महिम्नस्तोत्रं (महिम्नस्तवो धूर्जटिस्तोत्रं वा) संस्कृत-स्तोत्रवाङ्मयस्योत्कृष्टायां साहित्यिकलालित्यचारुतासंवलितस्य प्रणयनस्यैव श्रेण्यां निर्भ्रान्तरूपेण परिगणयितुं शक्यते । प्रथमश्लोकमन्त्रादारभ्य द्वात्रिंशश्लोकपर्यन्तमत्र सर्वाणि छन्दांसि एकतस्तु भक्तिनिर्भराणि, अपरतश्चार्थगाम्भीर्यप्रौढानि, अतश्च साहित्यिकलालित्यमञ्जुलानि सन्तीति, तद्यथा—

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥१७॥

एतादृशानि कविप्रौढोक्तिसिद्धकल्पनारमणीयानि बहुलान्यत्र शब्दचित्राण्यङ्कितानि ।

अत्र च बहवः सन्दर्भाः पुराणकथागर्भिताः सन्ति, तद्यथा—

अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत रणकण्डूपरवशात् ।
शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहरविस्फूर्जितमिदम् ॥

अन्यच्च—

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तेऽद्यापि त्यजति न मृगव्याधरभसः ॥२२॥

एतादृशाः पुराणकथागुम्फिताः, रुचिरकल्पनापेशलाश्चानेके श्लोकाः स्तोत्रेऽस्मिन् राराज्यन्ते । शास्त्रीयसिद्धान्तगर्भितानां स्तवानामप्यत्र नास्ति किलाल्पत्वम् । तद्यथा—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥७॥

अत्रावस्ताद् ध्यानावस्थितशिवगतेन मनसा ध्यायमानस्य चिदानन्दमयस्य लोकशङ्करस्य शङ्करस्य समाहितचित्तसाक्षात्करणीयस्य रमणीयं शास्त्रचिन्तनगाम्भीर्यसूचकं चित्रमवश्यमेवात्रास्वादनीयं शास्त्ररसिकैः—

मनःप्रत्यक्चित्ते सविधमवधायात्तमनसः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥२५॥

स्तोत्रेऽस्मिन् बहवः श्लोकाः सुभाषितकल्पाः, लोकोक्तिमनोहराश्च चकासति । अत्रावस्तात् कानिचिदेवोदाहरणानि ग्रन्थकलेवरवृद्धिभिया प्रस्तूयन्ते । अन्यानि च चेतोहराणि पद्यकुसुमानि समाहितचित्तस्तोत्ररसिकैः स्वयमेव स्तोत्रे तत्र तत्र गवेषणीयानि—

(१) 'कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः' ।

(२) 'रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव' ॥

(३) 'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' ।

(४) '(स्वयं तस्थे ताभ्याम्) तव किमनुवृत्तिर्न फलति' ।

(५) 'न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः' ।

(६) 'न हि वशिषु पथ्यः परिभवः' ।

(७) 'न खलु परतन्त्राः प्रभुधियः' ।

(८) 'अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि' ॥

(९) 'न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि' ॥

एवमेवेतराण्यपि प्रतिभावद्भिः स्तोत्रपाठकैः स्वयमेवोह्यानि पद्यरत्नानि। उक्तानि किलोद्धरणानि तु निदर्शनपराणि बोद्धव्यानि।

**महिम्नस्तवस्य प्रणेता, महिम्नस्तोत्रस्य रचनाकालः, स्तवस्य महनीयत्वञ्च—**

**(क) स्तवस्यास्य प्रणेता—**

पञ्चटीकाकर्त्रा मत्पित्रा नारायणपतित्रिपाठिना कृतायां प्रस्तावनायां वर्णिता किंवदन्तीकथा जनश्रुतिश्च कियत्यौ प्राचीने स्त इति निर्धारयितुं न शक्यते। महिम्नस्तवहस्तलेखा नियमतः सूचयन्ति यत् स्तोत्रस्यास्य प्रणेता पुष्पदन्तः, गन्धर्वो वा, गन्धर्वराजो वेति द्वाभ्यां पक्षाभ्यां किलैतत्सम्भाव्यते यदेकस्यैव पुरुषस्यात्र निर्देशो विहितः। गन्धर्वराज-पुष्पदन्तविषये कथासरित्सागरादिवर्णिता[1] या कथोपलभ्यते, तस्यां यद्यपि पुष्पदन्तस्य नामोट्टङ्कितम्, तथाप्यन्यत्र संस्कृतस्तोत्रसाहित्ये पुष्पदन्ताभिधस्य कस्यापि कवेः कविरूपेण नामोल्लेखो न विद्यते। स खलु गन्धर्व आसीत्, मनुष्यो वाऽऽसीत्, देवयोनिसम्भवो वाऽऽसीदित्येतादृशाः प्रश्नाः सम्मुखमापतन्ति। तत्रैषा सम्भावना वर्तते यदस्य स्तोत्रस्य वास्तविको निर्माता गन्धर्व-पुष्पदन्तनामव्याजेन स्तोत्रमेतद् व्यरीरचत्। स खलु कश्चिच्छिवभक्तः, शिवसेवकः, पार्वतीपतिपूजको वाऽवश्यमेवासीत्। गन्धर्व-पुष्पदन्तनाम्नाऽस्य स्तवरत्नस्य महत्त्व-प्रतिपादनाय कविः कल्पितनाम्ना स्तोत्रमेतद् निरमापयामास, इत्यपि सम्भाव्यते; परन्तु निश्चितरूपेणात्र विषये किमपि वक्तुं न शक्यते।

महिम्नस्तोत्रस्यास्य त्रयस्त्रिंशत्तमे श्लोके लिखितं वर्तते—

**सकलगणवरिष्ठः पुष्पदन्ताभिधानो।**
**रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार॥** इति।

---

१. वयोश्चिरस्य शापेन वसुधामवतीर्णयोः।
तद्वृत्तान्तं गिरिजया पृष्टः प्राह त्रिलोचनः॥
कौशाम्बीवासिनः सुभ्रु पुत्रतामग्रजन्मनः।
प्रयातः सोमदत्तस्य पुष्पदन्तो महीतले॥
कात्यायनः श्रुतधरस्तथा वररुचिश्च सः।
गुणिनामग्रणीर्लोके नामभिस्त्रिभिरुच्यते॥ (बृहत्कथामञ्जरी—१।६८-७०)

एतेन पक्षद्वयमुद्भाव्यते—

१. अस्य स्तोत्रस्य प्रणेता सकलगणेषु वरिष्ठ आसीत्, सम्भवतः शिवगणेषु ।

२. स्तोत्रस्यैतस्य रचना तेन प्रधानतः 'अलघुवृत्तैः' कृता ।

केचनाधुनिकाः समालोचका निगदन्ति यद् अदः स्तवस्त्र समाप्तिरेकत्रिंशच्छ्लोकमिता, यतो हि तस्मिन् पद्ये श्रीमच्छङ्कररचरणयोः 'वाक्यपुष्पोपहारम्' समर्पितं वर्तते । एतेनैव स्तोत्रस्यास्य च समाप्तिः सञ्जातेति ।

'असितगिरिसमं स्यात्' इति श्लोके तु भगवत ईशस्य वर्णनं विद्यते । अपरे स्वीकुर्वन्ति यत् 'असितगिरिसमं स्यात्' इति द्वात्रिंशः श्लोकः स्तवराजस्यास्य चरमः श्लोक इति । अवशिष्टाश्चाष्टौ श्लोकाः फलश्रुतिविषयकाः, अन्यपक्षसूचकाः, न कदाचिदपि स्तोत्रप्रणेत्रा विरचितेति ।

चत्वारिंशत्तमे श्लोके निर्दिष्टं वर्तते यत् स्तोत्रस्यैतस्य पाठः समाहितचेतसा भक्तेन शिवप्रीणनार्थं कण्ठस्थीकृत्य विधातव्यः ।

अनेन स्तुतिकर्तृरूपपुष्पदन्ताभिधानसन्दर्भेण यस्य स्तोत्रकर्तुर्वर्णनं वर्तते, तस्य नाम खलु लोकश्रुति-लोककथाविषयक-(वररुचि)–कात्यायनसम्पर्केण लोकप्रचलितं जातमिति समाकलयितुं शक्यते; यतो ह्येतादृशपरिकल्पनाविषये कश्चिद् दृढ आधारो नोपलभ्यते । अतो ह्यैतिह्यदृष्ट्या स पक्षो विचारकोटिं नारोहतीत्यनिर्णीता एवाद्यापि प्रश्नाः स्तवकार-स्तवश्लोकसंख्या-स्तोत्रसमाप्तिसम्बद्धाः ।

पाश्चात्यविदुषा श्रीमता डब्लू० नार्मनब्राउन-महोदयेन पूनास्थभारतीयानुशीलनपरक-अमेरिकादेशीयसंस्थानद्वारा पञ्चषष्ठ्युत्तरैकोनविंशतितमे खैस्ताब्दे प्रकाशितसंस्करणे महिम्नस्तवस्य स्वकीयभूमिकायास्तृतीये पृष्ठे समुपलब्धाया एकस्याः प्राचीनपाण्डुलिपेः साक्ष्येण संसूचितं[1] यदेतदपि सम्भाव्यते यदस्य स्तोत्रस्य लेखकः कश्चिद् मानव आसीत्, यः खलु ग्रहिलाभिधः कुमारिलभट्टनाम्ना वा निर्दिष्टो वर्तते[2] ।

1. See D. C. Bhaṭṭācārya, Indian Antiquary Vol. 46, 1917 p. 164, refering to Descriptive Catalogue of the Government Oriental Library, Mysore, No. 11120. See also in Catalogue of Sanskrit and Prakrit Manuscripts in the library of India office, Vol 2, No. 7118. See also in Madras Catalogue [of Manuscripts] Vol. 19, No. 7517-7521, "where further details of the auther, son of Annyāmātya, are given" (Statement in India office Catalogue).

   [The Mahimnastava or Praise of Shiva's Greatness, edited, translated, and Presented in illustrations, by W. Norman Brown. —Introduction p. 3. Foot note]

2. Besides being attributed to 'Puṣpadanta', the work is also occasionally ascribed in Manuscripts to a human author 'Grahila' or 'Kumārilabhaṭṭa' (the latter on the authority of a commentary by a Decayāmātya).—तदेव पृ० ३

पुष्पदन्ताभिधानोऽयं महिम्नस्तवराजकर्त्ता ग्रन्थस्यास्य प्रस्तुतहिन्दीभूमिकायां विदुषा टीकाकारेण कथासरित्सागरवृत्तान्तसम्पृक्तकथावर्णितपुष्पदन्त एव अन्यो वेति ऐतिहासिकप्रमाणाभावाद् निर्धारणाविषयः, यः खलु शिवभक्तिवशात् तत्रोपासनाक्रमे व्यवधानाद् उपास्यस्य स क्रोधभाग् अभूत्। तदनु तमेव च देवदेवं शङ्करं प्रसादयितुकामः स पुष्पदन्तः स्तोत्रमेतच्चकार। स भक्तो गन्धर्वयोनिसम्भूतः सङ्गीतकलानिपुणश्च कश्चिद् गन्धर्व आसीत्। स च नित्यमेव भक्तिवशात् शिवाय मनोहराणि पुष्पाणि उपायनीकरोति स्म। एतत्सम्बन्धिनी विस्तृता कथा हिन्दीभूमिकायां सम्यग्रूपेण वर्णिताऽस्ति। अतस्तत्रैव सा द्रष्टव्येति। अन्यश्चापि सर्वः प्रसङ्गो हिन्दीभूमिकायां लब्धुं शक्यते। कथं च स भक्तो भगवतो देवदेवस्य शङ्करस्य क्रोधालम्बनं बभूव? कथञ्च स महादेवप्रसादनाय स्तोत्रमेतच्चकार? इत्येतत्सर्वं तत्रैव विस्तरेण विवृतं वर्तते। अतोऽत्रानावश्यकविस्तारभिया विषयेऽस्मिन् अलमधिकेन लेखनेन।

**(ख) महिम्नस्तोत्रस्य रचनाकालः—**

यथा खल्वस्याः स्तुतेः रचयितुर्विषये प्रबलप्रमाणाभावात् कर्तृत्वमनिर्धारितम्, तथैवास्या निर्माणकालनिर्धारणविषयेऽपि नैकमत्यम्। नार्मनब्राउनमहोदयस्यैतत्स्तोत्रविषयकानुशीलनपरकपूर्वोक्तप्रस्तावनासाक्ष्येण[1] स्तोत्रस्यास्य प्राक्तनतमोपलब्धिर्नर्मदानद्या उत्तरे कूले स्थिते निमाडजनपदीयमान्धातृस्थाने **'अमरेश्वरमन्दिरस्य'** प्रस्तरलेखे सूचितः। यद्यप्यत्र समयस्योल्लेखो वर्तते; किन्तु स खण्डितः। अतस्तेन खण्डितलेखानुसारेण ११२०-१२०० वैक्रमाब्दवर्षयोर्मध्ये प्रस्तरलेखकालोऽनुमातुं शक्यते। अग्रे चैष विषयो विस्तराद् विस्तरमेष्यतीति।

पूर्वोक्तेन प्रस्तरलेखेन विज्ञायते यदसौ स्तवस्ततोऽपि प्राक्तनकाले रचित आसीत्। अतः प्रतिपादयितुं प्रभवामो यत् ततोऽपि पूर्वमेतस्य स्तोत्रस्य निर्माणमभूदिति निश्चप्रचम्।

अन्यदप्यत्र विचारणीयं तथ्यं वर्तते। काव्यमालासंस्करणस्य तृतीयभागस्य पञ्चपञ्चाशत्तमे पृष्ठे सोमदेवकृतयशस्तिलकनामके ग्रन्थे (यशस्तिलकग्रन्थस्य लेखनकालो डो० सी० भट्टाचार्यमतानुसारेण ९५९ खैस्ताब्दे निर्धारितो वर्तते) **'रथः क्षोणी यन्ता'** इति महिम्नस्तोत्रस्याष्टादशश्लोकः कस्यचिद् ग्रहिलाभिधस्य लेखकस्य नाम्ना उद्धृतो निर्दिष्टश्च वर्तते। एवमेव स्तोत्रस्यास्य पञ्चमं पद्यं **'किमीहः किं कायः'** राजशेखरकृतकाव्यमीमांसायां (८।१६) उद्धृतमस्ति। काव्यमीमांसायाः रचनाकालश्चानेकैः संस्कृतसाहित्यस्येतिहासलेखकैर्विक्रमीयनवमशताब्द्या अन्तिमो भागः,

---

१. विस्तृतं विवरणन्तु नार्मनब्राउनकृतोक्तसंस्करणप्रस्तावनायास्तृतीयपृष्ठे द्रष्टव्यम्।

दशमशताब्द्याश्चाद्यो भागोऽनुमितो वर्तते[1]। यद्येष समयः स्वीक्रियेत, तर्हि ततोऽपि पूर्ववर्ति महिम्नस्तोत्रस्य रचनाकालो निर्धारयितुं शक्यते। नार्मनब्राउनमहोदयेन स्वकीयमहिम्नस्तवस्य विशिष्टसंस्करणस्य प्रस्तावनायां सूचितम् (परन्तु नावलोकितं ग्रन्थे) यत् महिम्नस्तोत्रस्य कवयितुः पुष्पदन्तस्योल्लेखो जयन्तभट्टकृतायां न्यायमञ्जर्यामपि कृतो विद्यते[2]। ए० बी० कीथमहोदयानुसारेण न्यायमञ्जर्याः रचनाकाल ईशवीय-दशमशताब्द्यां निश्चितः; किन्तु सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वाराप्रकाशिते डॉ० गौरीनाथशास्त्रिसम्पादिते न्यायमञ्जर्याः प्रथमभागस्य आंग्लभाषायां लिखिते 'प्रिफेस' अंशस्याष्टमे पृष्ठे लिखितं यत्स्वयं जयन्तभट्टेन सूचितं यज्जयन्तभट्टः खलु कश्मीरनृपस्य शङ्करवर्मणः–(८८५–९०२ A.D.) मन्त्री सचिवो वा आसीत्, अतः स्तवस्यैतस्य प्रणयनकालस्ततोऽपि पूर्वं इत्यनुमानविषयो भवितुमर्हति।

स्तोत्रस्यास्य पुरातनत्वसूचकानि कानिचनान्यानि प्रमाणान्यपि संस्कृतवाङ्मयस्यान्तःसाक्ष्येण प्रादुर्भवन्ति। ऋग्वेदसंहितायाम्, बृहदारण्यक–श्वेताश्वतरोपनिषद्-श्रीमद्भगवद्गीतायाश्च परमतत्त्वविषयकसङ्केता यद्यपि प्रसङ्गतोऽनायासेनात्र सन्दर्भिताः, तथापि तैरस्य स्तोत्रस्य प्राचीनवाङ्मयप्रभावपरिचायकत्वमनुमातुं शक्यते।

कालिदासकृताभिज्ञानशाकुन्तलरूपके भगवतः शिवस्य यासामष्टमूर्त्तीनां निर्देशो वर्तते, तासामष्टमूर्तीनां छाया 'त्वमर्कस्त्वं सोमः' इत्यादिपद्ये चकास्ति, एतदप्यस्य स्तोत्रस्य प्राचीनताख्यापने पर्याप्तम्। यस्मिन् प्राक्तने काले भगवतोऽष्टमूर्तेः शिवस्य विशिष्टा मान्यताऽऽसीत्, स एव कालोऽस्य महिम्नस्तवस्य कीर्तिप्रख्यापनेऽलमासीत्।

---

१. प्राच्य-शोध-संस्थानबडोदरातः १९३४ तमे खैस्ताब्दे प्रकाशितायाः काव्यमीमांसायास्तृतीय-संस्करणस्य भूमिकायां १३ तमे पृष्ठे सम्पादकेन श्री के० एस्० रामास्वामिशास्त्रिणोक्तम्–
"There are further literary evidences in support of the period 880-920 A. D. assigned to Rājaśekhara. Ānandavardhana who flourished in a period between 857-884 A. D. is Quoted by Rājaśekhara, while Rājaśekhara is Quoted by Somadeva, Soḍḍhala and Abhinavagupta who flourished in the later half of the 10th century."

२. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः १९८३ तमे खैस्ताब्दे प्रकाशितायां न्यायमञ्जर्याः द्वितीयभागस्य १९६-१९७ पृष्ठयोः पुष्पदन्तस्योल्लेखो जातः। तथा ह्युक्तम्–
"पुष्पदन्तोऽप्याह –

भ्रष्टः शापेन देव्याः शिवपुरवसतेर्वन्द्यहं मन्दभाग्यो
भाव्यं वा जन्मना मे यदि मलकलिले मर्त्यलोके सशोके।
स्निग्धाभिर्दुग्धधारामलमधुरसुधाबिन्दुनिष्यन्दिनीभिः
कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्णः" ॥ इति।

(ग) महिम्नस्तोत्रस्य महनीयत्वम्—

हिन्दूनां शैवमतावलम्बिसम्प्रदायेऽस्य स्तवराजस्य तथैव महनीयत्वं प्रथितम्, यथा विष्णुसहस्रनामस्तोत्रस्य वैष्णवसम्प्रदाये वैष्णवागमे च सर्वातिशायि महत्त्वमूरीकृतं वर्तते। प्रथमश्लोक एव ब्रह्मादिद्वारा शिवस्य महिमवर्णनविषये सङ्केतोऽवलोक्यते। स्तवेऽस्मिन् निगदितं यत् सकलसुरगणैः सह ब्रह्माऽपि भगवत ईशानस्य स्तुतिगायने प्रमुखः। सर्वे देवा भगवतो धूर्जटेः सकाशादेव स्वं स्वं निखिलैश्वर्यं प्राप्नुवन्ति स्म। हरिरपि सहस्रसंख्याकैः कमलैः भगवतः शिवस्य पूजनं समाचरत्। एकदैकस्य कमलपुष्पस्य न्यून्ये सति भगवान् विष्णुर्निजकमलनयनमुपायनीकर्तुं समुद्यतोऽभवत्। तथा ह्युक्तम्—

> हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
>
> र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम्।
>
> गतो भक्त्युद्रेकः परिणतमसौ चक्रवपुषा
>
> त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम्॥ १९॥

एतेन शिवं प्रति भगवतो विष्णोः भक्तिः, आदरभावश्च संलक्ष्येते।

अन्यत्रापि अनलस्कन्धवपुषस्तेजःपुञ्जमूर्त्तेर्ज्योतिर्लिङ्गस्वरूपस्य शङ्करस्यैश्वर्यं स्थूलरूपं परिच्छेत्तुं भगवान् विष्णुरधोऽधोऽवधिज्ञानाय प्रयतमान आसीत्। विरिञ्चिर्ब्रह्मा उपर्युपरि तस्यान्तमवधारयितुं प्रयतितवान्; किन्तूभावपि तद्रूपं ज्योतिर्लिङ्गमुपर्यधो वा परिच्छेत्तुं नाशक्नुताम्। उक्तञ्च—

> तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चिर्हरिरधः
>
> परिच्छेत्तुं यातावनलमनलस्कन्धवपुषः।
>
> ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश य-
>
> त्स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति॥१०॥

इत्थञ्च द्वाविंशे श्लोकेऽपि दृश्यते शङ्करद्वारा ब्रह्माणं प्रति दण्डप्रहारसमुद्योगः। पञ्चदशश्लोके द्वात्रिंशे च श्लोके दृश्यते तस्य स्मरविजेतृत्वम्, शङ्करस्य कामानधीनत्वञ्च। एतत्स्तोत्रानुसारेण परमेश ईशानः सकलस्य विश्वस्य स्रष्टा, पालयिता, संहर्त्ता च स्मृतः। एवमेव चतुर्थः श्लोकोऽपि विभावनीयो वर्तते।

अत्रावधातव्यमस्ति यदेतत्स्तोत्रं परमेशानस्य भगवतः शङ्करस्य महिमवर्णनात्मकम्, अतः प्रायः सर्वेषु पद्येषु प्रत्यक्षतः परोक्षतश्च विभूतिमतस्तस्यैव महिमा कीर्तितः। प्रसङ्गेऽस्मिन् विशेषतः २, ५, ६, ८, ११, १२, १३, १६, १८, १९, २३, २४, २५, २७, ३० संख्यावन्तः श्लोका अध्येतव्याः, विचारणीयाः, मननीयाश्च।

एवमेवान्यत्राप्युक्तम्—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥

अत्र परमशिवस्य निरवच्छिन्न-निराकार-परमेशिरूपस्य तत्त्वस्य सर्वोपास्यत्वम्, सर्वसम्प्रदायचरमलक्ष्यरूपेण मानवानां चरमगम्यत्वं प्रतिपादितमस्ति । यद्यपि तस्य परममहत्त्वात्, अपरिच्छिन्नत्वात्, अनन्तानन्तगुणनिधानत्वात्, निर्गुण-निराकारत्वाच्च महिम्नो वर्णनं मनोवागतीतम्; तथापि महिम्नस्तोत्रकारस्य महिमवर्णनारूपा वाणी यथा पूता भवेत्, तदर्थं तेन स्तवन-कीर्तनमाचरितम् । उक्तञ्च—

मधुस्फीता वाचः परममृतं निर्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथनबुद्धिर्व्यवसिता ॥ ७ ॥

प्रसङ्गेऽस्मिन् प्रथमम्—एकत्रिंशच्च छन्दसी द्रष्टव्ये ।

यज्ञक्रियानुष्ठानापेक्षया भगवतो धूर्जटेर्महत्त्वम्, तस्य सश्रद्धोपास्यत्वञ्च २०-२१ श्लोकयोः प्रदर्शितम् । नगण्योपकरणस्य तस्य भ्रूविलाससंकेतमात्रेण नानादेवाः स्वं स्वम् ऋद्धिं लभन्ते स्म । एवमेवाष्टादशसंख्यकं पद्यमपि तस्य परमशिवस्य विशिष्टं महिमानं सूचयति ।

किं बहुना, अस्य लोकविश्रुतस्तोत्रस्य पाठेन श्रद्धाभक्तिभरितहृदयैर्पाठकैर्भुक्तिः, मुक्तिः, स्वर्गोऽपि लब्धुं शक्यत इति शैवोपासकानां दृढो विश्वासः, यतः खलु समस्तभक्तजनान् प्रति आशुतोषो भगवान् महेशः करुणावरुणालयः । यद्यपि परमकारुणिकस्य शङ्करस्य चिताभस्मालेपादिरूपं शीलममङ्गलमयं प्रतिभाति; तथापि शिवस्मर्तॄणां भक्तानां कृते तत्सर्वममङ्गलाभासमयं शीलं परममङ्गलाधायकमिति चतुर्विंशे श्लोके प्रतिपादितम् । सूर्य-चन्द्र-पवन-वह्नि-जल-धरणि-व्योमप्रभृतिनिखिला अष्टमूर्तयस्तस्यैवेशानस्य विभूतयः । लोके किमप्येतादृशं तत्त्वं नास्ति, यत्खलु शिवतत्त्वाद्भिन्नमिति षड्विंशे श्लोके सुष्ठु निरूपितम् । दशमश्लोकादारभ्य त्रयोदशश्लोकं यावत् श्रीमच्छङ्करभक्तानां महिमानं सङ्कीर्त्य पञ्चदशश्लोके साक्षाच्छिवस्य सर्वातिशायिमहनीयत्वमुद्गीरितं कविना—'अकाण्डब्रह्माण्ड०' (१८) इति पद्येन ।

एवं सर्वासु विभूतिषु विभूतिमयस्य शिवस्य महिमगाने यदि सुरगुरुर्बृहस्पतिः, ब्रह्मादयो देवा अप्यसमर्थाः, तर्हि का कथाऽन्येषाम् ? तस्माद् वरदातुः शिवस्य

चरणयोर्वाङ्मयपुष्पोपहाररूप एष स्तवः पुष्पदन्तगन्धर्वराजेन समर्पित इत्यलं बहुभाषितेन।

एतदवधातव्यमत्र प्रतिभाति यदस्मिन् स्तोत्रे बहूनि सारगर्भितानि प्रकरणानि विलसन्ति, येषु वैदिक-स्मार्त-पौराणिक-दार्शनिक-शाक्तसम्प्रदायानां मतवादा नैपुण्येन गुम्फिताः। ते च स्तोत्रस्यास्य टीकाकाराभ्यां तत्तत्प्रसङ्गे साधु समुद्घाटिता इति सुधीभिस्तत्रैवावलोकनीयाः।

**स्तवराजस्यास्य लेखाः, पाठाः, श्लोकसंख्यादयश्च—**

एतत्स्तोत्रस्य सहस्राधिका हस्तलेखा हस्तलेखग्रन्थपुस्तकालयेषु, पाण्डुलिपिसंग्रहालयेषु, व्यक्तीनां गृहेषु, दैशिक-वैदेशिकसंस्थासु च समुपलभ्यन्ते। वाराणस्यां विश्वविश्रुतहस्तलिखितसरस्वतीभवनपुस्तकालये पञ्चाशदधिका महिम्नस्तोत्रहस्तलेखा विराजन्तेतराम्। शताधिकानि च मुद्रितानि संस्करणान्यस्य स्तवराजस्य नागरीलिप्याम्, विभिन्नासु च प्रादेशिकभाषालिपिषु सम्पूर्णे भारतवर्षे, अन्येषु च देशेषु लब्धुं शक्यन्ते।

नार्मनब्राउनमहोदयेन समालोचन-पाठान्तरोल्लेखपुरस्कृते स्वसम्पादिते सचित्रे संस्करणे[1] येषां स्रोतोभूतानामाधारभूतसंस्करणानामुल्लेख एकविंशे पृष्ठे कृतः, तद् विवरणमत्र महत्त्वाधायकत्वात् संक्षेपेणोल्लिख्यते।

**(१) शिलाभिलेखात्मक आधारः—**

नीमाडजनपदान्तर्गतनर्मदानद्या उत्तरभागस्थे मान्धातेति नाम्ना प्रसिद्धे स्थाने स्थितस्य अमरेश्वरदेवमन्दिरस्य भित्तिषु देवनागरीलिप्यां स्तवस्यैतस्य प्रस्तरलेख उपलभ्यते[2]। यद्यपि प्रस्तरलेखेऽस्मिन् लेखकालो निर्दिष्टो वर्तते; किन्तु वामतः

---

1. THE MAHIMNASTAVA—Edited, translated and presented in illustration by W. NORMAN BROWN, Professor of Sanskrit, University of Pensylivania Published (Publication No. 1) American Institute of Indian studies, Poona, 1965 A. D.

2. The Single illustrated manuscript of the text, which I have seen belongs to the Baroda Museum. It consist of 20 folios, 8¾ inches by 5 inches, with the text in 36 stanzas, each with an illustration. There is an introductory folio with a Colophon, also illustrated, and a full-page illustration on its reverse. The Manuscript is undated. In style the paintings blend to the last phase of the early Western Indian School with the phase of Rajasthani painting in western India, and is similar to that of the older ($B_1$) of the two known illustrated

कालाभिलेखे द्वितीया संख्या त्रुटिता सञ्जाता। अतोऽस्याभिलेखस्य लेखनकालः उभयात्मको भवितुमर्हति[1]। सम्भाव्यते यद् वैक्रमीयसंवत्सरस्य ११२०-१२०२ मध्यवर्ती तस्य लेखनकालः। निर्माणकालस्य गणनानुसारेणायं समयः—(२१ नवम्बर, १०६३) अथवा (२७ अक्टूबर, ११६३) खैस्ताब्दीयो भवितुं शक्यते।

(२) अस्याभिलेखस्यारम्भो यथा—'ॐ नमः शिवाय' इत्येवंरूप इति, तदनन्तरम् एकत्रिंशच्छ्लोकश्चरमश्लोकरूपेण लिखितः। तत्रोल्लिखितं वर्तते—'इति महिम्नस्तवं समाप्तमिति'। प्रस्तराभिलेखस्य कालमानं तु वक्ष्यमाणप्रकारेण समुल्लिखितम्—'श्रीश्री अमरेश्वरदेवाग्रतः शिवभक्तभट्टारकगन्धव(र्व)राजः परमभक्त्या स्तुतिरियम् (!) स्वयम् आलिखत् संवत् १×२० कार्तिकबदी १३' इति।

---

manuscripts of the Saundaryalahari. The painting of both are perhaps of around A. D. 1600-1625 भूमिका, पृ० ७ (1) सूचनीयम्—अत्र तस्मिन्नेव संस्करणे तस्मिन्नेव पृष्ठे एका बृहती पादटिप्पणी वर्त्तते। सा तत्रैव द्रष्टव्या (2) एतस्मिन् संस्करणे सम्पादकेन चत्वारि तानि चित्राणि (coloured illustrations) समुद्धृतानि। (3) अमुष्मिन्संस्करणस्य वैज्ञानिके सम्पादने बहवः साधनभूता अंशाः समुद्धृताः सन्ति। यथा—Foreward, Preface, Consents Introduction, महिम्नस्तवः आङ्ग्लभाषानुवादजुष्टः, Sources. Spurious stanzas (with a Table), Critical Apparatus Apendix, श्लोकसूची Index of words in the Mahimnastava and Illustrations. ( तस्मिन्नेव संस्करणे सप्तमे पृष्ठे। )

1. STONE INSCRIPTION (page 21-23 of the said Edition). N Inscription on Amareśvara temple at Māndhāta in the district of Nimāda on the northern bank of the Narmadā river, Devanāgarī script. But the second digit of the date is damaged and the year might be saṃvat 1120 or 1220. The complete dates worked out to eitgher November 21, 1630 A. D. or October 27, 1163 A. D. (see N. P. Chakravarti in *Epigraphia India*, Vol. 25, part 4, [October 1939], pp. 183-185. तदेव पृ० ३।

अस्मिन् विषये १९३३ ई० 'कल्याण'-मासिकपत्रस्य गोरखपुरीयगीताप्रेसद्वारा मुद्रितस्य शिवाङ्के श्रीमता डा० गौरीशङ्करहीराचन्द्रओझामहाभागेन बहोः कालात्पूर्वं हिन्दीभाषायां राजस्थानमध्यप्रदेशस्य महापण्डितेतिहासविज्ञेन विस्तृतं विवरणं स्वकीयलेखमाध्यमेन दत्तम्। तत्तु तत्रैव द्रष्टव्यम्। डब्लू. नार्मनब्राउनमहोदयेन स्वकीयभूमिकायास्तृतीये पृष्ठे पादटिप्पण्यां लिखितं वर्त्तते यदयं प्रस्तराभिलेखः प्रत्युद्धृतो गौरीशंकरहीराचन्द्रमहोदयेनाथ चास्मिन् विषये परिचर्चितं च गीताप्रेस-गोरखपुरद्वारा प्रकाशिते 'कल्याण'-पत्रास्याष्टमागस्याङ्के १ श्रावणमासीये १९९० वैक्रमीये ( अगस्त १९३३ ) पृष्ठेषु ४६७-४७१।

(३) इण्डिया-आफिस-लाइब्रेरी (लन्दन) इत्याख्यस्य ग्रन्थागारस्य संस्कृतहस्तलेखविभागे बह्वो हस्तलेखाः संकलिताः सन्ति[1]। तत्र शारदालिप्यामपि लिखिता हस्तलेखा विद्यन्ते। एकश्चाभिलेखः शारदालिप्यां लिखितोऽस्ति, यस्मिन् निर्माणसंवत्सरो नोल्लिखितः; परन्त्वनुमीयतेऽष्टादशशताब्द्यां लिखितो भवेत्। आरम्भे चास्याः पाण्डुलिपेर्लिखितमस्ति—'ॐ नमः शिवाय', अन्ते च 'इति पुष्पदन्ताभिधानगन्धर्वविरचितो महिम्नः पारस्तवः समाप्तः' इति।

यद्यपि तत्र लेखकालस्योल्लेखो नास्ति; तथापि तस्य महिम्नस्तवहस्तलेखस्य लेखनम् अष्टादशख्रैस्ताब्द इत्यनुमीयते। हस्तलेखस्यैतस्य छायाचित्रं तया 'लन्दनस्थ-इण्डिया-आफिस-लाइब्रेरी' इत्याख्यया संस्थया ब्राउनमहोदयाय प्रदत्तम्।

(४) एकोऽन्यः पुस्तकाकारो हस्तलेखो महिम्नस्तवस्य माण्ट्रियलसंग्रहालयेन ब्राउनमहाशयाय प्रदत्तम्। हस्तलेखोऽयं चित्रात्मकः[2]। ग्रन्थेऽस्मिन् चतस्रः पङ्क्तयः सन्ति, यासां चतुर्षु पार्श्वेषु वर्णरूपमयानि सीमान्तान्यङ्कितानि। समग्रो ग्रन्थोऽयमष्टादशचित्रैर्विलसति; परन्तु तेष्वेकमपि चित्रं महिम्नस्तवपद्यविवरणसम्बन्धि नास्ति। तत्र लिपिकालस्योल्लेखो न लक्ष्यते, परं चित्राङ्कनशैल्या, विभिन्नलेखलिपिविवेकेन चानुमातुं प्रभवामो यत् तस्य कालस्तु एकोनविंशतिख्रैस्ताब्द इति। हस्तलेखस्य रचना तु पञ्चनदस्योत्तरभागे जातेति मन्ये। अस्य प्रारम्भिकी पुष्पिका त्वेवं विलसति—'ॐ श्रीगणेशाय (संशोधितं 'साय') नमः, ॐ'। हस्तलेखेऽस्मिन् द्विचत्वारिंशच्छ्लोका राराज्यन्ते। पर्यन्तपुष्पिका त्वित्थं निभालिता—'इति श्रीपुष्पदन्तगन्धर्वाचार्यविरचितं महिम्नस्तोत्रं समाप्तम्। शुभमस्तु'।

(५) श्रीमता नार्मनब्राउनमहाशयेन 'युनिवर्सिटी आफ् पेन्सलवानिया संस्कृत मैन्युस्क्रिप्ट कलेक्शन' नामकसंस्थानाद् महिम्नस्तवस्य सप्त हस्तलेखा आवाप्ताः।

---

1. India Office Library London. Sanskrit MSS. 3326 aa (see Catalogue, Vol. 2, part 2, entry No. 7115). Contained in a codex which includes a number of works. The text runs from folio 34 verse (not 33) verse as stated in the Catalogue), line 11 to folio 37 verse, line 10. Śāradā Script, Not dated, probably 18th century.

2. Book form MSS belonging to the McGill University Museum, Montreal. 32 folios, $5\frac{3}{4}$ in by 4 ino, 4 lines to a page with coloured borders. Whole book contains 18 miniature paintings but none illustrate the Mahimnastava. The MSS is not dated, but from style of paintings and the variety of the scripts seems to be of early 19th century and excused in the northern Punjab. Begins: "Om Śrīgaṇeśāya (corrected Sāya !) namaḥ om"...... [तदेव, पृ० २१]

तत्र येषु हस्तलेखेषु यो लिपिकालो लिखितः, तेन ज्ञायते यत्ते प्रायोऽष्टादश-एकोनविंशशततमे वा वैक्रमाब्दे विनिर्मिताः। एकेन लिपिकारेण त्रिचत्वारिंशत्पद्यात्मकस्तोत्रान्ते लिखितम्—'इति श्रीपुष्पदन्तगन्धर्वराजविरचितो महिम्नस्तवः समाप्तः। श्रीरस्तु, शुभं भवतु। संवत् १८८४ आषाढसुदि १३ शुक्ले लिखितमिदं पुस्तकं विश्वेश्वरेण नेपालदेशे एकान्तिपुरराजस्थाने' इति।

अतीवाशुद्धलिखिते द्वितीये हस्तलेखे द्विचत्वारिंशत्पद्यानि सन्ति। न तत्र लिपिकालश्चर्चितः।

तृतीये च हस्तलेखे ऊनचत्वारिंशच्छ्लोका विद्यन्ते। तस्य लिपिकालो वैक्रमाब्दीय–१८७६ संवत्सरे, शकाब्दीय–१७४१-तमे वत्सरे निश्चितः।

चतुर्थो हस्तलेखस्तु सटीकः; किन्तु टीकानिर्मातृनामविरहितोऽष्टत्रिंशत्पद्यात्मकः। हस्तलेखस्यास्य लेखनन्तु द्वाभ्यां लिपिकाराभ्यां जातम्।

पञ्चमे च हस्तलेखे ऊनचत्वारिंशच्छ्लोका विभान्ति। लिपिकालश्च १७७१–१८५७ खैस्ताब्दयोर्मध्यवर्ती।

षष्ठोऽपि हस्तलेखोऽज्ञातकर्तृकटीकायुतः सन् १९०० तमे वैक्रमाब्दे विनिर्मितः।

सप्तमोऽपि हस्तलेखो ब्राउनमहाशयेन गणितः; चत्वारिंशच्छ्लोकात्मकः; किन्तु महत्त्वहीनः प्रतिभाति।

एवमेव ब्राउनमहोदयेन मुद्रितानि त्रीणि संस्करणानि महिम्नस्तवस्य भृशं विमृष्टानि। तत्र मुद्रितमस्ति—'श्रीपुष्पदन्तविरचितं महिम्नस्तोत्रं मधुसूदनसरस्वती-प्रतिप्रणीतशिव-विष्णवर्थव्याख्यासहितम्'। अत्र त्रिचत्वारिंशत्पद्यानि विलसन्ति; किन्तूभयात्मिका व्याख्या आ प्रथमश्लोकाद् एकत्रिंशश्लोकं यावदस्ति। षट्त्रिंशसंख्यकपद्यस्यान्तेऽत्राप्युक्तम्—'इमे ( ३२-३६ ) श्लोकाः स्तोत्रान्तर्गताः, सुगमाश्चेति सर्वं भद्रम्' इति। अत्र च षट्श्लोकास्तेन टीकाकारेण लिखिताः, येष्वन्तिमस्तु—

भूतिभूषितदेहाय द्विजराजेन राजते।
एकात्मने नमो नित्यं हरये च हराय च ॥ इति।

अन्ते चोपसंहरन् तेनोक्तम्[१]—'इति श्रीमत्परमहंसश्रीमद्विश्वेश्वरसरस्वती-चरणारविन्दमधुपमधुसूदनसरस्वतीविरचिता महिम्नस्तुतिव्याख्या सम्पूर्णा'।

नार्मनब्राउनमहोदयेन यस्य हस्तलेखस्य चर्चा कृता, तस्मिन् अन्येऽपि सप्तसंख्याकाः श्लोका आसन्। पाण्डुरङ्गजीवाजीप्रकाशितस्य तस्य संस्करणस्य सा

१. अन्ये श्लोका अस्मिन्नेव संस्करणे षट्त्रिंशत्संख्यकपद्यानन्तरं मम पितृचरणैरुद्धृताः, अतस्तत्रैव पाठकैर्द्रष्टव्याः।

सप्तमावृत्तिरासीत् १८५८ शकाब्दपर्यन्तम् । तस्मिन् संस्करणे द्वात्रिंशच्छ्लोकादारभ्य षट्त्रिंशच्छ्लोकपर्यन्तं टीकाकर्त्रा हरि-हरात्मकं व्याख्यानं कृतं न वेति न जाने[1] । परन्तु मुख्यावरणपृष्ठे लिखितमस्ति—'श्रीपुष्पदन्तविरचितं महिम्नस्तोत्रं मधुसूदन-सरस्वतीप्रतिप्रणीता शिव-विष्ण्वर्थकव्याख्यासहितम्' । तत्रैवाभ्यन्तरे पृष्ठे लिखितं वर्तते—'श्रीमन्मधुसूदनसरस्वतीप्रणीतशिवसहितं पणशीकरोपाह्वलक्ष्मणशर्मसूनुना वासुदेवशर्मणा संशोधितम्'[2] इति ।

प्रकाशितसंस्करणानां प्रसङ्गे नार्मनब्राउनमहोदयेन एकस्यान्यस्यापि ग्रन्थस्य चर्चा कृता । स ग्रन्थस्तु जगन्नाथचक्रवर्तिकृतव्याख्यया समलङ्कृतः, आर्थरएवलोन-नामकेन विदुषा स्वीयव्याख्यापुरःसरमनूदितश्च[3] । तेन प्रतिसंशोधितं परिवर्द्धितं संस्कृतमयोसार्थदीपिकाव्याख्यया समन्वितमिदं संस्करणं मद्रासस्थगणेश-एण्ड को०-नाम्न्या संस्थया १९५३ खैस्ताब्दे प्रकाशितम् । आर्थरएवलोनमहाशयेन आदितः पञ्च-त्रिंशत्पद्यानामेवानुवादकार्यं विहितम्, किन्तु टीकाकर्त्रा जगन्नाथचक्रवर्तिना चत्वा-रिंशच्छन्दांसि व्याख्यातानि । व्याख्याकर्त्रा छन्दसां संख्या भिन्ना पुरस्कृता, अनुवाद-कर्त्रा तु भिन्ना । अस्मिन् संस्करणे श्लोकानां संख्या चतुश्चत्वारिंशन्मिताऽस्ति ।

एवमेवैकस्यापरस्यापि प्रकाशितसंस्करणस्य चर्चा श्रीमता ब्राउनमहोदयेन कृता । तृतीयसंस्करणमिदं संस्कृतान्वयहिन्दीभाषासहितं २०१० वैक्रमाब्दे सहारन-पुरजनपदान्तर्गतकनखलनाम्ना प्रथितात् स्थानात् प्रकाशितम् । संस्करणेऽस्मिन् हिन्दीभाषानुवादकर्त्रा स्वामिप्रकाशानन्दशास्त्रिणा द्विचत्वारिंशत्पद्यानामेव समावेशः कृतः । ब्राउनमहोदयेनोपर्युक्तानां महिम्नस्तोत्रस्य प्रकाशितसंस्करणानां पाठभेदादि-विवेचनं न समनुष्ठितम् ।

अन्ते च विदुषा ब्राउनमहाशयेन स्वीयसंस्करणविषये त्रिविंशे पृष्ठे प्रतिपादितं यदमीषु हस्तलेखेषु नोमाडमन्दिरभित्तिप्रस्तरलेखः सर्वापेक्षया शुद्धो विशिष्टोऽपूर्वश्च । स एवैकत्रिंशत्पद्यात्मको हस्तलेखो ब्राउनमहाशयेन सम्पादनार्थमूरीकृतः । एतस्मिन् संस्करणे तेनोद्घोषितं यद् द्वात्रिंशत्पद्यतः षट्त्रिंशत्पद्यपर्यन्तं श्लोकाः परवर्तिभिः प्रक्षिप्ताः ।

---

1. The text is given in stanzas with commentary on stanzas 1-31 after stanzas 32-36, there are some stanzas which like the commentary on stanzas 1-31, give a double significance to the Stotra as referring to 'Śiva-Viṣṇu (P. 22).

२. तस्मिन्नेव नार्मनब्राउनसम्पादिते संस्करणे–पृ० २२ ।

3. Arthur Avalon,

ब्राउनमहाशयेन यानि मुद्रितानि संस्करणानि पुरस्तात् चर्चितानि, तेषु १९२४ तमे ख्रेस्ताब्दे वाराणसीस्थचौखम्बासंस्कृतसीरिज-आफिसनामकात् संस्थानात् प्रकाशितस्य मदीयपितृचरणकृतपञ्चमुखीटीकोपेतस्य च संस्करणस्योपयोगस्तेन न कृतः। सम्भाव्यते यत्तस्य मुख्यं कारणन्तु संयोगवशात् तस्य संस्करणस्यानवलोकनमेव स्यात्। अत एव तस्मिन् विषये तेनोल्लेखो न कृतः।

मत्पितृचरणैः श्रीमद्भिर्नारायणपतित्रिपाठिमहोदयैः सम्पादितेऽस्मिन्नपि संस्करणे वास्तविकी श्लोकसंख्या द्वात्रिंशन्मिता, अन्यानि तु पद्यानि न पुष्पदन्त-प्रणीतानि, मन्ये परवर्तिभिः प्रक्षिप्तानीति। द्वात्रिंशसंख्यकः 'असितगिरिसमं स्यात्' इति पद्यन्तु मूलस्तोत्रस्यैवान्तिमः श्लोकः, पञ्चमुखीटीकाकारेण गृहीतश्च; किन्तु ब्राउनमहोदयेन नीमाडस्थप्रस्तराभिलेखतो गृहीता एकत्रिंशच्छ्लोका एव महिम्न-स्तोत्रस्य मौलिका इति मत्वा शेषाः श्लोकाः प्रक्षिप्ता इति तेन विदुषा सिद्धान्तितम्[1]।

एवं मुद्रितान्यमुद्रितानि च महिम्नस्तवस्य संस्करणानि गणनातीतानि, कानिचन मयाऽवलोकितानि, कानिचन चानवलोकितान्यपि। अस्य स्तवस्यैकं संस्करणं गोरखपुरस्थगीताप्रेसद्वारा प्रकाशितम्, तस्यानेका आवृत्तयः सञ्जाताः। एकञ्चापरं विशिष्टदार्शनिकव्याख्यानसंवलितं भाष्यात्मकं संस्करणमपि तत्र चर्चितं विद्यते।

**मधुसूदनीटीकानिर्मातारो मधुसूदनसरस्वतीपादाः—**

अस्मिन् सटीकमहिम्नस्तोत्रसंस्करणे श्रीमतां पण्डितचक्रवालचूडामणीनां श्रीमन्मधुसूदनसरस्वतीमहाभागानां हरि-हरोभयार्थिका 'मधुसूदनी' इत्याख्या

---

१. (क) रोमनाक्षरेषु लिखितं वक्ष्यमाणं पद्यमत्र पाठकवृन्दसौविध्यार्थं नागराक्षरेषु मया परिवर्तितम्—

"असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानां नाथ पारं न याति" ॥

A parallel appears in 'Subandhu's 'Vāsavadattā' (Keith P. 312; note also Keith's reference LOR. Böhler, Kl. Schripten 3.293 Hand Zacharioe, Kl. Schripten, PP. 205 f.)

(ख) अस्मिन्नेव संस्करणे मत्पित्रा भूमिकायाः सप्तमे पृष्ठे लिखितं यच्छिवरहस्याख्ये ग्रन्थे द्वात्रिंशत्तमस्य 'असितगिरिसमं स्यात्' इति श्लोकस्य स्थाने अन्यौ द्वौ श्लोकौ लिखितौ स्तः। अन्यच्च स्कन्दपुराणान्तर्गतशिवरहस्यविषये तत्र यत्किञ्चिल्लिखितम्, तत्सर्वं तत्रैव जिज्ञासुभिरवलोकनीयम्। तस्यामेव भूमिकायाम् एकस्या राम-शिवोभयात्मिकाया टीकाया अपि चर्चा कृताऽस्ति, यस्या विषये मत्पित्रा श्रुतमस्तीति।

व्याख्याऽपि सम्पादिता। जानन्त्येव भारतीयदर्शनशास्त्राध्येतारो यदिमे महाभागाः शाङ्कराद्वैतमतस्य प्रकृष्टपरिपोषका आसन्। एतेषां श्रीमद्भगवद्गीताया 'गूढार्थदीपिका' नाम्नी टीका सुविख्याता, विद्वद्भिर्बहुसमादृता च[1]। अद्वैतसिद्धि-वेदान्तकल्पलतिका-अद्वैतरत्नलक्षणम्-संक्षेपशारीरकव्याख्यादयश्च विदुषां चेतांसि चमत्कुर्वन्ति। एतेषामन्येऽपि बहवः शाङ्कराद्वैतसिद्धान्तप्रबन्धा दर्शनशास्त्रोपासक-विद्वन्मण्डलीषु सादरमभ्यर्हिताः, अभिवन्दिताश्च।

एवंविधस्य गुणतो गरिष्ठस्य विद्यातो वरिष्ठस्य विदुषः प्रबन्धानां सूची विस्तृतेति विस्तरभयादत्र संक्षेपतः किञ्चिल्लिखामि।

**तस्याविर्भावकालः—**

सामान्यतोऽस्याविर्भावकालो नवत्युत्तरपञ्चदशशततमे वैक्रमाब्दे (१५९० वै०) विद्वद्भिर्निर्धारितः[2]। मूलत एतेषां पूर्वपुरुषाः कान्यकुब्जनिवासिन आसन्। पश्चाच्च मोहम्मदीयानामुत्पीडनात्मकात्याचारोद्वेजिता जाताः। पण्डितोऽयं बङ्गदेशान्तर्गत-फरीदपुरीयकोटालपाड़ाख्यं ग्रामं स्वजनुषाऽलञ्चकार। एतेषां पितुर्नाम प्रमोदन-पुरन्दर आसीत्। प्रमोदनमहाशयस्य पूर्वपुरुषा अपि तत्तच्छास्त्रवैदुष्यमण्डिता बभूवुः।

---

१. श्रीमन्मधुसूदनसरस्वतीमहाशयानामधोलिखिताः कृतयोऽतीव प्रसिद्धाः प्रोच्यन्ते-(१) अद्वैतसिद्धिः, (२) अद्वैतरत्नलक्षणम्, (३) वेदान्तकल्पलतिका, (४) संक्षेपशारीरकव्याख्या, (५) सिद्धान्तबिन्दुः, (६) आत्मबोधः, (७) गीतानिबन्धः, (८) गीताव्याख्यागूढार्थदीपिका, (९) प्रस्थानभेदः, (१०) शाण्डिल्यसूत्रव्याख्या, (११) रासपञ्चाध्यायीटीका, (१२) महिम्न-स्तोत्रव्याख्या, (१३) श्रीमदानन्दमन्दाकिनी, (१४) कृष्णकुतूहलनाटकम्, (१५) भागवतटीका, (१६) हरिलीलाविवेकः, (१७) भक्तिरसायनञ्च।

अन्येऽपि चत्वारः पञ्च वा ग्रन्था एतैर्विनिर्मिताः, येषां नामान्यधोनिर्दिष्टानि–'सर्वविद्या-सिद्धान्तवर्णनम्', 'वेदस्तुतिटीका', 'जरा (टा ?)-ष्टविकृतिः', 'राज्ञां प्रतिबोधश्च'।

एतेषां शिष्योपशिष्याणां तैस्तैर्विरचितनिबन्धानां च सूच्यत्रानापेक्षितेति नात्र तद्वि-वरणं मया दीयते।

२. (क) वाराणसेयोदासीनसंस्कृतमहाविद्यालयप्राचार्य-(प्रिंसिपल)-महोदयेन मीमांसातीर्थन्याया-चार्याद्युपाधिमण्डितेन श्रीयोगीन्द्रानन्दपुण्यचरणेन रसधाराख्यव्याख्योपेतभक्तिरसायन-ग्रन्थे समुपस्थापितप्रमाणैः, अथ च कलिकातानिवासिविद्वद्वरेण्यस्य तर्क-सांख्य-वेदान्तादितीर्थोपाधिविभूषितस्य योगेन्द्रनाथमहोदयस्य च लेखनसाक्ष्येणैष कालो निर्धारितः।

(ख) अत्र मतभेदोऽपि वर्त्तते; तथापि १५३३ ई० तः १६४० ख्रैस्ताब्दमध्येऽवश्यमेव तस्य काल आसीत्। विस्तारस्तु वाराणसेय-चौखम्बासंस्कृतसंस्थानप्रकाशिते २०३९ वैक्रमाब्दीयद्वितीयसंस्करणे सरस्वतीमहाभागस्य संक्षिप्तपरिचयशीर्षकेंऽशे मधुसूदन-सरस्वतीगूढार्थदीपिकोपेते हिन्दी-अनुवादसहिते श्रीमद्भगवद्गीताग्रन्थे द्रष्टव्यः।

प्रमोदनपुरन्दराचार्यस्य चतुर्षु पुत्रेषु मधुसूदनसरस्वतीमहाभागस्तृतीय आसीत्। अस्य गृहनाम 'कमलनयनः' इत्यासीत्। नवद्वीपे हरिरामतर्कवागीशात्प्राचीन-नव्यन्याय-शास्त्रादिकं सरहस्यमेभिः सम्यगधीतम्। नवद्वीपस्य विश्वविश्रुतनव्यनैयायिकाः 'गदाधरभट्टाचार्याः' एतेषां सहाध्येतार आसन्। ततश्च काशीं समागत्य आचार्य-विश्वेश्वरसरस्वतीमनीषिभ्यः सकाशाच्छाङ्करवेदान्तस्य सश्रद्धं साभिनिवेशं प्रगाढं गहनं गभीरञ्चानुशीलनं विधाय तेभ्य एव विश्वेश्वरसरस्वतीपूज्यपादेभ्यः सन्न्यास-दीक्षामगृह्णन्।

एवं श्रीमतां मधुसूदनसरस्वतीनां मतानुसारं श्रीश्री१०८ श्रीविश्वेश्वरसर-स्वतीमहाभागाः साक्षादभिनवश्रीमदाद्यशङ्कराचार्या आसन्। तथा हि सिद्धान्तबिन्दौ मङ्गलश्लोकः—

**श्रीशङ्कराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य।**
**वेदान्तशास्त्रश्रवणोत्सुकानां (णालसानां) बोधाय कुर्वे कमपि प्रबन्धम्॥**

एवमेवान्येभ्यो नानाशास्त्रमर्मज्ञेभ्यो महापण्डितेभ्यस्तत्तद्विद्यानां वैदुष्यं समवाप्य मधुसूदनसरस्त्रतीवर्या विद्वन्मण्डलीषु सभाजिताः, समादृताः, अभ्यर्हि-ताश्च जाताः।

अत्रावधेयमस्ति यदिमे न केवलं वेदान्त-न्याय-भक्तिसम्प्रदायादीनामेव तल-स्पर्शितत्त्वविदो मनीषिणो बभूवुः; अपि त्वन्येषां मीमांसा-सांख्य-योग-पाशुपतसिद्धान्त-शैवदर्शन-बौद्धदर्शनप्रभृतीनां शास्त्राणां विज्ञातार आसन् तथा च सम्यग्रूपेण तत्तच्छा-स्त्राणां गुरुमुखादध्ययनम्, अनुशीलनञ्च कृतवन्तः। उक्तञ्च तेनैव श्रीमद्भगवद्गीता-भाष्यस्यान्तिमे श्लोके—

**श्रीरामविश्वेश्वरमाधवानां प्रसादमासाद्य मया गुरूणाम्।**
**व्याख्यानमेतद्विहितं सुबोधं समर्पितं तच्चरणाम्बुजेषु॥**

एतेषां न्यायशास्त्रस्य पाण्डित्यप्रसङ्गे केनचिदुक्तम्—

**नवद्वीपे समायाते मधुसूदनवाक्पतौ।**
**चकम्पे तर्कवागीशः कातरोऽभूद् गदाधरः॥**

इदमप्येतेषां काशीनिवासप्रसङ्गे श्रूयते यदिमे मतिमन्तो गोस्वामितुलसीदास-महाभागानां समकालीना आसन्। श्रूयते यद् यदा वाराणसेयाः केचन संकुचित-मानसाः संस्कृतपण्डितास्तुलसी(सि)कृतरामचरितमानसग्रन्थस्य भगवच्चरितभरि-तस्य हिन्दीभाषामयत्वात् तस्य विषये दुरभिप्रायान् प्रकटितवन्तः, तदा चेखिद्यमान-मानसेन तुलसी(सि)दासेनैकं वक्ष्यमाणं हिन्दीभाषापद्यं लिखित्वा श्रीमन्मधुसूदन-सरस्वतीपादानां सविधे प्रेषितम्—

हरि-हर-जस सुर-नर-गिरा, बरनहि सन्त सुजान।
हाँड़ी हाटक चारु रुचि, रांधे स्वाद समान॥

पद्यस्यैतस्य भावार्थमिदमेव यत् तण्डुलपाको मृण्मयपात्रे सम्पन्नः, सुवर्णमय-पात्रे वा, ओदनस्यास्वादः सम एव। तदा च मधुसूदनपादाः तुलसीदासकृतहिन्दी-भाषाकवितां प्रशंसन्तो लिखितवन्तः—

आनन्दकानने ह्यस्मिन् जङ्गमस्तुलसीतरुः।
कविता-मञ्जरी यस्य रामभ्रमरभूषिता॥

पुरस्तादुद्धृतानां वृत्तान्तानां कथनस्यात्रैतदेव तात्पर्यं यत् काशीनिवासकाले श्रीमन्मधुसूदनसरस्वतीपादानां गणना वाराणसेयपण्डितपुङ्गवेषु प्रधानतमाऽऽसीत्।

केनचित् कविना साधूक्तं तेषां विषये—

मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती।
पारं वेत्ति सरस्वत्या मधुसूदनसरस्वती॥

अत्रैतद् विशेषेणावधेयं वर्तते यदिमे विलक्षणविचक्षणा नानाशास्त्रनदीष्णाः श्रीमदाद्यशङ्कराचार्यप्रवर्तितशाङ्करवेदान्तपारङ्गताः सन्तोऽपि गोपीजनवल्लभस्य वृन्दावनमधुरलीलामाधुरीरसिकस्य भगवतः श्रीकृष्णस्यापि परमभक्ता आसन्। प्रमाणरूपेणात्र एभिर्विनिर्मिताः—'**भक्तिरसायन-रासपञ्चाध्यायीव्याख्या-हरिलीला-विवेक-श्रीमद्भागवतटीका-श्रीमद्भगवद्गीतागूढार्थदीपिका**'—प्रभृतिमधुररसनिस्यन्दिनो ग्रन्था उल्लेखितुं शक्यन्ते।

एवमेवैतेषां सरस्वतीपादनां कानिचन भक्तिभावभरितानि पद्यान्यवस्तादुप-न्यस्यन्ते, यैर्निर्भ्रान्तिरूपेण प्रमाणीकर्तुं शक्यते यत् सरस्वतीपादाः कामं व्रजनन्दनस्य श्रीकृष्णचन्द्रस्यानन्यभक्ता आसन्। उक्तमपि गूढार्थदीपिकायाः सप्तमाध्यायारम्भे—

यद्भक्तिं न विना मुक्तिर्यः सेव्यः सर्वयोगिनाम्।
तं वन्दे परमानन्दघनं श्रीनन्दनन्दनम्॥

इत्थमेव च त्रयोदशाध्यायप्रारम्भेऽपि श्लोकोऽयं निजार्थमहिम्ना भक्तजन-चेतांसि चमत्करोति—

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनोदरे किमपि यन्नीलं महो धावति॥

एवमेव श्रीमद्भगवद्गीताया गूढार्थदीपिकानाम्न्याष्टीकायाः चरमः श्लोकस्तु यतिवराणां सरस्वतीपादनां नन्दनन्दनस्य यमुनापुलिनकुञ्जलीलाधरस्य सौन्दर्य-निधानस्य श्रीकृष्णस्य भक्तेः परां काष्ठामभिव्यनक्ति, तथा हि—

वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात्परं किमपि तत्त्वमहं न जाने ॥

एभिः सन्दर्भैः कामं निष्क्रष्टुं पार्यते यदवश्यमेव सरस्वतीपादाः श्रीकृष्णतत्त्व-रहस्यज्ञानशालिन आसन् । अत एवेदं स्वाभाविकमासीद् यत् श्रीकृष्णचन्द्रस्य भक्तेः परां काष्ठामधिरूढेनानेन यतिवरेण शिवमहिम्नस्तोत्रस्य हरि-हरोभयार्थिकी व्याख्या कृतेति । नूनमेवात्र श्रीविष्णुभक्तिरेव प्रेरिका जाता ।

यद्यप्येतेषां सरस्वतीमहाभागानां हरि-हरयोः समाना दृढा च भक्तिरासीत्; तथापि परमार्थरूपेणोभयोरभेदप्रतिपादनमेव तेषां मुख्यमुद्देश्यं प्रतिभाति । अत एव षट्त्रिंशत्तमश्लोकस्य व्याख्यायां तेन प्रतिपादितम्—

हरि-हरयोरभेदबोधो भवतु क्षुद्रधियामपीति यत्नात् ।
उभयार्थतया मयेदमुक्तं सुधियः साधुतयैव शोधयन्तु ॥

अग्रे चापि षष्ठश्लोकव्याख्याने तेनोक्तम्—

भूतिभूषितदेहाय द्विजराजेन राजते ।
एकात्मने नमो नित्यं हरये च हराय च ॥ इति ।

एवं विविधशास्त्रपारङ्गमानां श्रीमन्मधुसूदनसरस्वतीपादानां तत्तच्छास्त्र-निःस्यन्दिभूता तत्त्वदृष्टिः स्वयमेव प्रेक्षावद्भिष्टीकाध्येतृभिस्तत्र तत्रोहनीया, विशेषतोऽनुशीलनीया च वक्ष्यमाणश्लोकानां मधुसूदनी टीका ।

(क) 'त्रयी साङ्ख्यं योगः' इति सप्तमश्लोकस्य व्याख्यायां विविधदार्शनिक-तत्त्वानां सारसंक्षेपावतारो द्रष्टव्यः ।

(ख) 'महिम्नः पारं ते' इति प्रथमश्लोकस्य व्याख्याने गन्धर्वराजपुष्पदन्तस्यो-पाख्यानादीनि द्रष्टव्यानि ।

(ग) 'अमुष्य त्वत्सेवा' इति द्वादशश्लोकस्य विशिष्टा व्याख्याऽवलोकनीया ।

(घ) 'क्रतौ सुप्ते' इति विंशतितमस्य श्लोकस्य व्याख्यायां यज्ञापेक्षया ईश्वरा-राधनं प्रशस्यमिति वैशिष्ट्यं तत्रैवोहनीयम् ।

(ङ) 'मनः प्रत्यक्चित्ते' इति पञ्चविंशस्य श्लोकस्य यौगिकी विशिष्टा व्याख्या ध्यातव्या ।

(च) **'त्वमर्कस्त्वं सोमः'** इति षड्त्रिंशततितमस्य श्लोकस्य विभूतिमूलिका व्याख्याऽपि मननीया ।

(छ) **'त्रयीं तिस्रो वृत्तिः'** इति सप्तविंशततितमस्य श्लोकस्य प्रणवमूलिका व्याख्याऽप्यूहनीया ।

एवं पुरस्ताच्चर्चितानि पद्यव्याख्यानानि तूपलक्षणमात्रभूतानि सन्ति । वस्तुतः सम्पूर्णस्य महिम्नस्तोत्रस्य मधुसूदनी व्याख्या कामं सरस्वतीपादानां चतुरस्रपाण्डित्य-प्रकर्षस्य भास्वरतामभिव्यनक्तीति ।

**महिम्नस्तवस्यान्याष्टीकाः—**

महिम्नस्तवस्य टीकानां विषये अस्मत्पितृपादैः स्वकीयायां भूमिकायां यदुक्त-मस्ति, ततोऽधिकं मया न निगदनीयम् । प्रायः सकलासु भारतीयभाषासु, तत्तत् प्रदेशीयासु च भाषासु महिम्नस्तवस्य टीका विराजन्तेतराम् । तथाप्यत्रावस्तात् कासाञ्चन टीकानां विवरणं प्रस्तूयते—

१. पण्डितकोमलरायस्य **'सुबोधिनी'** नाम्मी टीका ।

२. पूज्यचरणब्रह्मानन्दसरस्वतीमहोदयस्य **'मनोरमा'** नाम्नी टीका ।

३. एका अपरापि शिवरामपण्डितविरचिता **'शिवरामी'** नाम्नी टीका श्रुता । श्रूयते च सा शिव-रामोभयार्थिका आसीत् । टीकेयं मत्पितृचरणैर्न दृष्टेति ।

अन्याश्चापि स्तवस्यास्य बह्व्यष्टीका विद्वद्भिर्विरचिताः, यासां सर्वासां विवरण-मत्रोपस्थापयितुं नास्त्यवसरः, न वा तत्र मे सामर्थ्यम् ।

**नारायणीटीकाकर्तुः पूर्वपुरुषा रामानन्दपतित्रिपाठिनः—**

अस्माकमेके पूर्वपुरुषाः स्वनामधन्याः, विविधशास्त्रनदीष्णाः, मोगलवंशीय-औरङ्गजेव-अग्रज-इकबालमुहम्मददाराशिकोह-अध्यापकाः, श्रीमद्रामानन्दपतित्रिपाठि-महोदया वर्णाश्रमधर्मानुष्ठानतत्पराः, संस्कृताध्ययनाध्यापनसमर्पितमानसा अस्यामेव वाराणस्यां न्यवसन् । तेषां विषयेऽस्मत्कुलपरम्पराविषये च वाराणसीस्थसम्पूर्णानन्द-संस्कृतविश्वविद्यालयेन लघुग्रन्थमालायां पञ्चत्रिंशपुष्परूपेण प्रकाशितविराड्विवरणाख्ये ग्रन्थे विस्तृतं विवरणं द्रष्टुं शक्यते । अत्र केवला तस्य ग्रन्थस्य पुष्पिका टिप्पणी-भागे द्रष्टव्या[1] ।

---

१. (क) विराड्विवरणस्यावसानिका पुष्पिका . यथा—'इति श्रीइकबालमुहम्मद्दाराशिकोह-प्रकर्षोद्भूतसत्संतानाखण्डघरणिनियुक्तेन' ।

(ख) आचार्यपण्डितबलदेवोपाध्यायविरचिते वाराणसीस्थविश्वविद्यालयप्रकाशनसंस्थानद्वारा १९८३ खैस्ताब्दे प्रकाशिते 'काशी की पाण्डित्य-परम्परा' नामके ग्रन्थे ७० तः ७४ पृष्ठानि द्रष्टव्यानि ।

**नारायणीटीकाकर्तारो नारायणपतित्रिपाठिशर्माणः—**

शिवमहिम्नस्तोत्रस्य नारायणीटीकाकर्तारोऽस्माकं पितरः **श्रीनारायणपतित्रिपाठिनो** यद्यपि संस्कृताध्ययनमुपाधिप्राप्तिधिया न कृतवन्तः; तथापि वंशपरम्परादायमहिम्ना, आत्मस्वाध्यायाभिनिवेशेन, स्वपितृव्यचरणश्रीमच्चन्द्रशेखरपतित्रिपाठ्यनुग्रहेण, प्रातःस्मरणीयपुण्यश्लोक-काशीपण्डितसमाजाग्रणी-स्वश्वसुरश्रीमच्छिवकुमारशास्त्रिमहाभागनित्यप्राप्तसान्निध्येन, नियमितशास्त्रचर्चाप्रसङ्गेन, स्वामिवर्य-१००८ श्रीमनीष्यानन्दमहाभागात्स्वाध्यायेन चाद्भुतं पाण्डित्यं तैरवाप्तमिति न विस्मयास्पदम् ।

एवंविधगुणगणसमलङ्कृतैस्तैः पञ्चाशदधिकग्रन्थस्तोत्रादिसम्पादन-हिन्दीभाषापद्यानुवाद-संस्कृतटीकाविरचनादिव्यवसायेनात्मनोऽजस्रविद्याव्यसनित्वं प्रख्यापितम् । अस्मत्कुलपूर्वपुरुषैः श्रीमद्रामानन्दपतित्रिपाठिभिर्विरचितान्यनेकविधस्तोत्रसाहित्य-दर्शनपुस्तकादीनि एभिर्हिन्दीभाषानुवादमाध्यमेन सम्पाद्य सामान्यजनेभ्यो वितरितानि । एवमेवेमे स्कन्दपुराणान्तर्गतस्य श्रीकाशीखण्डस्य हिन्दीभाषायां पाण्डित्यपूर्णमनुवादं तस्य सम्पादनमपि कृत्वा मुम्बापुरीस्थश्रीव्यंकटेश्वरमुद्रणालयद्वारा प्रकाशितवन्तः ।

संस्कृतभाषायां पद्यनिर्माणे चैते आशुकवय आसन् । चतुर्दशशतश्लोकी **भगवतीस्तुतिः—गङ्गाशतक—भूकम्पशतक—काशीशतक-भारतमातृमालाशतक-प्रभृतीनि** काव्यबन्धान्येतेषां संस्कृतभाषायां काव्यनिर्माणपटुत्वमुद्घोषयन्ति । उक्तानि शतकानि अनेकानि यथाकालं सुप्रभाताख्ये संस्कृतपत्रे प्राकाश्यं नीतानि सम्पादकेन श्रीकेदारनाथसारस्वतपण्डितेन । किं बहुना, हिन्दीभाषायां पद्यनिर्माणविधौ परमप्रावीण्यमवाप्ता इमे ।

यद्यप्येतेषां कविवराणां विषये बहु वर्णनीयं वर्तते; किन्तु लघुग्रन्थमालायां चत्वारिंशप्रसूनतया प्रकाश्यमानेऽस्मिन् ग्रन्थे स्वपितरमधिकृत्य विस्तृतपरिचयप्रदानाय समुत्सुकमप्यहमिदं प्रकरणमुपसंहरन् विश्वसिमि, अनुरुन्धे च यद् विद्वांसोऽस्याः पञ्चमुखीटीकाया अनुशीलनेन, विशेषतश्च नारायणीसंस्कृतव्याख्या-आलोडनेन च **पण्डितनारायणपतित्रिपाठिविषये** स्वत एव मूल्याङ्कनं विधास्यन्तीति ।

यथा पूर्वमेव प्रतिपादितं यदेभिः संस्कृतभाषायां सहस्राधिकानि पद्यानि विरचितानि, तेष्वेका महाकाली-महालक्ष्मी-महासरस्वतीरूपा नवदुर्गात्मिका **'देवीचतुर्दशशती'** इत्याख्या कृतिरस्माकं दौर्भाग्यात् केनचित्प्रकाशकेन साभ्यर्थनं प्रकाशनार्थं नीता सती प्रमादात् तेनैव विनाशिता—इति ।

यथा ते साहित्यनिर्माणविधौ अनन्यसाधारणा आसन्, तथैव व्याकरण-दर्शनपुराणाद्यध्ययनेन स्वीयवहुज्ञत्वमपि प्रख्यापितवन्तः । गोस्वामितुलसीदासकृतराम-

चरितमानसाख्यकाव्यस्य मर्मवेत्तारः सन्तोऽपि हिन्दीभाषावाङ्मयस्य देव-बिहारी-मतिराम-भारतेन्दु-प्रभृतीनां काव्यान्येभिः कण्ठस्थीकृतानि । वङ्गभाषामयो वसन्त-लताख्य उपन्यासोऽनेन हिन्दीभाषायामनूद्य भारत-जीवनमुद्रणालयात् प्राकाश्यं नीतः । तत्कालीनाः चन्द्रकान्ता-चन्द्रकान्तासन्तति-भूतनाथाद्यनेकग्रन्थनिर्मातारः श्रीदेवकी-नन्दनखत्री-श्रीकिशोरीलालगोस्वामि-श्रीमदम्बिकादत्तव्यासप्रभृतयो लेखका एतेषां परमसुहृद आसन् ।

अत्रावधेयमस्ति यद् मत्पितृचरणा विविधगृहकार्यव्यासक्ताः, पञ्चदेवोपासकाः, सनातनधर्मोक्ताचारविचारनिष्ठाः, परमशिवभक्ताः, त्रिकालसन्ध्यासमुपासकाः, देवर्षिपितृतर्पणाद्यनुष्ठाननिरताः, पार्थिवशिवार्चनविधौ शिवमहिम्नस्तुतिद्वारा शिवा-भिषेकविधातारः सन्तोऽपि तत्तच्छास्त्रपाण्डित्यप्रकर्षमण्डिता आसन्, इति तैर्विरचित-साहित्यानुशीलनेन स्वयमेव सेत्स्यतीति ।

अत्र जिज्ञासुभिरवश्यमेवावधेयमस्ति यत् स्वल्पीस्यां वयसि पितुर्निधनादेतेषां विद्यालये नियमितसंस्कृताध्ययनं न जातम्; तथापि पुरस्ताच्चर्चितो यो हि ज्ञानकोशो विदुषाऽनेनार्जितः, तत्सर्वं स्वस्वाध्यायकत्वं तस्य सम्यक् प्रमाणयति । अतो निदर्शन-भूता इमे विद्यानुरागिभिरवश्यमेवानुकरणीया इत्युपसंहरन्नहं पितृ ऋणात् किञ्चिदानृण्यमनुभवन् विरमामीति—

विदुषां सेवकः—
करुणापतित्रिपाठी

वाराणसी ।
विजयादशम्याम्,
वि० सं० २०४१ ।



पौषे शुक्लदले नभोऽग्निनिधिभूसम्मानिते वैक्रमे
काश्यामद्रिसुतातिथौ द्विजवरो नारायणोऽभूद् बुधः ।
पूतात्मा स रसाङ्कशेवधिशशाङ्कैः सम्मिते वत्सरे
काश्यामेव धनत्रयोदशतिथौ पञ्चत्वमापद्यत ॥

॥ श्रीशौ वन्दे ॥

# भूमिका

## (प्रथम संस्करण में पंचमुखीटीकाकार द्वारा लिखित)

[ १ ]

प्रायः कवि और काव्य के विषय की कुछ चर्चा लिखी जाती है। पर इस महिम्नस्तोत्र के रचयिता श्रीमत्पुष्पदन्ताचार्य्य गन्धर्वराज हैं। हम सब नरदेही लोगों के लिए उनका पता लगाना बड़ा ही कठिन है। फिर भी जो कुछ कथा-वार्ताएँ उपलब्ध हो सकी हैं, वह उनके वृत्तान्त, "पुष्पदन्तोदन्त" में लिख दी गई हैं, जो इस ग्रन्थ के साथ प्रकाशित भी कर दी जाती हैं।

श्रीमहादेव के इस महिम्नस्तोत्र का वास्तविक नाम "घूर्जटि-स्तोत्र" है, जैसा कि इसी में कहा है "घूर्जटेः स्तोत्रमेतत्" (३४)। पर ग्रन्थ के आदि में "महिम्नः" पद का प्रयोग होने से लोक में महिम्नस्तोत्र नाम ही प्रचलित है। सामवेद की तलवकार शाखा की 'केनोपनिषद्' भी अध्याय और प्रथम मन्त्र के आदि में 'केन' पद पड़ने से ही तलवकारोपनिषद् के पर्य्याय (बदले) में 'केनोपनिषद्' प्रसिद्ध है। इसी प्रकार से 'श्यामारहस्य' की स्वरूपस्तुति भी आदि में कर्पूरशब्द पड़ जाने से ही 'कर्पूरस्तुति' कही जाती है।

किसी-किसी पुस्तक के आदि में 'श्रीपुष्पदन्त उवाच' यह पद भी पाया जाता है। यह वाक्य 'शैवागम' किंवा 'शिवरहस्य' का है। क्योंकि उक्त ग्रन्थों में पहिले कवि की कुछ कथा का वर्णन करके तब यह अनादि स्तुति उद्धृत की गई है। इससे इस स्तोत्र की परम प्राचीनता भी सिद्ध है। इस स्तोत्र के बत्तीस ही (३२) श्लोक 'श्रीपुष्पदन्तमुखपङ्कजनिर्गत' (४०) हैं, इनके आगे फलस्तुति वाले श्लोक प्रायः उक्त शैवागम अथवा शिवरहस्य के हैं; क्योंकि उन श्लोकों में बहुत कुछ उलट-फेर अथवा न्यूनता-अतिरिक्तता (कमी-बेशी) पाई जाती है। पर आजकल सर्वत्र महिम्नस्तोत्र के श्लोकों की संख्या चालीस (४०) ही मानी जाती है। अतएव इस ग्रन्थ में भी उन्हीं चालीस श्लोकों पर 'पञ्चमुखी टीका' अर्थात् नारायणी टीका, संस्कृतपद्यानुवाद, भाषाटीका, भाषापद्यानुवाद, तथा भाषाबिम्ब नाम की पाँच टीकाएँ इसी इच्छा से लिखी गई हैं कि संस्कृत अथवा हिन्दी भाषा के प्रेमी लोगों को कुछ आनन्द प्राप्त हो और अपनी बुद्धि और वाणी भी पवित्र हो सके, जैसा कि इसी में कहा है—

मम त्वेतां वाणीं गुणकथनपुण्येन भवतः।
पुनामीत्यर्थेऽस्मिन्पुरमथन! बुद्धिर्व्यवसिता ॥ (३) ॥

इन संस्कृत और भाषाटीकाओं में मूल श्लोकों के जो पद उद्धृत किये गए हैं, वे कोष्ठ में ( ) रखे गए हैं और जहाँ कहीं कोई पद ऊपर से लगाना पड़ा है, वहाँ बड़ा कोष्ठ [ ] लगाया गया है। उक्त चालीस श्लोकों से भिन्न और भी जो स्फुट श्लोक मिले हैं, वे भी पद्यानुवाद के साथ इसी लेख के अन्त में लगा दिए गए हैं।

इस स्तोत्र को शैव-सम्प्रदाय के लोग तो श्रुति के समान ही मानते हैं। वरन् वेदाध्ययन की परिपाटी के अनुसार रात्रि में इसका भी पाठ नहीं करते। अन्य लोगों में भी इसका कम आदर नहीं होता। मेरे पूर्वपुरुष पण्डित रामानन्द त्रिपाठी जी ने अपने 'विराड्विवरण' नामक ग्रन्थ में, जो कि संवत् १६१३ वैक्रम में बना था, इस महिम्नस्तोत्र के 'असितगिरिसमं स्यात्' (३२) श्लोक को स्मृति कहकर लिखा है।

इस स्तोत्र की कविता अथवा रचना-शैली की उत्तमता इतने में ही समझ लेनी चाहिए कि इसी स्तोत्र के कर्त्ता पुष्पदन्ताचार्य ने वररुचि अथवा कात्यायन होकर बड़े से बड़े अनेक ग्रन्थ ही नहीं बनाए, वरन् महर्षि पाणिनि के रचित व्याकरण शास्त्र के सूत्रों की न्यूनता भी अपना वार्त्तिक बनाकर दूर कर दिया। पर जैसा आदर इस बत्तीस ३२ श्लोक के स्तोत्र से उनको प्राप्त हुआ, वह अलौकिक ही नहीं, वरन् अन्य ग्रन्थों से अलभ्य ही बना रहा। वास्तव में उनका यह कथन ही बहुत ठीक प्रतीत होता है कि—

'स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम्' (११)

इस स्तोत्र के—'किमीहः किं कायः' (५) इत्यादि लेखों को देखकर कोई-कोई इसे बौद्ध अथवा चार्वाक इत्यादि के समय का मानना चाहते हैं। परन्तु उन लोगों को स्मरण रखना चाहिए कि शाक्यमुनि के पहले से ही नास्तिक मत प्रचलित था। वैदिक मत आस्तिकों का था और उसके विरोधी लोग ही नास्तिक थे। उन्हीं लोगों के मतावलम्बी दैत्यराक्षसादि के साथी बहुतेरे अनार्य्य, म्लेच्छ इत्यादि हुए। फिर उन्हीं में चार्वाक, बार्हस्पत्य आदि मत का प्रचार हुआ और चार्वाक दर्शन का कर्त्ता बना। जो हो पर इन प्रमाणों से इस 'अनौपम्यं मनोहारि' (३९) स्तोत्र का समय नहीं निर्णीत हो सकता। अत एव इस विषय में माथा-पच्ची करना व्यर्थ-सा ही जान पड़ता है। इसलिए यह भार केवल पाठकों के विचार पर निर्भर कर दिया जाता है। आशा है कि यदि वे लोग भी निरन्तर उद्योग करते रहेंगे, तो कभी न कभी यह त्रुटि (कसर) पूरी हो जायगी।

इस छोटे से स्तोत्र पर अनेक टीकाएँ यथासमय बन चुकी हैं, पर वे सब अब प्रायः अलभ्य-सी हो गयी हैं। फिर भी कई एक टीकाएँ प्रचलित हैं। इनमें ३२ श्लोकों पर पण्डित कोमलराम जी की सुबोधिनी टीका है, जो कि साधारण एवं संक्षिप्त

होने पर भी मूलार्थ को प्रकट कर देती है। उसी के अन्त का यह श्लोक प्राचीन टीकाओं का भी पता बतलाता है—

छात्राणां सुखबोधाय नानाटीकानुसारतः।
इयं कोमलरामेण कृता टीका सुबोधिनी॥

और दूसरी टीका 'अद्वैतसिद्धि' नामक वेदान्तविषयक ग्रन्थ के रचयिता तथा 'शरीरिकसूत्र' एवं 'गीता' इत्यादि के भाष्यकार काशीवासनिरत यतिवर 'मधुसूदन सरस्वती' जी की शिव-विष्णवर्थक व्याख्या 'मधुसूदनी टीका' के नाम से प्रसिद्ध है। इसमें ३१ श्लोकों पर हरपक्ष और हरिपक्ष की दुहरी टीका लिखी गयी है। यह टीका बहुत उत्तम और विद्वत्तापूर्ण होने से विद्वान् लोगों के देखने योग्य है। अतः यही टीका इस ग्रन्थ में मूल श्लोकों के बाद रखी गयी है। इसके भी आदि का श्लोक अन्य टीकाओं की सूचना देता है, यथा—

विश्वेश्वरं गुरुं नत्वा महिम्नाख्यस्तुतेरयम्।
पूर्वाचार्य्यकृतव्याख्यासङ्ग्रहः क्रियते मया॥

परन्तु स्वामी महाराज ने अन्त में अपनी टीका को टीकान्तर में ले जाने वालों को मनाकर दिया है, यथा—

टीकान्तरं कश्चन मन्दधीरितः
सारं समुद्धृत्य करोति चेत्तदा।
शिवस्य विष्णोर्द्विजगोसुपर्वणा-
मपि द्विषद्भावमसौ प्रपद्यते[1]॥ ५॥

अस्तु, महतामाज्ञा अशोचनीया तो होती है; परन्तु विचारणीय विषय यह है कि स्वयं तो 'पूर्व्वाचार्य्यकृतव्याख्यासंग्रहः' किया जाय और दूसरों को बहुत बड़ा शपथ देकर वही कार्य करने से रोका जाय यह कैसी बात है? सम्भव है कि किसी दूसरे ग्रन्थ में इस टीका के सार का समुद्धार करने के लिए ऐसे उच्चकोटि के विद्वान् ने अवरूद्ध किया हो; क्योंकि 'भामिनीविलास' के अन्त में पण्डितराज जगन्नाथ ने भी इसी भाव को प्रकट किया है, यथा—

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया।
मदीयपद्यरत्नानां मञ्जूषेषा मया कृता॥

जो हो, नवीन टीकाकार को तो झखमारकर गुरुस्थानापन्न प्राचीन टीकाकारों का अनुसरण अवश्य ही करना पड़ता है। इससे पञ्चमुखीटीकान्तर्गत भाषाटीका में कहीं-कहीं स्वामीजी की सूक्तियों का सहारा लिया गया है और 'त्रयी सांख्यं' (७) पर

१. इस पद्य का क्षेपक होना भी सम्भव है।

तो विशेषरूप से अनुवाद करना पड़ा है। इसके लिए मैं उनकी पवित्र आत्मा से क्षमा प्रार्थी हूँ। क्योंकि इस साहस से यह कार्य किया गया है कि भाषाभाषियों को उसका रसास्वादन मिल सकेगा। तीसरे टीकाकार ब्रह्मानन्द सरस्वती जी हैं, उन्होंने लिखा है कि --

यद्यपि विततव्याख्या मधुसूदनप्रभृतिभिः पुराकारि।
तथापि बालहिताय संक्षिप्ता साऽधुना मया क्रियते॥ १॥

और फिर समाप्ति पर यह लिखते हैं—

महिम्नाख्यस्तवनस्य टीकेयं सुमनोरमा।
ब्रह्मानन्देन संक्षिप्ताऽकारि तुष्यन्तु सज्जनाः॥

इन सब उपर्युक्त टीकाकारों के लेखों से यह बात भलीभाँति स्पष्ट है कि ये सब टीकाएँ अनेक पुरातन टीकाओं को देख-भाल कर लिखी गई हैं। इनसे भिन्न कोई एक शिवरामी टीका भी बनी है; जिसमें एक अर्थ शिवपक्ष में और दूसरा रामपक्ष में लगाया गया है। पर वह टीका ढूँढ़ने पर भी मुझे नहीं मिली। इन सब संस्कृत टीकाओं के अतिरिक्त हिन्दी भाषा में भी इसकी अनेक टीकाएँ गद्य और पद्य की बनी एवं बहुतेरी छप भी चुकी हैं। केवल हिन्दी ही नहीं; वरन् भारतवर्ष भर के प्रत्येक प्रान्त की अवान्तर भाषाओं में भी[1] इस स्तोत्र पर अनेक टीका-टिप्पणियाँ लिखी गई हैं और वे सब प्रायः उन सब प्रान्तों में सादर प्रचलित हैं। इसका कारण यही है कि यद्यपि यह श्री महादेवजी का स्तोत्र है; तथापि प्रत्येक सम्प्रदाय अथवा सभी मतावलम्बियों के काम का है। इसी से इस देश के प्रत्येक प्रान्त में महिम्न का बड़ा प्रचार है। एक यह बात भी इसकी प्राचीनता का विशेषद्योतक है।

इस स्तोत्र के अन्त में यद्यपि एक श्लोक हरिणीछन्द एवं दो पद्य मालिनी छन्द के हैं, पर इसमें मुख्यतः शिखरिणी-छन्द की ही प्रधानता है। सम्भव है कि शिखरिणी-छन्द का प्रयोग पहले पहल इसी स्तोत्र में हुआ हो; क्योंकि इसी स्तोत्र की देखा-देखी और भी अनेक महिम्नस्तोत्रों का निर्माण हुआ है, जिनमें यही शिखरिणी छन्द पाया जाता है। शिवमहिम्न १, विष्णुमहिम्न २, गणेशमहिम्न ३, राममहिम्न ४ एवं कालिकामहिम्न ५ इत्यादि सभी शिखरिणी छन्द के रंग में पगे हैं। इसी से कुछ लोग इस छन्द को 'महिम्न-छन्द' भी कहा करते हैं। बात यह है कि जब कोई अनूठा ग्रन्थ बन जाता है, तब उसका अनुकरण करनेवाले अवश्य ही खड़े हो जाते हैं। जैसे—श्रीमद्भगवद्गीता के जोड़ (आधार) पर ईश्वरगीता और व्यासगीता[1], कूर्मपुराण में अगस्त्यगीता तथा रुद्रगीता, वाराहपुराण में शिवगीता,

---

१. लखनऊ के कान्यकुब्ज प्रकाश यन्त्रालय में एक उर्दू और हिन्दी की टीका वै० सं० १९४३ की छपी मुझे काशी के प्रसिद्ध छुन्नाजी कर्मकाण्डी से मिली है।

पद्मपुराण में रामगीता, अध्यात्मरामायण में कपिलगीता और अष्टावक्रगीता एवं अवधूतगीता आदि अनेक गीता उदित हो गईं। यों ही रावणकृत शिवताण्डव की देखा-देखी मेरे पूर्वज पण्डित रामानन्द त्रिपाठीजी का रुद्रताण्डव तथा कृष्णताण्डव और कालीताण्डव आदि बनते गए। महाकवि कालिदास के 'मेघदूत' काव्य बनने पर 'हंसदूत', 'कोकिलदूत' आदि अनेक दूतकाव्यों का प्रादुर्भाव हो गया। इसी प्रकार से इस महिम्नस्तोत्र ने भो अनेक सुकवियों से अनेक देवी-देवताओं के महिम्नस्तोत्र बनवा डाले। बात भी ठीक ही है। महिमा का गाया जाना ही सर्वत्र प्रसिद्ध है, और यह स्तोत्र भी ऐसे-वैसे जनसाधारण के नहीं वरन् एक गन्धर्वराजाचार्य्य का रचा है। फिर अबतक सङ्गीतविद्या के रसिक लोग प्रायः इस स्तोत्र को गाते तथा वीणा, श्रीतार (वीन-सितार) आदि बाजों में बजाते हैं। सम्भव है कि इसी स्तोत्र ने महिमा गाने की प्रथा (चाल) यदि चलाई हो तो कोई आश्चर्य नहीं। इसी से पुस्तक की सहायता त्याग कर एकाग्र-चित्त हो इस स्तोत्र के कण्ठस्थ पाठ करने का उल्लेख किया गया है, यथा—

कण्ठस्थितेन पठितेन समाहितेन।
सुप्रीणितो भवति भूतपतिर्महेशः॥ (४०)।

श्री महादेवजी की जिन कथाओं का पुराणों के अनेक अध्यायों में वर्णन किया गया है, उनका इस स्तोत्र के एक-एक श्लोकों में जिस उत्तमता के साथ दर्शाया है। उसे सहृदय विज्ञ भक्तजन ही समझ सकते हैं। अस्तु, इस स्तोत्र के श्लोकों की अकारादि-सूची में जहाँ-जहाँ की कथाएँ मिल सकी हैं; वे पुराणादि की सूचना के साथ लगा दी गई हैं। आशा है कि यदि कदाचित् कोई उनका भी मिलान करेगा, तो उसे विशेष आनन्द प्राप्त हो सकेगा।

इस महिम्नस्तोत्र के अन्त में तीन श्लोक अर्थात् ४१,४२,४३ भी लगा दिए गये हैं, क्योंकि प्रायः उनमें किसी-किसी का कोई-कोई पाठ भी करते हैं और तद्भिन्न अन्य भी तीन वेद श्लोक हैं, जो सानुवाद लिख दिए जाते हैं—

यथा—

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः।
अर्पिता तेन देवेशः (मे देवः) प्रीयतां मे सदाशिवः॥ (परमेश्वरः४१)
वाचामय पूजा यही, अरपों सिव पद माँहि।
श्री परमेश्वर (पारवतीपति) याहि ते, मो पर नित हरखाँहि॥ ४१॥

तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर।
यादृशोऽसि महादेव! तादृशाय नमो नमः॥ ४१॥
जानो तुमरो तत्त्व नहि, कस हौ गिरिजानाथ?
जैसो हौ तैसो नमौं, महादेव धरि माथ॥ ४२॥

एककालं द्विकालं वा त्रिकालं यः पठेन्नरः।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ४३ ॥

एकवार दुइबेर इहि, पढ़ त्रिकाल नर जोय।
सबहि पापते छूटिकै, सिवपुर पूजित होय ॥ ४३ ॥

शिवरहस्य में इस महिम्न के सर्वोत्तम बत्तीसवें (असित गिरिसमम् ३२) श्लोक के स्थान पर निम्नलिखित श्लोकों को लिखा है, पर इनका क्षेपक होना मानना ही पड़ेगा; क्योंकि स्कन्दपुराणीय शिवरहस्य में तो २७।२८ श्लोकों के मध्य में ये दो श्लोक देख पड़ते हैं और विचार करने पर असंगत और सर्वथा अप्रासङ्गिक जान पड़ते हैं। २६वें से लेकर २९वें श्लोक तक यद्यपि पद्य पृथक् हैं; पर कलापक की भाँति चारों के ही संघटित करने पर अष्टमूर्त्ति-मंत्रों का उद्धार प्रकार टीका में दिखाया गया है। तदनुसार इन दोनों श्लोकों का मध्य में घुस जाना वैसा ही अनुचित ज्ञात होता है। जैसे हर-गौरी के वार्तालाप में हमारे कवि पुष्पदन्ताचार्य्यजी का प्रवेश हुआ था[1]। अस्तु, जो हो; पर श्लोकों को तो श्रवणगोचर करना आवश्यक है; क्योंकि शिवस्तुति है—

सतां वर्त्म त्यक्त्वा श्रुतिसमधिगम्यं सहभुवं
घृणामप्युन्मूल्य स्वजनविषयस्नेहगुणिताम्।
द्विजः कश्चित्पादे पितरमथ राद्धे त्वयि विभो!
मनुष्यत्वं सद्यस्त्रिदशपरिणामेन विजहौ ॥ १ ॥

वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न क्वापि क्षणमपि भवन्तं प्रणतवान्।
नमन्मुक्तः प्रम्प्रत्यहमतनुगर्वाद-(रग्रेप्य) नतिमा-
नितीश! क्षन्तव्यं तदिदमपराधद्वयमपि ॥ २ ॥

इनका भी पद्यानुवाद ले लीजिए—

तजिकै पथ सज्जन साधुनकैं,
जिहि वेद पुरान भलो बतलावत।
करि दूरि दया सहजो अपनी,
निज लोग सनेह सनी मन भावत॥
द्विज कोउ पिता पद पंकज काटि,
विभो शिव शंकर! तोहि रिझावत।
तुरतै तनु मानुष के बदले,
सुरदेह लह्यो महिमा समुझावत ॥ १ ॥

---

१. देखिये 'पुष्पदन्तो-दन्त' पृ० ३।

वपु धारनते अनुमानत हौं,
नहि पूरब जन्महि कीन्ह प्रनामू।
त्रिपुरान्तक! मैं तुमको कबहूँ,
सब सोचि फिरौ मनही मन ठामू॥
नमतै अब मुक्त विदेह भयौं,
करिहौं नहि आजुते फेरि प्रनामू।
अपराध हमार छमो यह दोय,
करौं विनती जगदीस! निकामू॥ २॥

इस दूसरे श्लोक को अलङ्कार विषयक प्रसिद्ध 'कुवलयानन्द' नामक ग्रन्थ में भी उद्धृत किया गया है। यों ही एक पद्य यह भी दृष्टिगोचर होता है—

जातस्य जायमानस्य गर्भस्थस्यैव देहिनः।
मा भूच्च तत्कुले जन्म यत्र शम्भुर्न देवता॥
जे जममे वा होंहिगे, गर्भ में रहै (जो) कोय।
इष्ट जहाँ शिव नहीं, तहाँ जन्म नहि होय॥

अब मैं पाठकों की सेवा में 'असितगिरिसमम्' (३२) का भी अनुवाद समर्पण कर देता हूँ, आशा है इसका आस्वादन भी स्यात् रुचिकर हो—

"असितगिरि समं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्व्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश! पारं न याति॥३१॥

कज्जल कज्जल-पर्वत को करि,
सज्जल सिंधु बनैं मसिदानी।
लेखनि कल्प तरूनकि डारिन,
पत्र जहाँ पृथिवीहि बखानी।
लेकरिके इनको निसि वासर,
तो गुन लेखन मांहि सिरानी।
पार न पाइ सकी जब सारद,
ईश! तबै अतिसै अकुलानी॥३२॥

अच्छा एक नमूना उर्दूदां लोगों की जबांका है—

दवायत बने जबकि सारां समुन्दर,
बने रोशनाई बड़े नील-गिरकी।
जिमी तख्त कागद लिखै शारदा नित्
नहीं खातमा हो तुमारे गुनों का॥३२॥

अब आजकल अंग्रेजीदां विद्वानों की भी बात बहुत चढ़ी-चढ़ी समझी जाती है, जरासी इनकी भी बानगी देखनी चाहिए—

सी इंकपाट् इंक हो नीलगिर का,
वनै प्येन् कलपट्री के जब्र ब्रेंचका।
करै राइटिंग शारदा हर मिनट में,
नहीं (नाट्) एंड पावै तुमारे गुनों में ॥३२॥

**बंगल भाषा की हिन्दुपत्रिका के वर्ष १६ संख्या से उद्धृत-वङ्गानुवाद—**

हे ईश ! नीलाद्रि मसी, सिन्धु मसी पात्र,
कल्पतरु शाखा हय लेखनीठि तत्र।
पृथ्वी यदि पत्र हय, एई उपादान चय,
निये यदि सरस्वती सदा लिखे यान,
तथापि तव गुणेर अन्त नहि पान ॥३२॥

यों ही यदि ढूंढ-खोज की जाय तो अनेक भाषा-भाषियों की सूक्तियों का संग्रह हो सकता है; परन्तु पाठक महोदयों का जी घबड़ा देना ठीक नहीं। इससे अब इस लेख की इतिश्री कर देना आवश्यक है।

अन्त में सविनय निवेदन है कि भूल-चूक होना मनुष्य-स्वभाव-सुलभ विषय है। अतः इस छोटे से स्तोत्र की टीका आदि में जो कुछ त्रुटियाँ रह गई हैं, उन्हें हमारे विज्ञ पाठकगण सुधारने की दया अवश्य ही दरसावेंगे और इस भगवत्स्तुति को घी का लड्डू टेढ़ा भी होने पर स्वादिष्ट ही समझने की नीति का अवलम्बन करेंगे। अतः भाव और भाषा की अशुद्धियों के शोधन का भार तो पाठकों के ही आधीन है[१]।

---

१. विशेष—यह कि जब शिव-शक्ति का संयोग नित्य है तो "शिवमहिम्नस्तोत्र" के साथ "शक्तिमहिम्नः स्तोत्र का" संयोजित होना उपयुक्त समझ पड़ने से शिखरिणी छन्द में न होने पर भी इस ग्रन्थ का सहयोगी वा सहपाठी रक्खा जाना आवश्यक हुआ है।

# पुष्पदन्तोदन्त

## (गन्धर्वराज श्रीमत्पुष्पदन्ताचार्य्यजी का वृत्तान्त)

[ २ ]

श्रीजगदीश की लीला अपरम्पार है। उसकी क्या इच्छा है, इसे वही जानता है। दूसरे की क्या सामर्थ्य है, जो बता सके। जब कभी-कभी प्राच्य देशों का अभ्युदय होता है, तब सारा संसार उन्हीं का अनुकरण करने लगता है, जैसा कि कहा भी है–'गतानुगतिको लोकः'। अस्तु, आजकल पश्चात्त्य देशों की ही दशा सुधरी है। अतएव सभी की इच्छा पाश्चात्त्य रीतियों की ओर ही लालायित होने लगती है। आज एक ही बात का उदाहरण (नमूना) दिखाना चाहता हूँ। पाश्चात्त्यरीति है कि प्रत्येक ग्रन्थ में, चाहे वह छोटा हो अथवा बड़ा हो, पर ग्रन्थकार का जीवन-चरित और कुछ समय इत्यादि की भी चर्चा अवश्य लिख दी जाती है। बस इसी प्रथा के अनुसार आजकल इस भारतवर्ष में भी वही चाल निकल पड़ी है। वास्तव में यह रीति प्रशंसनीय है। पर अड़चन की बात तो यह हो जाती है कि पाश्चात्त्य ग्रन्थकार लोग अभी प्रायः दो तीन सहस्राब्दियों के अन्तर्गत हैं। अतएव उन लोगों को इतिवृत्त संग्रह करने एवं कालनिर्णीत होने में विशेष प्रयास नहीं उठाना पड़ता। पर इस देश के प्राचीन कवियों का पुरातत्त्व अन्वेषण करने में बड़ी-बड़ी कठिनाइयों का सामना करना पड़ता है।

अन्यदेशीय आधुनिक विद्वान् लोग जो इस देश के ग्रन्थकारों का निर्णय करने लगते हैं, तब उनके विचार में यहाँ के "आदिकवि" भगवान् वाल्मीकि अथवा वेदव्यास भी (हजरत) ईसा के पूर्व छठी किंवा आठवीं शताब्दी के बताए जाते हैं और कहाँ तक कहा जावे, अपौरुषेय वेद भी तीन सहस्र वर्ष के भीतर ही ठहराए जाते हैं। तो सोचिए इस ऊटपटांग प्रलाप से निर्णय होना तो दूर रहा; अगाध संशयरूपी ह्रद में गोते लगाने पड़ते हैं।

सच है जब कि यह सृष्टि ही अभी पाँच सहस्र वर्ष के भीतर की समझी जाती है, तो इसके पहिले "आसीदिदं तमोभूतम्" से भिन्न दूसरा क्या कहा जा सकता है? जो हो, पर यदि विचार की दृष्टि से देखा जाए, तो जब से इस देश पर विदेशीय, विधर्मी, यवन-म्लेच्छादिकों पश्चिमवासियों के आक्रमण होने लगे, तब से यहाँ के कितने ही संस्कृतभाषा के अपूर्व ग्रन्थरत्न खो गए। अब उनका मिलना कठिन ही नहीं; वरन् सर्वथा असम्भव हो गया है। इसी से निर्णय करने के लिये जितनी सामाग्री (मसाला) की आवश्यकता पड़ती है, वह उतनी सब यदि नहीं प्राप्त हो सकती, तो

बतलाइए कि समय का निर्णय कैसे किया जाए ? क्योंकि आज मैं जिसका उल्लेख करना चाहता हूँ--बहुत ढूँढने पर भी कोई ऐसा प्रमाण नहीं प्राप्त हुआ, जिससे पुष्पदन्त के समय का ठीक-ठीक निर्णय कर दिया जाय। अब जीवनचरित्र के विषय में यह वक्तव्य है कि "कथासरित्सागर" में जो जो कुछ पुष्पदन्त का वर्णन पाया जाता है, वह उनके दूसरे जन्म की कथा है। उस सयय वे वररुचि के नाम से प्रसिद्ध हुए थे और उन्हीं का उपनाम कात्यायन भी पड़ा था, जैसा कि उक्त ग्रन्थ के द्वितीय तरंग का प्रथम श्लोक देखने से स्पष्ट ज्ञात हो जाता है, यथा---

'ततः स मर्त्यवपुषा पुष्पदन्तः परिभ्रमन्।
नाम्ना वररुचिः किञ्च कात्यायन इति श्रुतः॥'

इस श्लोक में 'मर्त्यवपुषा' कहने ही से पुष्पदन्त का मनुष्ययोनि से भिन्न अर्थात् गन्धर्वराज होना प्रकट है। उपर्युक्त 'कथासरित्सागर के' प्रारम्भ में ही 'कथापीठ' नामक प्रथम-लम्बक के आठ तरंगों में श्री पुष्पदन्त की कथा विस्तारपूर्वक वर्णित है, उसी कथाभाग को संक्षिप्तरूप से अपने प्रेमी पाठकों के अवलोकनार्थ उद्धृत कर देता हूँ।

**कथासरित्सागर का पुष्पदन्तोदन्त—**

एक बार परम रमणीय कैलाश शिखर पर जगदम्बा पार्वतीजी के आग्रहवश उन्हीं का मान छुड़ाने के लिए भगवान् शङ्करजी अनेक प्रकार का विचित्र इतिहास कहने लगे। उस बेला नन्दी नामक गण इसलिए द्वार पर बैठाया गया था कि कोई भी भीतर नहीं जाने पाए, इसी में—

प्रसादवित्तकः शम्भोः पुष्पदन्तो गुणोत्तमः।
न्यषेधि च प्रवेशोऽस्य नन्दिना द्वारि तिष्ठता॥ १॥ ४९॥

पुष्पदन्त नामक महादेवजी का कृपापात्र गण बिना कारण ही द्वार पर रोक-टोक देखकर अपने योगबल से भीतर घुस गया और वहाँ पर पहुँच कर सातों विद्याधरों की अद्भुत कथा सुनता रहा। तदनन्तर अपनी पत्नी जया के पास जाकर उससे सब कह दिया। उसके पेट में वह बात नहीं पच सकी। उसकी पत्नी ने सब कथा भगवती पार्वतीजी से कह सुनाई। फिर पार्वती ने शिवजी से कहा कि जिस कथा को आपने गुप्तरूप से सुनाया था, उसे तो जया भी जानती है। इस पर भगवान् ने प्रणिधान करके विचारा तो पुष्पदन्त की सारी करतूत कह सुनाया। तब तो श्रीपार्वतीजी ने क्रोध करके पुष्पदन्त को मनुष्य होने का शाप दे दिया। फिर उसके लिए सानुरोध प्रार्थना करने पर उसके परममित्र माल्यवान् को भी वही शाप मिल गया। तदनन्तर जया के बहुत गिड़गिड़ाकर विनती करने पर आज्ञा मिली कि—

विन्ध्याचल पर सुप्रतीक नामक यक्ष काणभूति नामा पिशाच हुआ है। उसे देख जाति को (पूर्वजन्मवृत्तान्त का) स्मरण करके जब पुष्पदन्त सब कथा कहेगा, तो उसका शापोद्धार होगा। और काणभूति से जब माल्यवान् सुनेगा तब काणभूति के मुक्त हो जाने पर इस कथा को लोक में प्रसिद्ध करके माल्यवान् भी शाप से छूट जाएगा। इस प्रकार से शापोद्धार बताकर भगवती के चुप होते ही वे दोनों गण बिजली की गति के समान तुरत ही अन्तर्धान हो गये।

अथ जातु याति काले गौरी प्रपच्छ शङ्करं सदया।
देव मया तौ शप्तौ प्रमथवरौ कुत्र भुवि जातौ ॥ ६३ ॥

अवदच्च चन्द्रमौलिः कौशाम्बीत्यस्ति या महानगरी।
तस्यां स पुष्पदन्तो वररुचिनामा प्रिये जातः ॥ ६४ ॥

अन्यच्च माल्यवानपि नगरवरे सुप्रतिष्ठिताख्ये सः।
जातो गुणाढ्यनामा देवि तयोरेष वृत्तान्तः ॥ ६५ ॥

अर्थात्—इसके अनन्तर कुछ काल बीत जाने पर जगदम्बा पार्वतीजी ने दया से आर्द्रचित्त होकर श्री महादेवजी से पूछा कि हे देव! मेरे द्वारा शापित वे दोनों गणश्रेष्ठ भूमण्डल पर कहाँ उत्पन्न हुए? इस पर भगवान् चन्द्रमौलि ने कहा कि हे प्रिये! जो कौशाम्बी नाम की महानगरी है, उसी में पुष्पदन्त, 'वररुचि' नाम से उत्पन्न हुआ और माल्यवान् भी सुप्रतिष्ठित नामक उत्तम नगर में 'गुणाढ्य' नाम से उत्पन्न हुआ (है)। हे देवि! उन दोनों का यही वृत्तान्त है।

( प्रथम तरंग )

कौशाम्वी नगरी में सोमदत्त अथवा अग्निशिख नामक ब्राह्मण की पत्नी वसुदत्ता के गर्भ से वररुचि का जन्म हुआ। उसका पिता अत्यन्त बचपन में ही सुरधाम को सिधार गया। इससे माता ने बड़े कष्ट से उसका पालन-पोषण किया। एक बार वेतसपुर के निवासी देवस्वामी का पुत्र इन्द्रदत्त और करम्भक का पुत्र व्याडि—दोनों भाई उसके घर पर रात भर टिकने के लिए आए। उसी रात में मृदंग की ध्वनि सुनकर वररुचि ने अपनी माता से नाटक देखने के लिए आज्ञा माँगी और यह भी कहा कि मैं लौट आने पर तुमको सब दिखा-सुना दूँगा। इस पर इन्द्रदत्त और व्याडि दोनों ही बड़े विस्मित हुए। तब वसुदत्ता ने कहा कि यह लड़का एकश्रुतिधर है। अतएव इसके विषय में आप लोग कुछ सन्देह न करें। फिर उन दोनों ने परीक्षा करने के लिए प्रातिशाख्य का पाठ किया, वररुचि ने उसे सुना दिया। तदनन्तर उन दोनों के साथ जाकर अपने पिता के मित्र नन्द नामक नट का अभिनय देखा। फिर घर पर आकर अपनी माता के सामने ज्यों का त्यों कर दिखलाया। इस पर उन दोनों को बड़ी प्रसन्नता हुई। क्योंकि जब उन दोनों ने विद्या के निमित्त तपस्या की थी, तब

भगवान् स्वामि कार्तिकजी ने वरदान किया था कि पाटलिपुत्र (पटना) में वर्ष नामक उपाध्याय से तुम लोग विद्या प्राप्त करोगे। शंकर-स्वामी नामक ब्राह्मण के वर्ष और उपवर्ष[1] नामक दो पुत्र थे। उनमें वर्ष तो दरिद्र और मूर्ख था, पर उपवर्ष धनी तथा पण्डित था। उसी की स्त्री के तिरस्कार करने से वर्ष ने विद्या प्राप्त करने के हेतु बड़ा कठोर तप किया। उस पर प्रसन्न होकर श्रीस्वामिकार्तिकजी ने समस्त विद्याओं को प्रकाशित करके कहा कि जभी तुम एक श्रुतिधर को पाना तभी अपनी विद्या को प्रकाश करना। इसी से जब इन्द्रदत्त और व्याडि उसके घर पर गए, तब वर्ष की भार्या ने कहा कि, जबतक कोई एकश्रुतिधर नहीं आवेगा, तबतक ये अपनी विद्या का प्रकाश नहीं करेंगे। बहुत ढूँढ़ने के अनन्तर वररुचि को एकश्रुतिधर पाकर उन दोनों के हर्ष की सीमा नहीं रही। फिर उन लोगों ने वसुदत्ता को सब समाचार सुना कर एवं कुछ धन भी देने के अनन्तर वररुचि को पढ़ाने के लिए माँगा। इस पर वसुदत्ता ने कहा कि जब यह लड़का उत्पन्न हुआ, उस समय आकाशवाणी हुई थी कि यह बालक एकश्रुतिधर होगा और वर्ष से विद्या पाएगा एवं व्याकरण-शास्त्र का आचार्य होगा और इसे वही रुचेगा जो कुछ वर (अच्छा) होगा। अतएव इसका नाम वररुचि पड़ेगा। इसके लिये मैं तभी से सोच करती हूँ कि वह वर्ष उपाध्याय कहाँ है? पर आज तुम लोगों के मुख से सब बातें जानकर मेरा भी परितोष हो गया। अब यह तुम लोगों का भाई है। इसे अपने साथ ले जाओ। इसमें कुछ हानि नहीं है। इस प्रकार से वररुचि की माता का कथन सुनकर वे दोनों ही परम आह्लादित हुए। फिर वररुचि का यज्ञोपवीत संस्कार करके उसे वेद पढ़ने का अधिकारी। बनाया इसके बाद वे तीनों जन वर्ष उपाध्याय के पास पहुँचे। इन तीनों को देखकर वह बहुत ही प्रसन्न हुआ। समस्त वेद-वेदांग उन सबों को पढ़ा दिया; क्योंकि वररुचि एकश्रुतिधर, व्याडि द्वि-श्रुतिधर और इन्द्रदत्त त्रि-श्रुतिधर था—

सकृच्छ्रुतं मया तत्र द्विःश्रुतं व्याडिना तथा।
त्रिःश्रुतञ्चेन्द्रदत्तेन गुरुणोक्तमगृह्यत ॥ ८० ॥

वर्ष उपध्याय को पुरवासी लोग मूर्ख ही जानते थे। पर एकाएक जब उसकी विद्या का डंका बजने लगा, तब ब्राह्मण लोग बड़े ही आश्चर्य से उन्हें देखकर प्रणाम करने लगे। सारे (सभी) पटना के रहने वाले बहुत प्रसन्न हुए, यहाँ तक कि वहाँ के राजा नन्द ने भी बड़े आदर के साथ बहुत-सा धन देकर उसका घर भर दिया।

---

१. इन्होंने जैमिनिसूत्र और बादरायणसूत्रों पर भाष्य बनाया है। भगवान् शंकराचार्य ने अपने भाष्य में इनका उल्लेख किया है।

## ( द्वितीय तरंग )

तदनन्तर उपवर्ष की बेटी उदकोशा से वररुचि का विवाह हुआ। उसके पातिव्रत और शुद्धचरित्र पर मुग्ध होकर राजा नन्द ने उसे अपनी धर्म की भगिनी बनाई। फिर वर्ष के पाणिनि नामक एक शिष्य, जो पहले मूर्ख था बाद में श्रीमहादेव जी से वर पाकर अपने एक नये व्याकरण का निर्माण किया और जब वररुचि ने उससे शास्त्रार्थ किया तब शिवजी ने अपने हुंकार से वररुचि का इन्द्रमत वाला व्याकरण भुलवा दिया। तब फिर से वररुचि ने महादेव जी का तपोनुष्ठान करके उन्हीं से नूतन व्याकरण सीखा[1]।

पाणिनी के व्याकरण (की न्यूनता) को (वार्तिक बनाकर) वररुचि ने पूरा किया। इसके बाद इन्द्रदत्त और व्याडि ने वर्ष उपाध्याय से गुरु दक्षिणा माँगने की प्रार्थना की, तब उसने एक करोड़ स्वर्ण (मुद्रा) माँगी। इस पर सम्मति करके तीनों राजा नन्द के पास गुरुदक्षिणा देने के लिए धन माँगने गये। इन लोगों के पहुँचते ही राजा का शरीरान्त हो गया।

## ( तृतीय तरंग )

तदनन्तर इन्द्रदत्त योगबल से राजा के शरीर में घुस गया और इन्द्रदत्त के निर्जीव शरीर की रक्षा के लिए व्याडि नियुक्त हुआ। वह इन्द्रदत्त का (मृत) देह लेकर एक मन्दिर में अगोरता रहा। इसी समय वररुचि ने उसके पास जाकर एक करोड़ स्वर्ण (मुद्रा) माँगी। इस पर शकटाल (र) को जो उस राजा का महामन्त्री था, सन्देह हुआ। उसने आज्ञा दे दी कि जितने भी शव (मुर्दे) नगर में हों, तुरत फुँकवा दिये जायँ। फिर क्या था, व्याडि के बहुत रोकने-छेकने पर भी राजा के कर्मचारियों ने इन्द्रदत्त का शरीर जलाकर राख कर दिया। तत्पश्चात् वररुचि को धन मिला, तब व्याडि तो उसे लेकर गुरुदक्षिणा देने गया और राजा ने जीते हुए योगी ब्राह्मण को फुँकवा देने का दोष लगाकर शकटाल को टाल (हटा) कर वररुचि को ही अपना मन्त्री बनाया। वह भी अपनी पतिप्राणा पत्नी उपकोशा के साथ पटना नगर में रहकर आनन्दपूर्वक राज-काज करने लगा।

## ( चतुर्थ तरंग )

इसके अनन्तर योगानन्द से विरक्त होकर जब वररुचि वन-वन फिरने लगा तो शकटाल ने चाणक्य नामक बड़े क्रोधी ब्राह्मण द्वारा नन्दवंश का नाश कराया। राजसिंहासन चन्द्रगुप्त को दिलवाया। तब वररुचि विन्ध्याचल पर जाकर काणभूति नामक पिशाच से मिलकर सारी कथा का वर्णन करने के उपरान्त बदरिकाश्रम में पहुँचकर योगानल से अपने शरीर को भस्म कर परम दिव्यगति को प्राप्त हुआ।

---

१. वही शिवजी का व्याकरण पाणिनीय व्याकरण कहलाता है—
नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्॥

## ( अग्रिम तरंग )

यह तो वररुचि उपनाम कात्यायन की संक्षिप्त कथा हुई, पर इसके पूर्व ही गन्धर्वयोनि में वह पुष्पदन्त नाम से पैदा हुआ था। उस जन्म का भी वृत्तान्त उक्त ग्रन्थ के सातवें तरंग में इस प्रकार से निरूपित है—

श्रीगंगाजी के तट पर एक अग्रहार नाम का स्थान है। वहाँ पर एक बहुश्रुत गोविन्ददत्त नामक ब्राह्मण रहता था। उसकी स्त्री का नाम अग्निदत्ता था। उसी के उदर से देवदत्त का जन्म हुआ था। एक बार उसी देवदत्त को देखकर प्रतिष्ठानपुर के राजा की कन्या ने पहले दन्त से पुष्प गिराकर सङ्केत बतलाया था।

ततः समीपं तस्याश्च ययावन्तःपुराच्च सः।
सा च चिक्षेप दन्तेन पुष्पमादाय तं प्रति ॥ ६४ ॥

पर वह देवदत्त अपनी प्यारी के दाँत से गिराए हुए फूल का संकेत नहीं समझ सका। अतएव जब वरदान के प्रभाव से वह श्रीमहादेव जी का गण हुआ, तब उसका नाम पुष्पदन्त पड़ा और उसकी सहधर्मिणी भी श्रीपार्वती देवी की जया नामक प्रतिहारी हुई।

प्रियादन्तोज्झितात्पुष्पात्संज्ञां न ज्ञातवान् यतः।
अतः स पुष्पदन्ताख्यः सम्पन्नो गणसंसदि ॥ १०६ ॥
तद्भार्या च प्रतीहारी देव्या जाता जयाभिधा ॥

इस कथा के अवलोकन से यह बात स्पष्ट हो जाती है कि पुष्पदन्त गण होने के पूर्व जन्म में वह देवदत्त नामक ब्राह्मण था। फिर गन्धर्वयोनि प्राप्त करके जब वह महादेव जी का गण हुआ, तब उसका नाम पुष्पदन्त पड़ा। तदनन्तर श्रीपार्वती जी के शाप से फिर मनुष्य हुआ, तब उसका नाम वररुचि अथवा कात्यायन प्रसिद्ध हुआ।

पर इस कथा से पुष्पदन्ताचार्य के समय का कोई प्रमाण नहीं मिलता; क्योंकि यह कौन बता सकता है कि देवदत्त कब पुष्पदन्त हुआ और कितने समय तक श्रीमहादेव जी का गण बना रहा? जो हो पर उक्त कथा से उसी पुष्पदन्त का वररुचि अथवा कात्यायन होना प्रमाणित है। अतएव अब कुछ थोड़ी-सी पौराणिक चर्चा भी सुन-समझ लेनी चाहिए। तब फिर वररुचि के समय (जमाना) की बात छेड़ी जायगी।

श्रीमन्महाभारत के ९वें पर्व के ४९वें श्लोक में लिखा है कि भगवती पार्वतीजी ने भगवान् स्वामिकार्तिक जी की सेवा के लिए इन्हीं पुष्पदन्तजी को अनुचर नियुक्त किया था, यथा—

उन्मादं पुष्पदन्तञ्च शङ्कुकर्णं तथैव च।
प्रददावग्निपुत्राय पार्वती शुभदर्शना ॥

इसी भाँति महाभारत में और भी अनेक स्थलों पर पुष्पदन्त का नाम पाया जाता है, यथा—प० ७, अ० २००, श्लो० ६० में—

अर्णी कृत्वैलपुत्रश्च पुष्पदन्तश्च त्र्यम्बकः ॥ इत्यादि ।

यों ही स्कन्दपुराण के अन्तर्गत काशीखण्ड में पुष्पदन्तेश्वर का उल्लेख हुआ है। इससे यह बात और भी स्पष्ट है।

लिङ्गपुराण के उत्तरार्धभाग के २७वें अध्याय में अभिषेक वर्णन के आवरण देवों में यों कहा गया है।

पुष्पदन्तो महानागो विपुलानन्दकारकः ॥ ११३ ॥
शुक्लो विशालः कमलो बिल्वश्चारुण एव च ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ११४ ॥

कहा जाता है कि पुष्पदन्त का समय बहुत ही पुराना है; क्योंकि स्कन्द-पुराण ऐसे प्राचीन ग्रन्थ में उनके स्थापित महादेव का वर्णन किया गया है, यथा—काशीखण्ड अध्याय ९७वें में भगवान् स्कन्ददेव जी महर्षि अगस्त्यजी से कहते हैं कि 'तुम्हारे कुण्ड के दक्षिण प्रसिद्ध पुष्पदन्तेश्वर हैं, उनसे अग्निकोण पर देवता, ऋषि और गणलोगों के स्थापित अनेक लिङ्ग हैं। पुष्पदन्तेश्वर के दक्षिण परम-सिद्धि देनेवाला सिद्धीश्वर लिङ्ग विराजमान है।

दक्षिणे तव कुण्डाच्च पुष्पदन्तेश्वरः परः ॥ २४६ ॥
तदग्निदिशि देवर्षिगणलिङ्गान्यनेकशः ।
पुष्पदन्ताद्दक्षिणतः सिद्धीशः परसिद्धिदः ॥ २४७ ॥

इन वाक्यों से यह भली-भाँति विदित हो जाता है कि महाभारत एवं पुराणों के निर्माण काल से पूर्व ही पुष्पदन्ताचार्य्य प्रसिद्ध हो चुके थे, क्योंकि इन वाक्यों में उनका नाम जिस ढंग से लिखा गया है, उसे विचारपूर्वक देखने से विज्ञ लोग स्वयं अनुमान कर सकते हैं कि यदि वह प्रसिद्ध न हो चुके होते, तो उनका परिचय दिखाने के लिए कुछ और भी अक्षर अवश्य बढ़ा दिए जाते।

इस स्थान पर इतना और भी निवेदन कर देना उचित जान पड़ता है कि उक्त पुष्पदन्तेश्वर का स्थान आज तक काशीपुरी में अगस्त्यकुण्डा और बंगालीटोला के बीच में पतलेस्सर (पातालेश्वर) महाल कहलाता है। यह भी एक किंवदन्ती सुनी जाती है कि जब पुष्पदन्तजी शापग्रस्त हुए थे, तभी काशीधाम में आकर शिवलिङ्ग की स्थापना करके इस प्रसिद्ध महिम्नस्तोत्र को उन्होंने बनाया था। जो हो पर पाता-लेश्वर के पास ही मन्दिर में पुष्पदन्तेश्वर नाम का विशाल शिवलिङ्ग विद्यमान है और आज भी बहुतेरे महिम्नस्तोत्र के प्रेमी लोग उक्त स्थान पर इसी स्तोत्र से रुद्राभिषेक अथवा सहस्रपाठादि का अनुष्ठान करते-कराते हैं। स्कन्दपुराण में तो अनेक स्थलों पर पुष्पदन्त का नामोल्लेख हुआ ही है; पर प्रभासखण्ड के १८०वें अध्याय में पुष्पदन्तेश्वरलिङ्गमाहात्म्य वर्णन द्रष्टव्य है।

कदाचित् (असदृशी) अयोग्य होवे, तो क्या आश्चर्य है। क्योंकि (ब्रह्मादीनामपि) ब्रह्मा-इत्यादि, देवताओं की भी (गिरः) उक्तियाँ (त्वयि) आपके विषय में (अवसन्नाः) व्यर्थ ही होती हैं, अर्थात् रुक जाती हैं। (अथ) इसके अनन्तर (सर्वः) सभी कोई (स्वमतिपरिणामावधि गृणन्) अपनी बुद्धि की कहता हुआ (अवाच्यः) निन्दा के योग्य नहीं होता। अत एव परिपक्वता तक (ममापि) मेरा भी (स्तोत्रे) आपके स्तुति गान में (परिकरः) उद्यत होना अथवा कमर बाँधना (निरपवादः) दोष लगाने योग्य नहीं हो सकता। तात्पर्य यह है कि किसी के गुण-गान करने का नाम स्तुति है। अतः गुण तभी गाया जा सकता है, जबकि पूर्ण रीति से जान लिया जाय। फिर परमेश्वर के गुणों का अन्त नहीं है। इस कारण से उनके गुणों को कह डालना मनुष्य की शक्ति के बाहर है। ऐसी दशा में स्तुति करना असंभव है। इसी शंका को दूर करके इस श्लोक में यह भाव दर्शाया है कि जो आपकी महिमा का पार नहीं पा सका है, उसकी कही हुई आपकी स्तुति यदि आयोग्य हो, तब तो कुछ आश्चर्य की बात नहीं है। क्योंकि और की कौन बात है, ब्रह्मा-इत्यादि देवताओं की कही स्तुतियाँ भी आपके विषय में यथार्थ (पूर्ण) न हो सकने से रुकी पड़ी रह गईं। अब यह शंका होती है कि यदि समस्त जगत् के सृष्टिकर्ता ब्रह्मादिक भी जिस कार्य को नहीं कर सके तो तुम क्यों ऐसे विषय में उद्यत (प्रवृत्त) हुए हो ? तब उसका उत्तर यह है कि अपनी बुद्धि की दौड़ भर सभी लोग कह सकते हैं। अत एव इस स्तुति-गान में मेरा भी लग जाना दूषित नहीं है। जैसा कि, गोस्वामी तुलसीदास ने भी अपने मानस रामायण में कहा है—

"सब जानत प्रभु प्रभुता सोई। तदपि कहे बिनु रहा न कोई" ॥ इति ॥

### भाषापद्यानुवादः

महिमा बिनु जाने भले, किहु विधि भाषि न जाय।
जहँ ब्रह्मादिक देवकी, बानी व्यर्थ बनाय ॥
निजमति वैभव भरि कहत, लहत दोष नहिं कोय।
याते बिनती मोरिहू, निरपवाद प्रभु होय ॥ १ ॥

### भाषाबिम्ब

बड़ाई आपै की सकत नहिं जानी किमि कहै,
भई ब्रह्माहू की बचन-रचना व्यर्थ जहँ पै।
अपानी बुद्धी कै विभव भरि भावै कहि सबै,
हमारी भी बिन्ती हर ! निरपवादै बनि रहै ॥ १ ॥

पुनरप्यस्तुत्यत्वेनैव भगवन्तं स्तौति पूर्वोक्तं स्वस्य ब्रह्मादिसाम्यमुपपादयन्—

अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥२॥

## मधुसूदनी

अतीत इति–पूर्वोक्तं संबोधनमावर्तनीयम् । तव महिमा सगुणो निर्गुणाश्च वाङ्मनसयोः पन्थानं विषयत्वमतीतोऽतिक्रान्तः । चशब्दोऽवधारणे । अतीत एवेत्यर्थः । अनन्तत्वान्निर्धर्मकत्वाच्च । तथा च श्रुतिः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै० उ० २।४) इति । वागविषयत्वे तत्र श्रुतेः प्रामाण्यं न स्यादित्याशङ्क्याह । यं श्रुतिरप्यपौरुषेय्यपि वेदवाणी चकितं भीतं यथा स्यात्तथा अभिधत्ते, तात्पर्येण प्रतिपादयति । सगुणपक्षेकिञ्चिदप्ययुक्तं मा भूदिति निर्गुणपक्षे तु स्वप्रकाशस्यान्याधीनप्रकाशता मा भूदिति भयम् । केन प्रकारेण । अतद्व्यावृत्त्या सगुणपक्षे न तद्व्यावृत्तिरतद्व्यावृत्तिस्तया । अभेदे नेत्यर्थः । 'सर्वं खल्विदं ब्रह्म' (छा० उ० ३।१४।१), 'सर्वकर्मा सर्वकामः' इत्यादिना सर्वाभेदेनैव भगवन्तं प्रतिपादयति, न त्वेकैकशो महिमानं वदतीत्यर्थः । निर्गुणपक्षे तु न तत् अतत्, अविद्या तत्कार्यात्मकमुपाधिद्वयमिति यावत् । तद्व्यावृत्या तत्परित्यागेन जहद[1]जहल्लक्षणये-त्यर्थः । मायाविद्योपहितचैतन्यशक्तं तत्पदं तत्कार्यबुद्ध्याद्युपहितचैतन्यशक्तं त्वंपद-मुपाधिभागत्यागेनानुपहितचैतन्यस्वरूपं स्वप्रकाशमपि तदाकारवृत्तिमात्रजननेनाविद्या-तत्कार्यनिवृत्त्या बोधयतीवेति न तावता वाग्विषयत्वं मुख्यं तस्येत्यर्थः । अत एव स तादृशः सगुणो निर्गुणश्च महिमा कस्य स्तोतव्यः । कर्तरि षष्ठी । न केनापि स्तोतुं शक्य इत्यर्थः । सगुणस्य स्तोतव्यत्वाभावे हेतुमाह । कतिविधगुणः, कतिविधा अनेक-प्रकारा गुणा यत्र स तथा । अनन्तत्वादेव न स्तुत्यर्ह इत्यर्थः । निर्गुणस्य स्तोतव्यत्वा-भावे हेतुमाह । कस्य विषय इति । न कस्यापि विषयः, निर्धर्मकत्वात् । अत एवा-विषयत्वान्न स्तुत्यर्ह इत्यर्थः । सगुणो ज्ञेयत्वेऽप्यनन्तत्वात् निर्गुणस्त्वेकरूपोऽपि ज्ञेयत्वा-भावान्न स्तुत्यश्चेत्, तर्हि स्वमतिपरिणामावधि गृणन्निति पूर्वोक्तं विरुद्ध्येतेत्यत आह—

---

१. शक्त्युपस्थितार्थे किंचिदंशं परित्यज्य अवशिष्टार्थे लक्षणा जहदजहल्लक्षणा यथा तत्त्व-मसीत्यादौ तत्त्वमिति पदोपस्थितयोः सर्वज्ञत्वकिंचिज्ज्ञत्वांशयोः परित्यागपूर्वकं केवल चैतन्याभेदप्रतिपादनमित्यवधेयम् ।

पदे त्विति। अर्वाचीने नवीने भक्तानुग्रहार्थं लीलया गृहीतं वृषभपिनाकपार्वत्यादि-विशिष्टे रूपे कस्य विदुषो मनो न पतति नाविशति, कस्य वचो नाविशति; अपि तु सर्वस्यापि मनो वचश्च विशतीत्यर्थः। तत्र हिरण्यगर्भस्यास्मदादेश्च सममेव स्तुति-कर्तृत्वमिति, न पूर्वापरविरोधः।

हरिपक्षेऽप्येवम्—अथवा यं अतद्व्यावृत्त्या कार्यप्रपञ्चभेदाच्चकितं भीतं मद्भिन्नत्वेन कार्यप्रपञ्चं मा पश्यत्विति शङ्कमानं श्रुतिरभिधत्ते इति पूर्ववत्। अर्वाचीने पदे तु कमलकम्बुकौमोदकीरथाङ्गकमलालयाकौस्तुभाद्युपलक्षिते नवजलधरश्याम-धामनि श्रीविग्रहे वैकुण्ठवर्तिनि वेणुवादनादिविविधविहारपरायणे गोपकिशोरे वा वृन्दावनवर्तिनि कस्य मनो नापतति, कस्य वचश्च नापतति। अपगतातर्तिविस्तारो यस्मात्तदपतति। संकुचितमित्यर्थः। तव श्रीविग्रहानुचिन्तने तद्गुणानुकथने च विषयान्तरपरित्यागेन विलीयमानावस्थं मनो वचश्चैकमात्रविषयतया संकुचितं भवति, तव श्रीविग्रहे एवासक्तं भवतीति भावः॥ २॥

## नारायणी

हे भगवन्! (तव च) अतः परं भवतो (महिमा) ऐश्वर्यं (वाङ्मनसयोः) वचसो मनसश्च द्वयोरपि। 'अचतुर०' (अष्टा० ५।४।६६) इत्यादिना निपातनात्साधुः। (पन्थानम्) मार्गम् (अतीतः) अतिक्रान्तः, लङ्घितवानेवेत्यर्थः। यतो वाङ्मनसाभ्यामेव सर्वार्थपरिज्ञानं भवितुं शक्यते। अत एव प्रत्यक्षानुमानयोरपि अविषय एवेति सिद्धम्। (यं) त्वन्महिमानं (श्रुतिरपि) वेदपुरुषोऽपि (अतद्व्यावृत्त्या) न तस्य व्यावृत्तिः, अतद्-व्यावृत्तिस्तया, 'नेति नेती'त्यादि वाक्यपरम्पराद्वारा, अथवा 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इत्यादि ज्ञापनरीत्या (चकितं) यथा स्यात्तथा क्रियाविशेषणमिदं (अभिधत्ते) कथयति, सूचयतीत्यर्थः। अर्थात् स्वरूपलक्षणाभावात्तटस्थलक्षणेनैव वक्तु-मुत्सहते, यथा—'नासन्न सन्न सदसन्न महन्न चाणु' इत्यादिकथनद्वारेव स्वाभिप्रायं व्यञ्जयतीति दिक्। (स) महिमा (कस्य) जनस्य (स्तोतव्यः) स्तोतुं योग्यस्स्यात्, अपि तु न कस्यापीति व्यङ्ग्यध्वनिः। एवं च (कतिविधगुणः) तस्य कियन्तो गुणाः सन्तीति याथार्थ्येन ज्ञातुं न शक्यते। तथा च (कस्य विषयः) अपि तु न कस्यापि गोचर इत्यर्थः। (अर्वाचीने) सृष्टि-स्थितिप्रलयादिमुख्यतया आत्मन्यनुग्राह्यके इदानीन्तने (पदे) स्थाने (कस्य मनो वचः च न पतति) नैव प्रसरति, अपितु सर्वेषामपि मनो वाक् प्रसरत्येव। अत्र निष्फलरूपे ईश्वरे स्तुतेरनधिकारित्वं प्रतिपाद्य सफलरूपे सावकाशत्व-मस्तीति स्फुटं दृढीकृतमिति॥ २॥

(तथा चोक्तं स्कन्दपुराणस्थमाहेश्वरखण्डीयकौमारिकाखण्डस्य ३३ अ० 'श्रुतिश्च भीता यं वक्ति किं तस्मात्परमं भवेत्' (श्लो० २०)।

## संस्कृतपद्यानुवादः

न गोचरत्वं महिमा प्रयाति तवेश ! वाणी-मनसोः कदाचित् ।
न वेद वेदोऽपि ततोऽभिधत्ते 'नेती'ति वाक्याच्चकितं सदैव (यमेव) ।
स्तुत्यः कथं स्यान्महिमा त्वदीयः कियद्गुणो वा विषयश्च कस्य ।
आत्मन्यनुग्राह्य पदे न कस्य मनो वचो वा प्रसरत्यवश्यम् ॥२॥

## भाषाटीका

स्तुतिकर्ता अपने स्तुत्य देव से यह स्तुति कर रहा है, अतएव पूर्वोक्त संबोधन का यहाँ पर अध्याहार कर लेना चाहिए । अथवा—

हे भगवन् ! (तव च महिमा) और आपकी महिमा (वाङ्मनसयोः पन्थानं अतीतः) वचन और मन—दोनों ही के मार्ग को लांघ गई है—अर्थात् वाणी और मन भी आपकी महिमा तक कदापि नहीं पहुँच सकते । अत एव (श्रुतिरपि) वेद भी (यं) जिसे (अतद्व्यावृत्त्या) अभेद से ही, अर्थात् यह नहीं यह, अथवा इतना ही भर नहीं—इत्यादि वाक्यों से ही (चकितमभिधत्ते) चकपकाया हुआ सा कहता है । अथवा भयभीत होकर कह रहा है । (स कस्य स्तोतव्यः) भला ऐसी आपकी महिमा को कौन गा सकता है ? क्योंकि (कतिविधगुणः) उसमें कितने प्रकार के गुण हैं ? (कस्य विषयः) किसका विषय हो सकता है ? अर्थात् सभी किसी की शक्ति के बाहर है । फिर भी (अर्वाचीने) नवीन स्तुतिकर्ताओं अर्थात् भक्तों के अनुग्रहार्थं लीलामय शरीरधारी (पदे) स्थान में (कस्य) किसका (मनो वचः न पतति) मन और वचन नहीं पहुँचता है ? तात्पर्य यह कि आपके निर्गुणरूप की महिमा तो वचन और मन—दोनों के ही परे है, क्योंकि वेद भी—"नेति नेति कहि जासु गुन करहिं निरन्तर गान ।" तब भला उसे कौन गा सकता है ? पर हाँ, आपके सगुणरूप में आप वृषभवाहन हैं, आप पार्वती के पति हैं, आप पिनाकधारी हैं—इत्यादि प्रकार की कुछ बातें कहने के लिये मन दौड़ने लगता है । अर्थात् सगुणरूप की ही कुछ थोड़ी सी स्तुति किसी प्रकार से हो सकती है । इससे स्तुति करने की सार्थकता प्रकट होती है ॥ २ ॥

## भाषापद्यानुवाद

बानी मनके पथ परे, महिमा तुमरी नाथ ।
नेति नेति कहि वेद नित, गावत विस्मय साथ ॥
हैं कतेक गुन विषय किमि, कौन सकै तिहि गाय ।
काकी बानी मन नहीं, नये थान पर जाय ॥ २ ॥

## भाषाबिम्ब

बड़ाई तोरी है वचन मनहू के पथ परे,
डराते वेदौ भी चकित बनि भाषै बिनु पते ।
भला कैसे गावे कतिक गुन काको विषय है,
अनोखे थाने पै गिरत मन बानी नहिं कबै ॥ २ ॥

नन्वेवं स्तुत्यत्वेऽपि हरिहरयोः सर्वज्ञयोरनभिनवया स्तुत्या न मनोऽनुरञ्जनं तद्विना न तत्प्रसादस्तं विना फलमिति पुनरपि स्तुतेर्वैयर्थ्ये प्राप्ते सार्थक्यं दर्शयन्स्तौति—

मधुस्फीता वाचः परमममृतं निर्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥३॥

## मधुसूदनी

मध्विति—हे ब्रह्मन् विभो, सुरगुरोर्ब्रह्मणोऽपि वाग्वाणी तव किं विस्मयपदं चमत्कारकारणं किम् । किंशब्द आक्षेपे । नेत्यर्थः । तत्र हेतुगर्भविशेषणमाह । तव कीदृशस्य । वाचो वेदलक्षणा निर्मितवतो निःश्वासवदनायासेनाविर्भावितवतः । कीदृशीः । मधुवत्स्फीताः माधुर्यादिशब्दगुणालङ्कारविशिष्टत्वेन मधुराः । तथा परमममृतं निरतिशयामृतवदत्यास्वाद्याम् । एतेनार्थगतमाधुर्यमुक्तम् । परमेश्वरवाचां शब्दार्थगतयोर्निरतिशयमाधुर्ययोरपि मिथस्तारतम्यं मध्वमृतशब्दाभ्यां द्योत्यते । अयं च वाचामुत्कर्षो महान् यत्र शब्दगुणालङ्कारातिशयं विनार्थगुणालङ्कारातिशय इति यत्र हिरण्यगर्भस्य वाण्यपि न चमत्कारकारणं तत्र का वार्ताऽस्मदादिवाण्या इत्यर्थः । तर्हि किं स्तुत्येत्यत आह—मम त्वित्यादि । हे पुरमथन त्रिपुरान्तक, भवतो गुणकथनपुण्येन एतां स्वां वाणीं पुनामि निर्मलीकरोमीत्यभिप्रायेणैतस्मिन्नर्थे स्तुतिरूपे मम बुद्धिर्व्यवसितोद्यता न तु स्तुतिकौशलेन त्वां रञ्जयामीत्यभिप्रायेणेत्यर्थः । वाङ्नैर्मल्येन मनोनैर्मल्यं नान्तरीयकमिति स्तुतेः सार्थक्यमुक्तम् ।

हरिपक्षेऽप्येवम्—मथ्यतेऽस्मिन्दध्यादीति मथनं गोकुलम्, अथवा मथ्यन्ते आपोऽमृतार्थमिति मथनः क्षीरोदः पुरं मन्दिरं गोकुलं क्षीरोदो वा यस्येति पुरमथनसम्बोधनार्थः । सर्वमन्यत्समानम् । अथवा हे ब्रह्मन्, वाचः सर्वस्या अपि परमममृतं निरतिशयसारं निश्चयेन मितवतः सम्यगनुभूतवतः सुरगुरोर्हिरण्यगर्भादिसर्वदेवतोपाध्यायस्य तव मधुस्फीता मधुरिम्णा व्याप्ता अन्तरा कटुत्वलेशेनापि रहिता वागपि वाग्देवता सरस्वत्यपि किं विस्मयपदम् । नेत्यर्थः । तस्या मद्वाचश्च महदन्तरमतिप्रसिद्धमेव । यद्यप्येवम्; तथापि त्वदिच्छयैव ममेयं प्रवृत्तिरित्याह—ममत्वेतामिति ।

निजगुणकथनपुण्येन ममत्वेतां ममत्वे वर्तमानां संसारसंसर्गकलुषितां वाणीं वाचं एतस्य स्तुतिकर्तुरिति शेषः। पुनामि निष्कलुषां करोमीत्येतस्मिन्नर्थे हे पुरमथन, भवतो बुद्धिर्व्यवसिता यतोऽन्योऽन्यायत्तैव मम प्रवृत्तिरित्यर्थः। श्रुतिश्च भवति "एष उ ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कारयति यमधो निनीषते" इति। स्मृतिश्च—"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" इति। तेन परमकारुणिकस्त्वं शरणागतवाणीपावनपुण्यहेतुस्तुतितत्परं लोकं कर्त्तुं स्वयमेव प्रयतमानो यथा कयापि स्तुत्या प्रसीदसीत्यर्थः॥ ३॥

## नारायणी

(ब्रह्मन्) हे ब्रह्मस्वरूप! (मधुस्फीताः) मधुवन् मधुराः कोमलाः माधुर्यगुणालङ्कृताः (वाचः) वेदादिवचनानि (परमममृतम्) उत्कृष्टसुधासदृशः। क्रियाविशेषणमेव। (निर्मितवतः) कृतवतः (तव) भवतो विषये (सुरगुरोरपि) वाचस्पतेरपि वा किमुतान्येषां (वाक्) वाणी (किं विस्मयपदं) कथमाश्चर्यस्थानं भवितुमर्हति? न कदापीत्यभिप्रायः। यद्येवमेव तर्हि त्वं कथं स्तवने प्रवर्तसे इत्याशङ्क्याह–(पुरमथन!) हे त्रिपुरासुरान्तक! अहं (तु) इति हेत्ववधारणे (एतां) वक्ष्यमाणामात्मीयां (वाणीं) गिरं (भवतः) तवैव (गुणकथनपुण्येन) गुणकीर्तनपुण्यलाभार्थमेव। करणे तृतीया। (पुनामि) पवित्रीकरोमि (इति) हेतोः (अस्मिन्) स्तुतिलक्षणे (अर्थे) प्रयोजने (मम बुद्धिः व्यवसिता) कृतोद्योगा लग्नेत्यर्थः। अत्र ब्रह्मण एवाशेषवाग्जालकर्तृत्वं प्रदर्श्यात्मनश्चौद्धत्यं दूरीकृतम्। 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरोक्तरीत्यनुसारेणात्र ब्रह्मन्निति सम्बुद्धिपदञ्च वाक्कर्तृत्वमेव सूचयति। तथा च शिवपुराणस्थवायुसंहितायाः पूर्वभागे (अ० २३) उक्तम्—

त्वं हि वागमृतं साक्षादहमर्थामृतं परम्।
द्वयमप्यमृतं कस्माद्वियुक्तमुपपद्यते॥१६॥

तथा चान्यदपि तत्रैवोत्तरभागे यथा—

शब्दजालमशेषन्तु धत्ते शर्वस्य वल्लभा।
अर्थस्य रूपमखिलं धत्ते मुग्धेन्दुशेखरः॥

इत्यादिवचनाच्छिवयोरेव वागर्थरूपत्वं प्रतिपादितमित्यवधेयम्।

पद्योत्तरार्द्धभावश्च यथा 'नैषधचरिताख्ये' महाकाव्ये—

'पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव सत्कथा।
कथन्न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति॥'

(नै० च० १।३)

## संस्कृतपद्यानुवादः

परमामृतरूपिणीं गिरं मधुरां निर्मितवान्भवान् स्वयम् ।
अत एव बृहस्पतेरपि वचनं विस्मयतां हि गच्छति ॥
भवतो गुणगानपुण्यतो निजवाचं भगवन् ! पुनाम्यहम् ।
इति कारणतो मया कृता स्वमतिस्त्वत्स्तुतिकर्मधर्मिणी ॥३॥

## भाषाटीका

(ब्रह्मन्) हे ब्रह्मस्वरूप ! (मधुस्फीताः) मधु से भी मीठी अर्थात् बहुत ही मधुर (परममं अमृतं) सर्वोत्तम अमृत के समान (वाचः) वेदादिक वचनों के (निर्मितवतः) रचना करने वाले (तव) आपके विषय में (सुरगुरोः अपि) देवतों के गुरु बृहस्पति की भी (वाक्) वाणी (किं विस्मयपदं) क्या कुछ आश्चर्य का स्थान हो सकती है ? अर्थात् कदापि नहीं । (हे पुरमथन ) हे त्रिपुरासुरान्तक ! मैं (तु) तो (एतां वाणीं) इस अपनी वाणी को (भवतः) आपके (गुणकथनपुण्येन) गुणगानरूपी पुण्य से (पुनामि) पवित्र किया चाहता हूँ । इसीलिए (मम बुद्धिः व्यवसिता) आपकी स्तुति में मेरी बुद्धि लग गई । भाव यह कि—बोलने की प्रक्रिया वेदादिक सुनाकर आप ही ने निकाली है, तब आपके विषय में बृहस्पति का भी कहना कुछ आश्चर्यजनक नहीं हो सकता, हम लोगों की बात क्या है ? इस पर शंका होती है कि जिस विषय में साक्षात् बृहस्पति को कुछ कहने का अवसर नहीं मिलता, उस विषय में तुम क्यों कहने को उद्यत हुए हो ? उस पर कहते हैं कि मैं तो केवल आपके गुणानुवाद के पुण्य से अपनी स्तुति-वाणी को पवित्र कर रहा हूँ । बस इसीलिये मेरी बुद्धि इस विषय में लगी है । यथा—
"निज गिरा पावन करन-कारन राम जस तुलसी कह्यो" ॥ ३ ॥

## भाषापद्यानुवाद

मधुसी मधुरी तुम करी, बानी अमृत समान ।
याते अतिविस्मित बनी, सुरगुरु गिरा सकान ॥
तव गुन गावन पुन्यते, निर्मल करिबे हेत ।
मो (मम) बानी को पुरमथन ! बुद्धि सहारा देत ॥ ३ ॥

## भाषाबिम्ब

बड़ी मीठी बोली अमृत-रस घोली तुम रची ।
भई शंभो ! या में सुर-गुरु-गिरा विस्मय खची ॥
अपनी बानी को करहुँ शुचि गाके तुव गुनै ।
यही हेतू मोरी मति गिरिश ! यामै लगि सनै ॥ ३ ॥

एवं हरिहरयोः स्तुत्यत्वं सफलस्तुतिकत्वं च निरूप्य ये केचित्पापीयांसस्तस्य सद्भावेऽपि विवदन्ते तान्निराकुर्वंस्तौति—

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृ-
त्त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ॥
अभव्यानामस्मिन्वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥४॥

## मधुसूदनी

तवेति—हे वरद ईप्सितप्रद, यत्तव ऐश्वर्यं तद्विहन्तुं निराकर्तुं एके जडधियः केचिन्मन्दबुद्धयो व्याक्रोशीं विदधते। साक्षेपमुच्चैर्भाषणमाक्रोशस्तस्य व्यतिहारो व्याक्रोशी। अन्येन कर्तुमारब्धमन्यः करोति अन्येन चान्य इति कर्मव्यतिहारः। व्याङ्पूर्वात् क्रोशेः 'कर्मव्यतिहारे णच् स्त्रियाम्' इति पाणिनिस्मरणात्। ततः स्वार्थे अञ्' 'णचः स्त्रियामञ्' इति सूत्रात्। ततः स्त्रियां ङीप्। तां व्याक्रोशीमहमहमिकया कुर्वते यत्सर्वप्रमाणप्रमितं तदपि जिघांसन्तीति यत्तद्भ्यां मन्दबुद्धित्वं द्योतितम्। अत एव कर्त्रभिप्राये क्रियाफले विदधातेरात्मनेपदम्। न हि तद्व्याक्रोशीविधानात्तवैश्वर्यव्याघातः; किन्तु तेषामेवाधःपात इत्यर्थः। कीदृशं तवैश्वर्यम्। जगदुदयरक्षाप्रलयकृत् जगत आकाशादिप्रपञ्चजातस्योदयं सृष्टिं, रक्षां स्थितिं, प्रलयं संहारं च करोतीति तथा। अनेनानुमानमुक्तम्। तच्च "अजन्मानो लोकाः" इत्यत्र व्यक्तं वक्ष्यते। तथा त्रयीवस्तु त्रय्याः त्रयाणां वेदानां तात्पर्येण प्रतिपाद्यं वस्तु 'सर्वे वेदाः यत्पदमामनन्ति' इति श्रुतेः। अनेनागमप्रमाणमुक्तम्। तथा गुणैः सत्त्वरजस्तमोभिः' ली (लयात्तै) लोपात्तैर्भिन्नासु पृथक्कृतासु। न तु वस्तुगत्या भेद इत्यर्थः। तिसृषु तनुषु ब्रह्मविष्णुमहेश्वराख्यासु मूर्तिषु व्यस्तं विविच्य न्यस्तम्। प्रकटीकृतमिति यावत्। उपलक्षणं चैतत्सर्वेषामवताराणाम्। एतेन प्रत्यक्षं प्रमाणमुक्तम्, तेन सर्वप्रमाणप्रमितमित्यर्थः। कीदृशीं व्याक्रोशीम्। अस्मिन्नभव्यानां अस्मिंस्त्रैलोक्येऽपि नास्ति भव्यं भद्रं कल्याणं येषां तेऽभव्यास्तेषां रमणीयां मनोहरां वस्तुतस्त्वरमणीममनोहराम्। अमनोहरेऽपि मनोहरबुद्धिभ्रान्तिरभाग्यातिशयात्तेषामित्यर्थः।

हरिपक्षेऽप्येवम्—अथवा अस्मिंस्तवैश्वर्ये अभव्यानां मध्ये जडधियो जडमतेरत्यन्तमपकृष्टस्येत्यर्थः। तस्य वस्तुतोऽरमणीं व्याक्रोशीं विहन्तुं एके मुख्या रमणीयां व्याक्रोशीं विदधत इत्यर्थः। जडधिय इत्येकवचनेन पूर्वपक्षिणस्तुच्छत्वम्, एक इति बहुवचनेन सिद्धान्तिनामतिमहत्त्वं सूचितम् ॥ ४ ॥

## नारायणी

(वरद !) हे वरप्रद ! भगवन् ! (इह) संसारे (एके) केचन (जडधियः) मन्दमतयः, पापनिष्ठा इत्यर्थः। (तिसृषु) त्रिसंख्यासु (गुणभिन्नासु) गुणाः सत्त्वरजस्तमांसि, तैर्भिन्नाः पृथग्भूताः, तासु (तनुषु) शरीरेषु (व्यस्तं) आरोपितं विस्तारितं वा (जगदुदयरक्षाप्रलयकृत्) जगतां भुवनानां उदयः सृष्टिः, रक्षा परिपालनम्, प्रलयो विनाशश्च करोतीति तथा, (त्रयीवस्तु) ऋग्यजुस्सामाख्यवेदत्रयान्तर्गतं (यत्) प्रसिद्धं (तव) भगवतः (ऐश्वर्यं) महिमा (तत् निहन्तुं) विनाशयितुं (अस्मिन्) सर्वज्ञत्वादिगुणगणालङ्कृते तवैश्वर्ये शुद्धबुद्धीनां विदुषां (अरमणीं) मनोरमतारहितां तथा च (अभव्यानां) नीचमतीनां, पापिष्ठानां वा (रमणीं) मनोहारिणीं (व्याक्रोशीं) सापवादनिन्दाम्, अत्र व्याङ्पूर्वात्क्रोशेः 'कर्मव्यतिहारे णच् स्त्रियाम्'' (अष्टा० ३।३।४३) इत्यतः णच् प्रत्यये कृते—'णचः स्त्रियामञ्' (अष्टा० ५।४।१४) ततश्च स्त्रियां ङीप्। (विदधते) कुर्वन्तीति। अत्र पूर्वोक्तपद्य एवात्मनः स्तुतः सावकाशत्वं प्रतिपाद्य इदानीमीश्वरस्य सर्वज्ञत्वसर्वकर्तृत्वादिविषये विप्रतिपद्यमानानामपि केषाञ्चिन्मतं निराकृतमिति ज्ञेयम् ॥ ४॥

## संस्कृतपद्यानुवादः

आरोपितं तिसृषु ते तनुषु प्रभुत्वं<br>
भिन्नासु शङ्कर! गुणैरनघैर्महार्घैः।<br>
उत्पत्तिरक्षणलयादिकरं भवस्य<br>
ब्रह्माच्युतेश्वरसरूपधरं परं यत्॥

हन्तुं तदेव वरदायक! निन्दनीयां<br>
निन्दामभव्यजनमानसराजहंसीम्।<br>
लोके महाजडधियो वकवृत्तयो वा<br>
शम्भो! क्वचिद्विदधते दधते न बुद्धिम्॥४॥

## भाषाटीका

(वरद !) हे वरदायक ! (इह) यहाँ संसार में (एके) कोई-कोई (जडधियः) जडबुद्धिलोग (यत् तव ऐश्वर्यं) जो आपकी ईश्वरता अथवा महिमा है, (तत्) उसे, (निहन्तुं) खण्डन करने को किं वा मिटा देने के लिए (व्याक्रोशीं) सापवाद निन्दा करते हैं विदधते)। आपका ऐश्वर्य कैसा है कि (जगदुदयरक्षाप्रलयकृत्) जगत् की सृष्टि, पालन और संहार का करने वाला है, फिर (त्रयीवस्तु) ऋक्, यजुष् और साम—तीनों ही वेदों से प्रतिपादित वस्तु है और

फिर (त्रिसृषु गुणभिन्नासु तनुषु व्यस्तम्) तीनों ही सत्व-रज तम गुणों से पृथक् हुए शरीरों में फैला हुआ अर्थात् गुणों के अनुसार ब्रह्मा-विष्णु-महेश—रूपों में प्रकट हुआ है। अब निन्दा का विशेषण देते हैं कि (अस्मिन्) इस समस्त गुणों से परिपूर्ण आपके ऐश्वर्य में समझ रखने वालों के लिये (अरमणीं) मनोहारिणी नहीं है, पर (अभव्यानां) नीच बुद्धि वाले अथवा पापनिष्ठ लोगों के लिये (रमणीयां) बड़ी प्यारी है। भावार्थ यह है कि संसार में सभी प्रकार के लोग होते ही हैं—उन्हीं में कोई कोई मन्दमति जन, संसार की उत्पत्ति इत्यादि के करने वाले तीनों वेदों में प्रतिपादित और तीनों गुणों से तीन रूप धारण करने वाले आपके उस सर्व प्रसिद्ध ऐश्वर्य (ईश्वरता) को ही मिटा देने के लिए समझदारों के आगे परम तुच्छ पर नासमझों के लिए बड़ी बाँकी आपकी निन्दा करने लगते हैं। इस श्लोक से संसार में भले और अनभले दोनों का मिला रहना सिद्ध है, जैसे कि—

"भलेउ पोच सब विधि उपजाये।
गनि गुन दोष वेद बिलगाये॥
कहहिं वेद इतिहास पुराना।
विधि प्रपंच गुन अवगुन साना॥"

इस पद्य से इस ग्रंथ के रचना-काल में अनीश्वरवादी नास्तिकों का वर्तमान रहना भी सूचित होता है। कैसी निन्दा करते हैं—उन बातों को आगे वाले श्लोक में स्पष्ट कर दिया है॥ ४॥

## भाषापद्यानुवाद

जगत् सृष्टि रक्षा प्रलय, महिमा करति तुम्हारि।
वेद कहत त्रय गुन धरे, विधि हरि हर तनु धारि॥
वरद! नीच मनभावनी, ताहि मिटावन हेत।
अनुचित (कुत्सित) निन्दा करहि जग, जडमति परम अचेत॥ ४॥

## भाषाबिम्ब

तिहारो ऐश्वर्यै जग स्वजन रक्षा लय करै,
पृथक् ह्वैके सोई त्रिगुनमय तीनो तनु धरै।
यही के मेटै को जगति बहुतेरी अनभली,
बड़ी भारी निन्दा करत जडबुद्धी जन छली॥ ४॥

ये त्वात्मप्रत्यक्षमपह्नुवते त्रयीं चान्यथा वर्णयन्ति, तेऽनुमानेनैव निराकार्याः। तच्चानुमानं क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति जगदुदयरक्षाप्रलयकृदित्यनेन सूचितम्। तत्र पूर्वश्लोकोक्तव्याक्रोशीबीजप्रतिकूलतर्कमुद्भावयन्तः पूर्वपक्षिणो निराकुर्वन् स्तौति। अथवा कीदृशीं व्याक्रोशीं विदधत इत्याकाङ्क्षायां तां वदन् स्तौति—

> किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
> किमाधारो धाता सृजति किमुपादान इति च।
> अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
> कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥५॥

## मधुसूदनी

किमिति—हे वरदेति पूर्वश्लोकात्संबोधनानुषङ्गः। त्वयि विषये कुतर्कस्तर्काभासः कांश्चिद्धतधियः कानपि दुष्टबुद्धीन् जगतो विश्वस्यापि मोहायाऽन्यथाप्रतिपत्तये मुखरयति वाचालान् करोति। कीदृशे त्वयि। अतर्क्यं तर्कागोचरमैश्वर्यं यस्य तस्मिन्सर्वतर्कागोचरे त्वयि यः कश्चित्तर्कः स्वातन्त्र्येणोपन्यस्यते सर्वोऽप्याभास इत्यर्थः। प्रमाणानां स्वगोचरशून्यत्वात् स्वागोचरं स प्रामाण्याभावो युक्त एवेति भावः। कुतर्कमेवाह—किमीह इत्यादिना। स धाता परमेश्वरस्त्रिभुवनं सृजतीति सिद्धान्तमनूद्य तत्र दूषणमाह। खलु किन्तु का ईहा चेष्टा यस्येति किमीहः। तथा कः कायः शरीरं कर्तृरूपं यस्येति किंकायः। क उपायः सहकारिकारणमस्येति किमुपायः। क आधारोऽधिकरणमस्येति किमाधारः। किमुपादानं समवायिकारणं भुवनाकारेण निष्पाद्यमस्येति किमुपादानः। सर्वत्र किंशब्द आक्षेपे। इतिशब्दः प्रकारार्थः। चशब्दः शङ्कान्तरसमुच्चयार्थः। कुलालो हि घटं कुर्वन् स्वशरीरेण व्याप्रियमाणेन चक्रभ्रमणादिचेष्टया सलिलसूत्राद्युपायेन चक्रादावाधारे मृदमुपादानभूतां घटाकारां करोति, एवं जगत्कर्ताऽपि वाच्यः। तथा च कुलालादिवदनीश्वर एवेत्यभिप्रायः। घटादिदृष्टान्तेन खलु क्षित्यादेः सकर्तृकत्वं साध्यते। तथा च घटादिकर्तरि कर्तृत्वौपयिकं यावद्दृष्टं क्षित्यादिकर्तर्यपि तावदवश्यं स्वीकर्तव्यम्। दृष्टान्तस्य तुल्यत्वात्। तथाचोभयतःपाशा रज्जुः। तदङ्गीकारेऽस्मदादितुल्यत्वादनीश्वरत्वं तदनङ्गीकारे च कर्तृत्वानुपपत्त्याऽसिद्धिरेवेत्येवंरूपः कुतर्क इत्यर्थः। सिद्धान्तं वदन् कुतर्कं विशिनष्टि—अनवसरदुःस्थः। नास्त्यवसरोऽवकाशोऽस्येत्यनवसरः, अत एव दुःस्थो दुष्टत्वेन स्थितः विचित्रनानाशक्तिमायावशेन सर्वनिर्मातरि सर्वतर्कागोचरे त्वयि नास्ति कुतर्कावसर इत्यर्थः। तथा चोक्तम् ‘अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्’

इति। न च घटादिकर्तरि यावद्दृष्टं तावत् क्षित्यादिकर्तर्यपि साधनीयम्, व्याप्ति विना सामानाधिकरण्यमात्रस्यासाधकत्वात्। अन्यथा महानसे धूमवह्न्योर्व्याप्तिग्रहण-समये एव व्यञ्जनादिमत्त्वमपि दृष्टमिति पर्वतादावपि तदनुमानं स्यात्। तस्मात् साधर्म्यसमा जातिरेषा। स्वव्याघातकत्वादनुत्तरम्। पराक्रान्तं चात्र सूरिभिरित्यु-परम्यते। हरिपक्षेऽप्येवम् ॥५॥

## नारायणी

तामेवोक्तां व्याक्रोशीं विशदयति। (सः) प्रसिद्धः (धाता) सृष्टिकर्ता (किमीहः) सृष्टौ तस्य का ईहा ? अर्थात् कया चेष्टया त्रिभुवनं सृजतीति सर्वत्र योजनीयम्। (किंकायः) कीदृग्रूपः कीदृशेन शरीरेण वा, (किमुपायः) केनोपायेन, कीदृगुपायशीलो भूत्वा, (किमाधारः) केन आधारेण, कुत्र स्थित्वेत्यादिवत् (किमुपादानः) सन्। केन उपादानकारणेन, किन्निमित्तमिति यावत्। (च) इति समुच्चये (त्रिभुवनम्) त्रैलोक्यं सचराचरं ब्रह्माण्डं वा। (सृजति) विरचयति (खलु) इति निश्चयार्थः (इति) एवं-विधे (अतर्क्यैश्वर्ये) अचिन्तनीयवैभवे (त्वयि) विषये (अनवसरदुःस्थः) अवकाशाभावाद्-दुर्बलस्तुच्छ इति यावत्। (अयं) उपर्य्युक्तः (कुतर्कः) कुत्सितविचारः, (कांश्चित्) अनेकान् (हतधियः) विनष्टबुद्धीन् (जगतः) लोकस्य (मोहाय) प्रतारणाय, (मुखरयति) वाचालयति।

अत्र अचिन्त्यप्रभावे ईश्वरे स्पृहा-काय-कारणादिरूपः कुतर्को जगद्वञ्चनायैवेति सोपपत्तिकं नास्तिकादिमतं तिरस्कृतमिति यथोक्तं पुराविद्भिः—'इच्छया कुरुते देहं इच्छया वितनुर्भवेत्। क्रीडते भगवान् लोके बालक्रीडनकैरिव' ॥५॥

तथा च स्कन्दपुराणस्य माहेश्वरखण्डे अरुणाचलमाहात्म्योत्तरखण्डेऽप्युक्तम्—

'कस्मादेव समुत्पन्नः किम्मूलः किमुपाधिकः।
कुतस्त्यः किमुपादानः कया शक्त्या प्रकाशते' ॥

## संस्कृतपद्यानुवादः

कयेच्छया कीदृशरूपधारी केनाप्युपायेन च कस्य हेतोः।
स्थित्वाथ कुत्राब्जजनिर्विधाता करोति सृष्टिं जगतां त्रयाणाम् ॥
एवं विधं निरवकाशहतं कुतर्कं कुर्वन्ति नाम कुधियो विषये त्वदीये।
नो तर्कणीयविभवोऽस्तिभवानतस्तं मोहाय सर्वजगतः प्रवदन्ति केचित् ॥५॥

## भाषाटीका

आस्तिकों के मतानुसार ब्रह्मा सृष्टि-कर्त्ता हैं, जैसा कि पूर्वश्लोक में तीनों देवों को प्रतिपादित कर चुके हैं – अतएव इस सिद्धान्त के ऊपर नास्तिक इत्यादिकों के कुतर्कों का उल्लेख करते हैं। (सः) वह प्रसिद्ध, (धाता) सृष्टिकर्त्ता, (त्रिभुवनं सृजति) त्रैलोक्य को सिरजता है (किमीहः) कौन सी इच्छा रखता है – अर्थात् किस इच्छा (गरज) से सृष्टि रचता है? (किंकायः) कैसा देह धर लेता है—अर्थात् सृष्टि रचते समय उसका शरीर कैसा रहता है? (किमुपायः) कौन से उपायों को स्वीकार करता है? (किमाधारः) कौन सा आधार रहता है – अर्थात् कहाँ बैठकर अथवा किस वस्तु पर रखकर इत्यादि, यों ही (किमुपादानः) किस कारण से, किं वा क्यों सृष्टि करता है? (इति च) इत्यादि प्रकार का और भी बहुतेरी शंकाओं से युक्त होने पर भी (अतर्क्यैश्वर्ये त्वयि) तर्क करने के योग्य नहीं है ऐश्वर्य जिसका ऐसे आपके विषय में (अनवसरदुःस्थः) अवकाश (मौका) नहीं पाने से अस्वस्थ (डावाडोल) (अयं कुतर्कः) पूर्वोक्त कुतर्क (कांश्चित् हतधियः) कितने हो भ्रष्ट बुद्धि वालों को (जगतः मोहाय) संसार को मोहित करने के लिये अर्थात् भ्रमजाल में डाल कर फाँसने के लिए (मुखरयति) कहवाता है, (खलु) निश्चय करके। भावार्थ यह है कि यदि ब्रह्मा ही सृष्टि रचता है तो किस इच्छा से, कैसा शरीर धर कर और कौन सी सामग्री (मसाला) लेकर, कहाँ बैठकर, किस कारण से सृष्टि करता है? यह सब नष्टमति लोगों का कुतर्क केवल संसार को ठगने ही के लिये है—इसमें कुछ सन्देह नहीं है; क्योंकि आपकी महिमा में तर्क करने का स्थान ही नहीं है, अतएव वह सर्वथा अचिन्तनीय है—फिर आस्तिकों का तो यह सिद्धान्त दृढ़ ही है कि—

"जेहि सृष्टि उपाई विविध बनाई संग सहाय न दूजा" (तु० रा०) ॥ ५ ॥

## भाषापद्यानुवाद

किहि इच्छा किमि तनु धरी, का उपाय मय लोक।<br>
कहाँ बैठि ब्रह्मा सृजत, किहि कारन बेरोक॥<br>
तुव ऐश्वर्ज अतर्क्य पै, करि कुतर्क हतबुद्धि।<br>
मोहहिं जग अवकास बिनु, बतरावहि निज सुद्धि ॥ ५ ॥

## भाषाबिम्ब

करी का इच्छा सो किमि तनु धरी का जतनते,<br>
कहाँ बैठ्यो ब्रह्मा रचत जग-सृष्टि किहि लिये।<br>
जगत्के मोहै को कुतरक कुबुद्धो सब करैं,<br>
तिहारो ऐश्वर्ज्ज अगम उनही (को) क्यों झलकि है ॥ ५ ॥

एवं प्रतिकूलतर्कं परिहृत्यानुकूलतर्कमुद्भावयन् स्तौति—

अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ।।६।।

## मधुसूदनी

अजेति—हे अमरवर सर्वदेवश्रेष्ठ, अवयववन्तोऽपि सावयवा अपि लोकाः क्षित्यादयः किमजन्मानो जन्महीनाः । किंशब्द आक्षेपे । तेन न जन्महीनाः; किन्तु जन्या एवेत्यर्थः । तेन सावयवत्वेन क्षित्यादेर्न जन्यत्वहेतोरसिद्धत्वम् । "यावद् विकारं तु विभागो लोकवत्" इति न्यायात् स्वसमानसत्ताकभेदप्रतियोगित्वेनैव जन्यत्व-नियमाच्च । तथा जगतां क्षित्यादीनां भवविधिरुत्पत्तिक्रियाऽधिष्ठातारं कर्तारमना-दृत्यानपेक्ष्य किं भवति । अपेक्ष्यैव भवतीत्यर्थः । तेन कार्यत्वसकर्तृकत्वयोरव्यभि-चारान्नानैकान्तिकत्वं हेतोः । तथानीशो वा ईश्वरादन्यो वा यदि कुर्यात् तर्हि भुवन-जनने कः परिकरः का सामग्री । अनीश्वरस्य स्वशरीररचनामप्यजानतो विचित्र-चतुर्दशभुवनरचनाऽसम्भवादीश्वर एव रचनां करोतीत्यर्थः । परिकरमिति पाठे को वानीश्वरो भुवनजनने परिकरमारम्भं कुर्यात् । अपि त्वीश्वर एव कुर्यादित्यर्थः । एतेनार्थान्तरता परिहृता । एवमनुमानदोषानुद्धृत्य शङ्कितदोषान्तरं निराकुर्वन्नुप-संहरति—यत इति । यत एवं सर्वप्रमाणसिद्धस्त्वम्, अतस्ते मन्दा मूढाः न, तु विद्वांसः इमे ये त्वांप्रति संशेरते संदेहवन्तः किमुत विपर्ययवन्त इत्यर्थः । **"जन्माद्यस्य यतः"** (वे० सू० १।१।१) इति—न्यायेन **"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्"** (तै० उ० ३।१।१) इत्यादिश्रुतिरेव परमेश्वरे प्रमाणम् । अनुमानं त्वनुकूलंतर्कमात्रं श्रुतेर्न स्वातन्त्र्येण प्रमाणमिति द्रष्टव्यम् । हरिपक्षेऽप्येवम् ।। ६ ।।

## नारायणी

पूर्वोक्तमेव व्यञ्जयति । ( अमरवर ) हे सुरश्रेष्ठ ! देवाधिदेव ! महादेवेत्यर्थः । (अवयववन्तोऽपि) अङ्गोपाङ्गसमन्विता अपि (लोकाः) भुवनानि (किं) कथं वेति

पृच्छायां (अजन्मानः) जन्मरहिताः सन्ति किमेतेषां जन्म न विद्यते ? यतः सावयवत्वन्तु जन्मत्वावच्छिन्नमेव यथा घटपटादयः, तद्वत् लोका अपि सावयवाः, तर्हि सावयवत्वादवश्यमेव तेऽपि जन्मवन्त इत्येव सिद्धम्। एवमेव (भवविधिः) सृजनकर्मापि (जगतां) लोकानां (अधिष्ठातारम्) चेतनस्वरूपं निमित्तकारणम् ईश्वरं (अनादृत्य) तिरस्कृत्य अनपेक्ष्येत्यर्थः, (किम्) इति प्रश्ने (भवति) भवितुमर्हति ? अर्थाद्विनैव कर्तारं सृष्टिर्भवति किं ? तथा च दिक्कालधर्माधर्मपरमाण्वादीनचेतनाधिष्ठानस्वीकृतान्येव स्वकार्योपपत्तौ प्रवर्तन्ते, न चान्यथा (वा) अथवा (अनीशः) ईश्वरत्वहीनः ईश्वरभिन्नो महदैश्वर्यबहिर्भूतः कश्चित् (कुर्यात्) कर्तुं योग्यो भवेच्चेत् तदा तस्य (भुवनजनने) लोकसृष्टौ (कः) किंरूपः (परिकरः) सामग्री, प्रगाढगात्रिकाबन्धो वा, कृ विक्षेपे, इत्यस्माद्धातोः 'ऋदोरप्' (अष्टा० ३।२।५७) इत्यप्प्रत्ययः। अथवा "पुंसि संज्ञायां घः प्रायेण" (अष्टा० ३।३।११८) इत्यस्मात् घप्रत्ययेऽपि रूपसिद्धिः। तथा च—

"भवत्परिकरा व्राते पर्य्यङ्कपरिवारयोः।
प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि ॥"

(इति विश्वप्रकाशः)

अथवा—"यत्नारम्भो परिकरो"—इति त्रिकाण्डशेषोक्तोऽर्थो ग्राह्यः। (यतः) यस्मात्कारणात् (इमे) पूर्वोक्तमतवादिनः, (मन्दाः) मूढबुद्धयः (त्वां प्रति) भवतो विषये (संशेरते) संदेहं कुर्वन्तीति। अत्र विनैवेश्वरं न कोऽपि सृष्टिकर्मणि समर्थ इति निरूप्य तन्निमित्तकोऽखिलोऽपि सन्देहो दूरीकृत इत्यवधेयम् ॥ ६ ॥

## संस्कृतपद्यानुवादः

भूत्वा कथं सावयवास्तु लोका अजन्मिनः सन्ति कदापि वाच्याः।
जगन्नियन्तुश्च निरादरेण कथं स्वयं जन्म (सृष्टि) विधिक्रमो वा ॥
भवेदनीशो भुवनादिसृष्टौ कथं समर्थः परिचिन्त्यमेतत्।
इमे महामन्दतमा यतस्ते संशेरते त्वां प्रति देवदेव ! ॥ ६ ॥

## भाषाटीका

(अमरवर) हे सर्वदेव श्रेष्ठ ! महादेव ! (अवयववन्तोऽपि) समस्त अंगों से परिपूर्ण रहने वाले भी, (लोकाः) त्रिभुवन (किं) क्या (अजन्मानः) जन्म से रहित हैं ? अर्थात् क्या

इन सब भुवनों का जन्म नहीं हुआ है, आपसे आप हो उत्पन्न हो गये हैं, (भवविधिः) सृष्टि का कर्म (जगतां अधिष्ठातारं) समस्त लोकों के नियन्ता जगदीश्वर को (अनादृत्य) माने बिना (किं भवति) क्या हो सकता है? (वा) अथवा (अनीशः) ईश्वर से भिन्न, यदि कोई (कुर्यात् सृष्टि करे, तो (भुवनजनने) संसार की सृष्टि रचने में, उसी की (कः परिकरः) कौन सी सामग्री (मसाला) है? (यतः) जिसके लिये (इमे मन्दाः) ये सब मतिमन्द (त्वां प्रति संशेरते) आपके ऊपर सन्देह करने लगते हैं।

भाव यह है कि—जिसमें अंग होते हैं, वह जन्मधारी होता है, अतएव ये सब चौदहों (अथवा असंख्य) ब्रह्माण्डअङ्गयुक्त होने से अवश्यमेव जन्मवन्त ही हैं—क्योंकि जगत्कर्ता के बिना दूसरा ही सृष्टिकर्ता है तो बतलाना चाहिए कि उसके पास कौन कौन-सी सामग्रियाँ हैं—? अर्थात् वह भी कहाँ बैठकर कैसा रूप धरकर एवं कौन-सी वस्तुओं को लेकर सृष्टि रचता है? यदि यह बात भी नहीं है, तो फिर ये सभी मूर्ख आप ही के विषय में क्यों सन्देह करते हैं? इस से यह सिद्ध होता है कि आप ही सृष्टि रचने वाले हैं। इस श्लोक से पहिले "किमीहः" (५) श्लोक में कही हुई समस्त शंकाओं का युक्तिपूर्वक समाधान कर दिया है और उक्त कुतर्कों का तर्क द्वारा ही खंडन करके सावयवत्व होने से जन्मधारी होना भी सिद्ध कर दिखाया है ॥ ६ ॥

## भाषापद्यानुवाद

जन्ह लहे विनु लोक किमि, अवयव युक्त लखात।
बिनहि विधाता के सृजे, कैसे जग बनिजात ॥
विनु जगदीसै को रहत, उद्यत सर्जन (सृष्टी) मांहि।
महादेव! तुम पै करत संसय मूढ़ बुझां (वता) हि ॥ ६ ॥

## भाषाबिम्ब

विना लीन्हे जन्मै सकल जग क्यों अंग धरई?
भला कैसे कर्ता विनहि सब सृष्टी वनि गई?।
विधाता जो नाहीं सृजन लगि को उद्यत रहै?
तबौ ये अज्ञानी क (घ) रत बहु सन्देह तुम पै ॥ ६ ॥

एवं तावत् प्रतिकूलतर्कं परिहृत्य भगवद्विमुखान्निरस्य सर्वेषां शास्त्रप्रस्थानानां भगवत्येव तात्पर्यं साक्षात् परम्परया वेति वदन् स्तौति—

**त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।**
**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥७॥**

### मधुसूदनी

त्रयीति—हे अमरवर, नाना संकीर्णाः पन्थानः नानापथाः, ऋजवश्च कुटिलाः ऋजुकुटिलाश्च ऋजुकुटिलाश्च ते नानापथाश्चेति ऋजुकुटिलनानापथास्ताञ्जुषन्ते भजन्तीति तथा तेषां नृणामधिकार्यनधिकारिसाधारणानां तत्तत्साधनानुष्ठानैः साक्षात्परम्परया वा त्वमेवैको गम्यः प्राप्यः, नत्वन्यः कश्चिदित्यर्थः। अत्र दृष्टान्तमाह—पयसामर्णव इव। यथा ऋजुपथजुषां गङ्गा-नर्मदादीनां साक्षादेव समुद्रः प्राप्यः, यथा वा कुटिलपथजुषां यमुना-सरय्वादीनां गङ्गादिप्रवेशद्वारा परम्परया, एवं वेदान्तवाक्यश्रवणमननादिनिष्ठानां साक्षात्त्वं प्राप्यः, अन्येषां त्वन्तःकरणशुद्धितारतम्येन परम्परया त्वमेव प्राप्यः। चेतत्वेनैव मोक्षयोग्यत्वात् परमात्माभ्युपगमाच्चेत्यर्थः।

ननु ऋजुमार्गे सति तं विहाय किमिति कुटिलमार्गं भजन्ते, ऋजुमार्गस्यैव शीघ्रफलदायित्वादित्यत आह। प्रभिन्ने प्रस्थाने इदं परं पथ्यं अदः परं पथ्यमिति च रुचीनां वैचित्र्यात् तस्मिंस्तस्मिञ्छास्त्रप्रस्थाने इदमेव श्रेष्ठमिदमेव मम हितमितीच्छाविशेषाणामनेकप्रकारत्वात् प्राग्भवीयतत्तत्कर्मवासनावशेन ऋजुत्वकुटिलत्वनिश्चयासामर्थ्यात् कुटिलेऽपि ऋजुभ्रान्त्या प्रवर्तन्त इत्यर्थः।

प्रस्थानभेदमेव दर्शयति—त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति। सर्वशास्त्रोपलक्षणमेतत्। तथाहि त्रयीशब्देन वेदत्रयवाचिना तदुपलक्षिता अष्टादश विद्या अप्यत्र विवक्षिताः। तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाश्चत्वारः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो ज्योतिषमिति वेदाङ्गानि षट्। पुराणानि, न्यायः, मीमांसा, धर्मशास्त्राणि चेति चत्वार्युपाङ्गानि। अत्रोपपुराणानामपि पुराणेष्वन्तर्भावः। वैशेषिकशास्त्रस्य न्याये, वेदान्तशास्त्रस्य मीमांसायाम्, महाभारतरामयणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां च धर्मशास्त्रेष्विति मिलत्वा चतुर्दश विद्याः। तथा चोक्तम्—'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' इति। एता एव चतुर्भिरुपवेदैः सहिताः अष्टादश विद्या भवन्ति। आयुर्वेदो, धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः। ता एता अष्टादश विद्यास्त्रयी सांख्यमित्यनेनोपन्यस्ताः। अन्यथा न्यूनताप्रसङ्गात्। सर्वेषां चास्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि। अन्येषामप्येकदेशिनामेष्वेवान्तर्भावात्।

नमु नास्तिकानामपि प्रस्थानान्तराणि सन्ति, तेषामेतेष्वनन्तर्भावात् पृथग्गणयितुमुचितानि। तथाहि शून्यवादेनैकं प्रस्थानं माध्यमिकानाम्। क्षणिकविज्ञानमात्रवादेनापरं योगाचाराणाम्। ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरं सौत्रान्तिकानाम्। प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकाणाम्। एवं सौगतानां प्रस्थानचतुष्टयम्। तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम्। एवं देहातिरिक्तदेहपरिणामात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम्। एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि तानि कस्मान्नोच्यन्ते? सत्यम्, वेदबाह्यत्वात्तु तेषां म्लेच्छादिप्रस्थानवत् परम्परयापि पुरुषार्थानुपयोगित्वादुपेक्षणीयत्वमेव। इह च साक्षाद्वा परम्परया वा पुमर्थोपयोगिनां वेदोपकरणानामेव प्रस्थानानां भेदो दर्शितोऽतो न न्यूनत्वशङ्कावकाशः। अथ संक्षेपेणैषां स्वरूपभेदहेतुः प्रयोजनभेद उच्यते बालानां व्युत्पत्तये। तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यं वेदः। स च मन्त्रब्राह्मणात्मकः। तत्र मन्त्रा अनुष्ठानकारणभूतद्रव्यदेवताप्रकाशकाः। तेऽपि त्रिविधाः—ऋग्यजुःसामभेदात्। तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः 'अग्निमीळे पुरोहितम्' (ऋ० सं० १।१।१) इत्याद्याः। ता एव गीतिविशिष्टाः सामानि। तदुभयविलक्षणानि यजूंषि। 'अग्नीदग्नीन्विहर' इत्यादिसम्बोधनरूपा निगदसंज्ञामन्त्रा अपि यजुरन्तर्भूता एव। तदेव निरूपिता मन्त्राः।

ब्राह्मणमपि त्रिविधम्—विधिरूपम्, अर्थवादरूपम्, तदुभयविलक्षणं च। तत्र शब्दभावनाविधिरिति भाट्टाः। नियोगो विधिरिति प्राभाकराः। इष्टसाधनताविधिरिति तार्किकादयः। सर्वो विधिरपि चतुर्विधः। उत्पत्त्यधिकारविनियोगभेदात्। तत्र[1] देवताकर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः 'आग्नेयोऽष्टाकपालो भवति' इत्यादिः। सेति[2]कर्तव्यताकस्य करणस्य यागादेः फलसम्बन्धबोधको विधिरधिकारविधिः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिः। अङ्गसम्बन्धबोधको विधिर्विनियोगविधिः 'व्रीहिभिर्यजेत', 'समिधो यजति' इत्यादिः। साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वविधित्रयमेलनरूपः प्रयोगविधिः। स च श्रौत इत्येके। कल्प्य इत्यपरे। कर्मस्वरूपं च द्विविधम्। गुणकर्म अर्थकर्म च। तत्र क्रतुकारकाण्याश्रित्य विहितं गुणकर्म, तदपि चतुर्विधम्—उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात्। तत्र 'वसन्ते ब्राह्मणोऽग्नीनादधीत,' 'यूपं तक्षति' इत्यादावाधानतक्षणादिना संस्कारशेषविशिष्टाग्नियूपादेरुत्पत्तिः। 'स्वाध्यायोऽध्येतव्यः', 'गां पयो दोग्धि' इत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः। 'सोममभिषुणोति', 'व्रीहीनवहन्ति', 'आज्यं विलापयति' इत्यादावभिषवावघातविलापनैः सोमादीनां विकारः। 'व्रीहीन्प्रोक्षति', 'पत्न्यवेक्षते' इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कारः। एतच्चतुष्टयं चाङ्गमेव। तथा क्रतुकारकाण्यनाश्रित्य

---

१. 'तत्र कर्मस्वरूप' इति पाठः। २. 'इतिकर्तव्यताकरणस्य' इतिपाठः।

विहितमर्थकर्म। तच्च द्विविधम्-अङ्गं प्रधानं च। अन्यार्थमङ्गम्। अनन्यार्थं प्रधानम्। अङ्गमपि द्विविधम्—संनिपत्योपकारकमारादुपकारकं च। तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम्, यथाऽवहननप्रोक्षणादिफलोपकारि। द्वितीयं यथा प्रयाजादि। एवं सम्पूर्णाङ्गसंयुक्तो विधिः प्रकृतिः। विकलाङ्गासंयुक्तो विधिर्विकृतिः। तदुभयविलक्षणो विधिर्दर्वीहोमः। एवमन्यदप्यूह्यम्। तदेवं निरूपितो विधिभागः। प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः। स च त्रिविधः। गुणवादोऽनुवादो भूतार्थवादश्चेति। तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवादः, 'आदित्यो यूपः' इत्यादिः। प्रमाणान्तरप्राप्तार्थबोधकोऽनुवादः 'अग्निर्हिमस्य भेषजम्' इत्यादिः। प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादिः। तदुक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ इति।

तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां[1] स्वतः प्रामाण्यम्। देवताधिकरणन्यायात्। अबाधिताज्ञातार्थज्ञापकत्वं हि प्रामाण्यम्। तच्च बाधितविषयत्वाज्ज्ञापकत्वाच्च न गुणवादानुवादयोः। भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं न विहन्यते। तदेवं निरूपितोऽर्थवादभागः। विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम्। तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः। स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतःप्रमाणभूतं सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वशेषतामापादयदन्यशेषत्वाभावाच्च नार्थवादः। तस्मादुभयविलक्षणमेव वेदान्तवाक्यम्। तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते। विधिपदरहितमपि प्रमाणवाक्यत्वेन च क्वचिद् भूतार्थवाद इति व्यवह्रियत इति न दोषः। तदेवं त्रिविधं निरूपितं ब्राह्मणम्।

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः। स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नः। तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन। ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ। अथर्ववेदस्तु यज्ञानुपयुक्तोऽपि शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव। एवं च प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः। एवं च कर्मकाण्डे व्यापारभेदेऽपि[2] सर्वासां वेदशाखानामेकरूपकत्वमेव ब्रह्मकाण्डमिति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः।

अथाङ्गानामुच्यते। तत्र शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनम्। तदभावे मन्त्राणामनर्थकफलत्वात्। तथा चोक्तम्—

---

१. 'स्वार्थेऽपि' इति पाठः।        २, 'सर्वात्मना' इति पाठः।

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' ॥

तत्र सर्ववेदसाधारणी शिक्षा 'अथ शिक्षां प्रवक्ष्यामि' इत्यादिनवखण्डात्मिका[1] पाणिनिना प्रकाशिता। प्रतिवेदशाखं च भिन्नरूपाः प्रातिशाख्यसंज्ञिता अन्यैरेव मुनिभिः प्रदर्शिताः। एवं वैदिकपदसाधुत्वज्ञानेनोहादिकं व्याकरणस्य प्रयोजनम्। तच्च 'वृद्धिरादैच्' (अष्टा० १।१।१) इत्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव प्रकाशितम्।

तत्र कात्यायनेन मुनिना पाणिनीयसूत्रक्रमेण वार्तिकं विरचितम्। तद्वार्तिकोपरि च भगवता पतञ्जलिना महाभाष्यमारचितम्। तदेतत् त्रिमुनिव्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते। कौमारादिव्याकरणानि तु न वेदाङ्गानि; किन्तु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम्। एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणे पदसाधुत्वे च ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन 'समाम्नायः समाम्नातः (स व्याख्यातव्यः)' इत्यादि त्रयोदशाध्यायात्मकं निरुक्तमारचितम्। तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदानामर्थः प्रदर्शितः। मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात्, पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम्। अन्यथानुष्ठानासम्भवात् 'सृण्येव जर्भरी तुर्फरीतून' इत्यादीनामतिदुरूहाणां प्रकारान्तरेणार्थज्ञानस्यासंभावनीयत्वाच्च। एवं निघण्ट्वादयोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव। तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः। अन्येऽप्यमरहेमचन्द्रादिप्रणीताः कोषाः सर्वे निघण्टुरूपत्वेन निरुक्तान्तर्गता द्रष्टव्याः।

एवमृङ्मन्त्राणां पादबद्धच्छन्दोविशेषविशिष्टत्वात् तदज्ञाने च निन्दाश्रवणाच्छन्दोविशेषनिमित्तानुष्ठानविशेषविधानाच्च छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय 'धीश्रीस्त्रीम्' (पि० सू० १।१) इत्याद्यष्टाध्यायात्मिका छन्दोविचितिर्भगवता पिङ्गलनागेन विरचिता। तत्र 'अथ लौकिकम्' इत्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्त छन्दांसि सर्वाणि सावान्तरभेदानि प्रसङ्गान्निरूपितानि। 'अथ लौकिकम्' इत्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि छन्दांसि प्रसङ्गान्निरूपितानि व्याकरणे लौकिकपदनिरूपणवत्। एवं वैदिककर्माङ्गदर्शादिकालज्ञानाय ज्योतिषं भगवतादित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव। एवं शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि। तानि च प्रयोगत्रयभेदात् त्रिविधानि। तत्र हौत्रप्रयोगप्रतिपादकान्याश्वलायनसांख्यायनादिप्रणीतानि।

१. 'पञ्चखण्डात्मिका' इति पाठः।

आध्वर्यवप्रयोगप्रतिपादकानि बौधायनापस्तम्बकात्यायनादिप्रणीतानि। औद्गात्रप्रयोगप्रतिपादकानि तु[1] लाट्यायनद्राह्यायणादिभिः प्रणीतानि।

एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः। चतुर्णामुपाङ्गानामधुनोच्यते। तत्र सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि। तानि च ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयं मार्कण्डेयम् आग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेत्यष्टादश। एवमुपपुराणान्यप्यनेकप्रकाराणि द्रष्टव्यानि। न्याय आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानंतस्याः प्रयोजनम्।

एवं दशाध्यायं वैशेषिकशास्त्रं कणादेन प्रणीतम्। द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां भावपदार्थानामभावसप्तमानां साधर्म्यवैधर्म्याभ्यां व्युत्पादने तस्य प्रयोजनम्। एतदपि न्यायपदेनोक्तम्। एवं मीमांसापि द्विविधा। कर्ममीमांसा, शारीरकमीमांसा च। तत्र द्वादशाध्यायी कर्ममीमांसा 'अथातो धर्मजिज्ञासा' (जै० सू० १।१।१) इत्यादि 'अन्वाहार्ये च दर्शनात्' इत्यन्ता भगवता जैमिनिना प्रणीता। तत्र धर्मप्रमाणं १, धर्मभेदाभेदौ २, शेषशेषिभावः ३, क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः ४, श्रुत्यर्थपाठादिक्रमभेदः ५, अधिकारविशेषः ६, सामान्यातिदेशः ७, विशेषातिदेशः ८, ऊहः ९, बाधः १०, तन्त्रं ११, प्रसङ्गश्च १२, इति क्रमेण द्वादशानामध्यायानामर्थाः।

तथा च संकर्षणकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिना प्रणीतम्। तच्च देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात् कर्ममीमांसान्तर्गतमेव। तथा चतुरध्यायी शारीरकमीमांसा 'अथातो ब्रह्मजिज्ञासा' इत्यादिः 'अनावृत्तिः शब्दात्' इत्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुश्रवणाख्यविचारप्रतिपादकान्न्यायानुपदर्शयन्ती भगवता बादरायणेन कृता। तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयःप्रथमाध्यायेन प्रदर्शितः। तत्र च प्रथमपादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि। द्वितीयपादे त्वस्पष्टब्रह्मलिङ्गयुकान्युपास्यब्रह्मविषयाणि। तृतीयपादेऽस्पष्टब्रह्मलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानान्यव्यक्ताजादिपदानि चिन्तितानि।

एवं वेदान्तानामद्वये ब्रह्मणि सिद्धे समन्वये तत्र संभावितस्मृतितर्कादिविरोधमाशङ्क्य तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन दर्शितः।

---

१. 'लाह्यायनद्राह्यायणादिभिः' इति पाठः।

तत्राद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैस्तर्कैश्च विरोधो-वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्, स्वपक्ष-स्थापनपरपक्षनिराकरणरूपपक्षद्वयात्मकत्वाद्विचारस्य। तृतीयपादे महाभूतसृष्ट्यादि-श्रुतीनां परस्परविरोधः पूर्वभागेन परिहृतः। उत्तरभागेन तु जीवविषयाणाम्। चतुर्थ-पादे इन्द्रियादिविषयश्रुतीनां विरोधपरिहारः। तृतीयाध्याये साधननिरूपणम्। तत्र प्रथमपादे जीवस्य परलोकगमननिरूपणेन वैराग्यं निरूपितम्। द्वितीयपादे पूर्व-भागेन त्वं पदार्थः शोधितः, उत्तरभागेन च तत्पदार्थः। तृतीयपादे निर्गुणं ब्रह्मणि नानाशाखा।ठितः पुनरुक्तपदोपसंहारः कृतः।

प्रसङ्गाच्च सगुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ। चतुर्थपादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमधर्मयज्ञदानादीनि, अन्तरङ्ग-साधनानि शमदमनिदिध्यासनादीनि च निरूपितानि। चतुर्थेऽध्याये सगुणनिर्गुण-विद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमपादे श्रवणाद्यावृत्या निर्गुणं ब्रह्म, उपासनावृत्या सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेप-लक्षणा जीवन्मुक्तिरभिहिता। द्विनीयपादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः। तृतीयपादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः। चतुर्थपादे पूर्वभागेन निर्गुण-ब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता। उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोके स्थिति-रुक्तेति। इदमेव सर्वशास्त्राणां मूर्धन्यम्, शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशङ्करभगवत्पादोदितप्रकारेणेति रहस्यम्। एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपराशरगोतमशंखलिखितहारीताप-स्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रम-विशेषाणां विभागेन प्रतिपादकानि।

एवं व्यासकृतं महाभारतम्, वाल्मीकिकृतं रामायणं च धर्मशास्त्र एवान्तर्भूतं स्पष्टमितिहासत्वेन प्रसिद्धम्। सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात् पृथगेव संगतिर्वाच्या। अथ वेदचतुष्टयक्रमेण चत्वार उपवेदाः। तत्रायुर्वेदस्याष्टौ स्थानानि भवन्ति सूत्रं शारीरमैन्द्रियं चिकित्सा निदानं विमानं कल्पः सिद्धिश्चेति। ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुप-दिष्टश्चरकेण संक्षिप्तः। तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम्।

एवं वाग्भटादिभिरपि बहुधेति न शास्त्रभेदः। कामशास्त्रमप्यायुर्वेदान्तर्गतमेव, सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात्। तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम्। तस्य च विषयवैराग्यमेव प्रयोजनम्, शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात्। चिकित्साशास्त्रस्य च रोगतत्साधनरोगनिवृत्ति-तत्साधनज्ञानं प्रयोजनम्।

एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः। तत्र प्रथमो दीक्षापादः। द्वितीयः संग्रहपादः। तृतीयः सिद्धिपादः। चतुर्थः प्रयोगपादः। तत्र प्रथमपादे धनुर्लक्षणमधिकारिनिरूणं च कृतम्।

तत्र धनुःशब्दश्चापे रूढोऽपि चतुर्विधायुधवाची वर्तते। तच्च चतुर्विधम्—मुक्तम्, अमुक्तम्, मुक्तामुक्तम्, यन्त्रमुक्तं च। तत्र मुक्तं चक्रादि, अमुक्तं खड्गादि, मुक्तामुक्तं शल्यावान्तरभेदादि। यन्त्रमुक्तं शरादि। तत्र मुक्तमस्त्रमित्युच्यते। अमुक्तं शस्त्रमित्युच्यते। तदपि ब्राह्मवैष्णवपाशुपत-प्राजापत्याग्नेयादिभेदादनेकविधम्। एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च, ते सर्वे चतुर्विधाः पदातिरथगज-तुरगारूढादीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमपादे निरूपितम्। सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीये पादे। गुरुसम्प्रदायसिद्धानां शस्त्रविशेषाणां पुनःपुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे। एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्च-तुर्थपादे निरूपितः। क्षत्रियाणां युद्धं दुष्टदस्युचौरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम्। एवं च ब्राह्मप्राजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम्।

एवं गान्धर्ववेदशास्त्रं भरतेन प्रणीतम्। तत्र नृत्यगीतवाद्यभेदेन बहुविधोऽर्थः प्रपञ्चितः। देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम्।

एवमर्थशास्त्रं च बहुविधं नीतिशास्त्रमश्वशास्त्रं गजशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रं चतुःषष्टिकलाशास्त्रं चेति।

ताश्चतुःषष्टिकलाः शैवागमोक्ताः—गीतम् १, वाद्यम् २, नृत्यम् ३, नाट्यम् ४, आलेख्यम्, ५, विशेषकच्छेद्यम् ६, तण्डुलकुसुमबलिविकाराः ७, पुष्पास्तरणम् ८, दशनवसनाङ्गरागाः ९, मणिभूमिकाकर्म १०, शयनरचनम् ११, उदकवाद्यम् १२, उदक (घातः) वादः १२, अद्भुतदर्शनवेदिता १३, मालाग्रन्थनकल्पः १५, शेखरापीड-योजनम् १६, नेपथ्ययोगः १७, कर्णपत्रभङ्गः १८, गन्धमुक्तिः १९, भूषणयोजनम् २०, इन्द्रजालम् २१, कौचुमारयोगाः २२, हस्तलाघवम् २३, चित्रशाकापूपभक्तविकार-क्रियाः २४, पानकरसरागासवयोजनम् २५, सूचीवापकर्म २६, सूत्रक्रीडा २७, वीणाडमरुकवाद्यानि २८, प्रहेलिकाप्रतिमालाः २९, दुर्वचकयोगाः ३०, पुस्तक-वाचनम् ३१, नाटिकाख्यायिकादर्शनम् ३२, काव्यसमस्यापूरणम् ३३, पट्टिकावेत्र-बाणविकल्पाः ३४, तर्कुकर्माणि ३५, तक्षणम् ३६, वास्तुविद्या, ३७, रूप्यरत्न-परीक्षा ३८, धातुवादः ३९, मणिरागज्ञानम् ४०, आकारज्ञानम् ४१, वृक्षायुर्वेदयोगाः ४२, मेषकुक्कुटलावकयुद्धविधिः ४३, शुकसारिकाप्रलापनम् ४४, उत्सादनम् ४५, केशमार्जनकौशलम् ४६, अक्षरमुष्टिकाकथनम् ४७, म्लेच्छितकविकल्पाः ४८, देश-भाषाज्ञानम् ४९, पुष्पशकटिकानिमित्तज्ञानम् ५०, यन्त्रमातृका ५१, धरणमातृका ५२,

असंवाच्यसंपाठ्यं मानसीकाव्यक्रियाविकल्पाः ५३, छलितकयोगाः ५४, अभिधान-कोशछन्दोज्ञानम् ५५, क्रियाविकल्पाः ५६, ललितविकल्पाः ५७, वस्त्रगोपनानि ५८, द्यूतविशेषः ५९, आकर्षक्रीडा ६०, बालक्रीडनकानि ६१, वैनायकीविद्याज्ञानम् ६२, वैजयिकीविद्याज्ञानम् ६३, वैतालिकीविद्याज्ञानम् ६४, इति चतुःषष्टिकला नाना-मुनिभिः प्रणीताः। तस्य च सर्वस्य लौकिकालौकिकतत्तत्प्रयोजनभेदो द्रष्टव्यः।

एवमष्टादशविद्यास्त्रयीशब्देनोक्ताः। तथा सांख्यशास्त्रं कपिलेन भगवता प्रणीतम्। तत्र त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थं इत्यादिषडध्यायाः। तत्र प्रथमेऽध्याये विषया निरूपिताः। द्वितीयेऽध्याये प्रधानकार्याणि, तृतीयेऽध्याये विषयवैराग्यम्, चतुर्थेऽध्याये विरक्तानां पिङ्गालाकुर[1]रादोनामाख्यायिकाः, पञ्चमेऽध्याये परपक्षनिर्जयः, षष्ठे सर्वार्थसंक्षेपः। प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम्।

तथा योगशास्त्रं भगवता पतञ्जलिना प्रणीतम्। 'अथ योगानुशासनम्' इत्यादि-पादचतुष्टयात्मकम्। तत्र प्रथमे पादे चित्तवृत्तिनिरोधात्मकं समाधिवैराग्यरूपं च तत्साधनं निरूपितम्। द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायाम-प्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि निरूपितानि। तृतीयपादे योगविभूतयः। चतुर्थपादे कैवल्यमिति। तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम्। तथा पशुपतिमतं पाशुपतं शास्त्रं भगवता पशुपतिना पशुपाशविमोक्षणाय 'अथातः पाशुपतयोगविधिं व्याख्यास्यामः' इत्यादिपञ्चाध्यायं विरचितम्। तत्राध्याय-पञ्चकेनापि कार्यरूपो जीवः पशुः, कारणं पशुपतिरीश्वरः, योगः पशुपतौ चित्तसमा-धानम्, विधिर्भस्मना त्रिषवणस्नानादिर्निरूपितः। दुःखान्तसंज्ञको मोक्षश्चास्य प्रयोज-नम्। एते एव कार्यकारणयोगविधिदुःखान्ता इत्याख्यायन्ते। एवं शैवं मन्त्रशास्त्रमपि पाशुपतशास्त्रान्तर्गतमेव द्रष्टव्यम्। एवं च वैष्णवनारदादिभिः कृतं पाञ्चरात्रम्। तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः। भगवान् वासुदेवः परमेश्वरः सर्वकारणं तस्मादुत्पद्यते संकर्षणाख्यो जीवस्तस्मान्मनः प्रद्युम्नस्तस्मादनिरुद्धोऽहंकारः। सर्वे चैते भगवतो वासुदेवस्यैवांशभूतास्तदभिन्ना एवेति तस्य वासुदेवस्य मनोवाक्काय-वृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितम्।

एवं वैष्णवमन्त्रशास्त्रं परिमितमपि पञ्चरात्रमध्येऽन्तर्भूतम्। वामागमादिशास्त्रं तु वेदबाह्यमेव। तदेवं दर्शितः प्रस्थानभेदः। सर्वेषां संक्षेपेण त्रिविध एव प्रस्थानभेदः। तत्रारम्भवाद एकः, परिणामवादो द्वितीयः, विवर्तवादस्तृतीयः। पार्थिवाप्यतैजसवाय-वीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते। असदेव कार्यकारणव्यापारादुत्पद्यत इति प्रथमः तार्किकाणां मीमांसकानां च। सत्त्वरजस्तमो-गुणात्मकप्रधानमेव महदहङ्कारादिक्रमेण जगदाकारेण परिणमते, पूर्वमपि सूक्ष्मरूपेण

१. 'कुमारादीनाम्' इति पाठः।

सदेव कार्यकारणव्यापारेणाभिव्यज्यत इति द्वितीयः पक्षः सांख्ययोगपाशुपतानाम्, ब्रह्मणः परिणामो जगदिति वैष्णवानामपि। स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्येव जगदाकारेण कल्प्यत इति तृतीयः पक्षो ब्रह्मवादिनाम्। सर्वेषां च प्रस्थानकर्तृणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वर एव वेदान्तप्रतिपाद्ये तात्पर्यम्। नहि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषां, किन्तु बहिर्विषयप्रवणानामापाततः परमपुरुषार्थे प्रवेशो न भवतीति नास्तिक्यनिवारणाय तैः प्रकारभेदाः प्रदर्शिताः। तत्र तेषां वेदविरुद्धेऽप्यर्थे तेषां तात्पर्यमुत्प्रेक्षमाणास्तमेवोपादेयत्वेन गृह्णन्तो जना ऋजुकुटिलनानापथजुषो भवन्तीति न सर्वेषामृजुमार्ग एव प्रवेशो, न च विपर्ययेऽपि परमेश्वराप्राप्तिरन्तःकरणशुद्धिवशेन पश्चादृजुमार्गाश्रयणादेवेत्यर्थः।

हरिपक्षेऽप्येवम् ॥ ७ ॥

## नारायणी

अधुना नास्तिकादिमतं खण्डयित्वा ईश्वरसत्तासिद्धिविधानात् परमास्तिकानामवान्तरमतं प्रपञ्चयति। (त्रयी) ऋग्यजुस्सामोक्तं श्रौतमतं (साङ्ख्यं) प्रकृतिपुरुषवादिकापिलशास्त्रं पञ्चविंशतितत्त्वोपलक्षितं वा (योगः) पातञ्जलदर्शनोक्तसाधनरूपो योगक्रियाभ्यासः। (पशुपतिमतम्) शैवागमोक्तसिद्धान्तानुसारि पाशुपतं मतं (वैष्णवम्) नारदपञ्चरात्रागमादिकथितं विष्णुदैवतं मतं (इति) अनेन विधिना (प्रस्थाने) गमनीये मार्गे (प्रभिन्ने) बहुविधत्वं गते सति। अहम्मन्यास्तत्तदनुष्ठायिन एवं वदन्ति यत् (इदम्) मदुक्तमेव (परम्) सर्वोत्कृष्टं तत्त्वमस्ति। अस्मात्परं नास्ति किञ्चिदिति च। (अदः) एतदेव (पथ्यं) सेवनीयम्, ग्राह्यं वा। पथिन् शब्दात्–**'धर्मपथ्यर्थन्यायादनपेते'** (अष्टा० ४।४।९२) इत्यतः अनपेतार्थे यत्। (इति च) इत्येवं प्रकारेण (रुचीनां) इच्छानां (वैचित्र्यात्) भिन्नरूपत्वात् (ऋजुकुटिलनानापथजुषाम्) सरलवक्रादिभेदादनेकविधमार्गगामिनाम्, स्वेच्छानुरूपभ्रमणकारिणां (नृणाम्) मनुष्याणाम्, देहिनामेवेति तात्पर्यार्थः, (पयसाम्) सर्वेषां जलानां (अर्णव इव) समुद्रसमानः (त्वम्) एव (एकः) अद्वितीयः (गम्यः) गमनार्हः चरमप्राप्तव्यः (असि) विद्यसे।

तथा चोक्तमपि गीतायाम्—**'यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्तीति'** (गीता–२८।११)। एवमेवोक्तं मुण्डकोपनिषदि च—**'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति च'** (मु० उ० ३।२)।

इह ऋजुकुटिलेतिपदं रुचि-नृ-पयस्सु सर्वत्र योजनीयम्, अथवा कूर्मपुराणोत्तरार्धस्थेश्वरगीतायां मय्येवमुक्तम् : यथाद्ये—

**यथा नदीनदा लोके सागरेणैकतां ययुः।**
**तद्वदात्माक्षरेणासौ निष्कलेनैकतां व्रजेत् ॥**

सार्थकत्वात्। उदकानां समुद्र इव सर्वेषां श्रौतादिमतानां प्राप्यस्थानं त्वमेवा- सीति च प्रकटितम्। यथा चोक्तमपि—

एकमेव परं तत्त्वमभिन्नं परमार्थतः।
तदेव रुचिवैचित्र्यान्नानात्वं समुपागतम्॥

पद्येनामुनैव—'रुचयो विचित्राः' अथवा 'भिन्नरुचिर्हि लोकः' इत्यादिरूपा लोकोक्तिः प्रसिद्धेति ज्ञेयम्॥ ७॥

## संस्कृतपद्यानुवादः

वेदत्रयी प्रकृतिपुरुषवादि सांख्यं योगः पतञ्जलिमुनेरथ वैष्णवं वा।
ख्यातं महापशुपतेर्मतमत्र लोके भिन्नं वदन्ति सुखदं निजमार्गमेव॥
प्रभो! रुचीनां हि विचित्रतावशादनेकवक्रर्जुपथप्रचारिणाम्।
नृणां त्वमेको गमनीय ईश्वरो यथाम्भसामर्णव एति गम्यताम्॥ ७॥

## भाषाटीका

अब नास्तिकादिकों के मतों का यथार्थ रीति से खंडन करके ईश्वर की सत्ता को भली-भाँति से सिद्ध कर देने पर ईश्वरवादी आस्तिकों के अवांतर मतों का मण्डन करके ऐक्य दिखाते हैं—(त्रयी) ऋग्वेद, यजुर्वेद एवं सामवेद—इन तीनों वेदों का कहा हुआ श्रौतमत, (सांख्यं) कपिलमुनि का कथित प्रकृति-पुरुषवादी सांख्यशास्त्र का मत, (योगः) पतञ्जलि मुनि का भाषित योगशास्त्र का मत, (पशुपतिमतं) शैवागम—इत्यादि में अभिहित पाशुपत-मत, एवं (वैष्णवं) नारद-पंचरात्रादि ग्रंथों में उक्त वैष्णव मत (इति) इस प्रकार से (प्रस्थाने) गमनयोग्य मार्ग के (प्रभिन्ने) बहुविध होने पर, अपने अपने मत के अनुसार लोग यह कहते हैं कि (इदं परं) यही मेरा कहा हुआ मत सबसे उत्तम है, (अदः) (पथ्यं) यही सेवन करने के योग्य है, अथवा मार्ग के उपयुक्त है। (इति च) इस रीति से (रुचीनां वैचित्र्यात्) अपनी-अपनी रुचियों की विचित्रता से (ऋजुकुटिलनानापथजुषां) सीधे और टेढ़े अनेक विध मार्ग को धरकर चलने वाले (नृणां) मनुष्यों के किंवा देहधारियों के (पयसां अर्णव इव) सीधे-टेढ़े मार्ग गामी—जनों के (गमनीय) समुद्र के समान (त्वं एकः गम्यः असि) आप अकेले पहुँचने के स्थान हैं—अर्थात् जैसे सीधे अथवा टेढ़े वहने वाले सभी जल समुद्र में पहुँचते हैं, वैसे ही इन सब श्रौत-सांख्य-योगादिक मतों के प्राप्य-स्थान एक मात्र आप ही हैं, जैसा कि कहा है—"आकाशात्पतितं तोयं यथा गच्छति सागरम्"।

अथवा—

"सबकर मत खगनायक एहा। भजिय रामपद करि दृढ़ नेहा॥ (तु० रा०)"

मधुसूदनी टीका में इस श्लोक पर बहुत विस्तार किया गया है—वे ही बातें संक्षिप्त रूप से उद्धृत कर दी जाती हैं।

"त्रयी—शब्द से तीनों वेद और उनसे उपलक्षित अठारह विद्याओं को भी समझना चाहिए, उसमें—ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद-ये चार वेद हैं। शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द, ज्योतिष—ये छः वेदांग हैं। पुराण, न्याय, मीमांसा, धर्मशास्त्र—ये चार उपांग हैं। इनमें उपपुराणों को भी पुराणों के ही अन्तर्गत समझना चाहिए। 'तथा च वैशेषिक शास्त्र न्याय में, वेदान्तशास्त्र मीमांसा में, महाभारत, रामायण, सांख्य, योग, शैव, वैष्णवादिकों को धर्मशास्त्रों में ही मिला देने से १४ विद्याएँ होती हैं। इनके अतिरिक्त चार उपवेद हैं—आयुर्वेद, यजुर्वेद, गान्धर्ववेद और अर्थशास्त्र—इन सबको जोड़ देने से १८ विद्याएँ होती है। समस्त आस्तिकों के इतने ही शास्त्रमार्ग हैं। और भी जो एकदेशीयमत हैं, वे सब भी इन्हीं के अन्तर्गत हैं।

यहाँ पर यह शंका है कि १ माध्यमिक, २ योगाचार, ३ सौत्रान्तिक, ४ वैभाषिक, ५ चार्वाक, ६ दिगम्बर ये छह जो नास्तिकों के भेद हैं, इनका भी क्यों नहीं उल्लेख कर दिया? इसका समाधान यह है कि—वैदिक मत के विरुद्ध होने से म्लेच्छादिकों के मतानुसार ये सब चारों पुरुषार्थ, उपयोगी नहीं हैं। इस कारण से इनको छोड़ देना ही उचित है। अब संक्षेप से पूर्वोक्त प्रस्थानों का थोड़ा सा विवरण भी लिख दिया जाता है। धर्म-ब्रह्म-प्रतिपादक अपौरुषेय प्रमाणवाक्य वेद है, उसमें मन्त्र और ब्राह्मणभाग दो भेद हैं। उनमें उक्त तीनों ही वेदों में बिखरे रहने से मन्त्र के तीन भेद होते हैं और ब्राह्मण के भी तीन भेद हैं, अर्थात् विधिरूप, अर्थवादरूप एवं उभयविलक्षण। उसमें उत्पत्ति, अधिकार, विनियोग और प्रयोग—के भेद से विधि चार प्रकार के हैं। इनमें प्रयोग के भी दो भेद हैं, यथा गुणकर्म और अर्थकर्म। उनमें गुणकर्म—उत्पत्ति, आप्ति, विकृति और संस्कृति के भेद से चार प्रकार का होता है। यों ही अर्थकर्म भी दो प्रकार के हैं, एक तो अंग और दूसरा प्रधान, उसमें अंग भी दो प्रकार के हैं, यथा,संनिपत्योपकारक तथा आरादुपकारक, इस भाँति विधि भाग का निरूपण है।

अब अर्थवाद के तीन भेद हैं—वह तीन प्रकार का है, अर्थात् गुणवाद, अनुवाद और भूतार्थवाद। इस रीति से विधि और अर्थवाद दोनों ही से विलक्षण होने से उभयविलक्षण वेदान्तवाक्य है। इस प्रकार त्रिविध ब्राह्मण भी निरूपित हुआ। इन सब प्रकारों से कर्मकाण्ड तथा ब्रह्मकाण्डात्मक वेद ही, धर्म, अर्थ, काम और मोक्ष का कारण है। वह यज्ञादिक के निर्वाहार्थ ही ऋग्, यजु: और साम के भेद से भिन्न है, अर्थात् हौत्रप्रयोग ऋग्वेद से, आध्वर्यव-प्रयोग यजुर्वेद से और औद्गात्र-प्रयोग सामवेद से होता है। ब्रह्मा और यजमान-प्रयोग भी इसी के अन्तर्गत है। अथर्ववेद यद्यपि यज्ञ के उपयुक्त नहीं है, तथापि शांतिक, पौष्टिक, आभिचारिक, इत्यादि कर्मों का प्रतिपादक होने से बड़ा ही विलक्षण है।

इस भाँति प्रवचन के भेद से प्रतिवेद में भिन्न-भिन्न बहुतेरी शाखाएँ हैं। यद्यपि कर्मकाण्ड में व्यापारभेद होना सिद्ध है, तथापि समस्त शाखाओं का एकरूपत्व ही ब्रह्म-काण्ड है। इस प्रकार से चारों ही वेदों का प्रयोजनभेद से भेद कहा गया। अब अंगों को कहते हैं। शिक्षा का उदात्त, अनुदात्त, स्वरित, ह्रस्व, दीर्घ, प्लुत इत्यादि से युक्त स्वर

और व्यञ्जनात्मक वर्णों के उच्चारणविशेष का ज्ञान ही प्रयोजन है; क्योंकि इन सबके यथार्थ ज्ञान नहीं होने से मंत्रों का अनर्थ ही फल होता है, जैसा कि कहा है —

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥"

अर्थात् स्वर से हीन अथवा वर्ण से हीन किं वा अशुद्ध प्रयोग किया गया मंत्र कदापि यथार्थ नहीं हो सकता; क्योंकि वह वचनरूपी वज्र होकर यजमान का ही नाश कर डालता है, जैसे इन्द्र-शत्रु (वृत्रासुर) स्वर के ही अपराध से स्वयं नष्ट हो गया । यह शिक्षा मुनिवर पाणिनि ने ही प्रकाशित की है, जो कि आजकल प्रचलित है इसी प्रकार से प्रत्येक वेद की शाखाओं पर भिन्न-भिन्न रूप के प्रातिशाख्य नाम के ग्रंथ एवं शिक्षाएँ अनेक मुनियों की बनाई हुई हैं । यों ही वेद के पदों की शुद्धता को जान लेने के लिए व्याकरणशास्त्र का प्रयोजन है, जिसे भगवान् महेश्वर के प्रसाद से उन्हीं महर्षि पाणिनि ने आठ अध्यायों का सूत्रपाठ बनाया है, जो अष्टाध्यायी के नाम से प्रसिद्ध है । उसी पर कात्यायन मुनि (वररुचि जो पुष्पदन्त के अवतार माने जाते हैं उन्होंने) वार्तिक निर्माण किया है । उस पर ऋषि-प्रवर पतंजलि ने महाभाष्य की रचना की है । इन्हीं तीनों मुनियों (मुनित्रय) के बनाए हुए व्याकरण को वेदाङ्ग अथवा माहेश्वर व्याकरण कहा जाता है । इससे भिन्न जो दूसरे कौमारादि व्याकरण हैं, वे वेदाङ्ग नहीं हैं, किन्तु केवल लौकिक प्रयोगों के ही ज्ञानार्थ हैं, यह समझ लेना चाहिए । इस प्रकार से शिक्षा और व्याकरण से अक्षरों के उच्चारण एवं पदों की शुद्धता का ज्ञान हो जाने पर वेद के मन्त्र के पदों का अर्थ जानने के लिए यास्कमुनि ने तेरह अध्यायों में निरुक्त की रचना की है । इसमें पदसमूहों को नाम, आख्यात, निपात और उपसर्ग के भेद से चार प्रकार का निरूपण करके वैदिक मन्त्र-पदों का अर्थ दिखलाया है; क्योंकि जबतक मन्त्र के पदों का अर्थज्ञान नहीं हो जाय, तबतक उसका अनुष्ठान करना ही सर्वथा असम्भव है —जैसे 'सृण्येव जर्भरी तुर्फरी तु न—' इत्यादि पदों का अर्थ समझ लेना किसी प्रकार से सम्भव नहीं है । अतएव वैदिक मंत्र-पदों के अर्थज्ञान के लिए निरुक्त परमावश्यक है ।

यों ही वेदों के कथित द्रव्य-देवतात्मक पदार्थों के पर्यायशब्दरूप निघण्टु इत्यादिक भी निरुक्त के ही अन्तर्भूत हैं । उसमें भी निघण्टु नामक पाँच अध्यायों का ग्रन्थ पूर्वोक्त यास्कमुनि का ही प्रणीत है—और इसके अतिरिक्त अमरसिंह अथवा हेमचन्द्र इत्यादि के बनाये हुए कोष भी निघण्टु के समरूप होने से निरुक्त के ही अन्तर्गत हैं । ऋग्वेद के मंत्र पादबद्ध छन्दोविशेष से युक्त हैं और किसी-किसी अनुष्ठान में छन्दोविशेष ही का विधान किया गया है, अतएव छन्दों का जानना भी आवश्यक हुआ, क्योंकि बिना उसके ज्ञान के कार्य की हानि और निन्दा होती है । इसीलिए भगवान् पिंगलनाग ने आठ अध्यायों में सूत्रपाठ बनाया है, जो पिंगलसूत्र के नाम से प्रसिद्ध है—उसके तीन अध्यायों में गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप्, जगती —इन सातों वैदिक छंदों के अवांतर भेदों के साथ सविस्तर वर्णन किया है, फिर पाँच अध्यायों में पुराण-इतिहासादिक के उपयोगी लौकिक छन्दों का वर्णन किया है ।

इस रीति से वैदिक कर्मों के अंग, दर्श (पौर्णमास) इत्यादि के काल जानने के लिए ज्योतिष भी आवश्यक है—जिसे भगवान् सूर्यनारायण ने तथा गर्गादिक (१८) महर्षियों ने अनेक प्रकार से विरचा है। यों ही भिन्न-भिन्न शाखा के मंत्रों को मिलाकर वैदिक अनुष्ठानों के विशेष क्रमों को समझने के लिए कल्पसूत्र बने हैं। वे सब प्रयोगों के तीन भेद होने से तीन प्रकार के हैं—जिनमें हौत्र-प्रयोगों के लिये आश्वलायन, सांख्यायन इत्यादि महर्षियों के निर्मित ग्रंथ हैं। आध्वर्यव प्रयोगों के निमित्त बौधायन, आपस्तम्ब और कात्यायन[1] इत्यादि के निर्मित हैं एवं औद्गात्र-प्रयोगार्थ लाट्यायन, द्राह्यायण-आदि के विरचित सूत्र हैं। इस प्रकार से छहों अंगों का प्रयोजन तथा भेद-निरूपण किया गया।

सब चारों उपांगों का भी प्रयोजन और भेद कहा जाता है। भगवान् कृष्णद्वैपायन ने अष्टादश पुराणों को बनाया है, जो सर्ग, प्रतिसर्ग, वंश, मन्वन्तर और वंशानुचरितों को प्रकट करते हैं—उनके नाम इस श्लोक से जानने चाहिए।

"मद्वयं भ-द्वयं शैवं व-त्रयं ब्र-त्रयं तथा।
अ-ना-प-लिङ्ग-कूस्कानि पुराणानि पृथक्-पृथक्॥"

१. मत्स्यपुराण; २. मार्कंडेयपुराण।
३. भागवतपुराण; ४. भविष्यपुराण।
५. शिवपुराण; ६. विष्णुपुराण।
७. वाराहपुराण; ८. वामनपुराण।
९. ब्रह्मपुराण; १०. ब्रह्माण्डपुराण।
११. ब्रह्मवैवर्तपुराण; १२. अग्निपुराण।
१३. नारदपुराण; १४. पद्मपुराण।
१५. लिङ्गपुराण; १६. गरुडपुराण।
१७. कूर्मपुराण; १८. स्कन्दपुराण।

यों ही प्रायः अठारह उपपुराण भी हैं, जिनमें देवीभागवत, कालिकापुराण, वायुपुराण, कल्किपुराण और साम्बपुराण—इत्यादि हैं। न्याय-आन्वीक्षिकी पञ्चाध्यायी गौतम मुनि ने बनाया है—जिसका प्रमाण १, प्रमेय २, संशय ३, प्रयोजन ४, दृष्टान्त ५, सिद्धान्त ६, अवयव ७, तर्क ८, निर्णय ९, वाद १०, जल्प ११, वितण्डा १२, हेत्वाभास १३, छल १४, जाति १५ और निग्रहस्थान १६ नामक सोलहों पदार्थों के उद्देश, लक्षण एवं परीक्षा से तत्त्व-ज्ञान का होना ही प्रयोजन है। यों ही दश अध्यायों के वैशेषिकशास्त्र को कणाद ऋषि ने निर्माण किया है—जिसका द्रव्य १, गुण २, कर्म ३, सामान्य ४, विशेष ५, और समवाय ६—ये छः भावपदार्थ और सातवें अभाव ७ के साधर्म्य-वैधर्म्य से व्युत्पत्ति करना ही प्रयोजन है। यह भी न्याय ही है।

---

१. यह कौन कात्यायन हैं? वररुचि ही अथवा दूसरे कोई?

इसी भाँति मीमांसा भी दो प्रकार की है --एक तो कर्ममीमांसा और दूसरी शारीरक-मीमांसा। उसमें भगवान् जैमिनि मुनि ने बारह अध्याय की कर्ममीमांसा बनायी है, जिसमें धर्मप्रमाण १, धर्म के भेद और अभेद २, शेषशेषिभाव ३, यज्ञ के लिए पुरुषार्थ भेद से प्रयोग-विशेष ४, वेदार्थ-पाठनादि क्रमभेद ५, अधिकारविशेष ६, सामान्यातिदेश ७, विशेषातिदेश ८, ऊह ९, बाध १०, तन्त्र ११ और प्रसंग १२ ये ही बारहो अध्यायों के प्रधान अर्थ हैं। तथा च संकर्षणकाण्ड का भी चार अध्यायों में जैमिका मुनि ही ने निर्माण किया है। वह यद्यपि देवताकाण्ड के नाम से प्रसिद्ध है, पर उपसना नामक कर्म के प्रतिपादन करने से यह कर्ममीमांसा के अन्तर्गत है। एवं च चार ही अध्यायों को शारीरकमीमांसा भगवान् बादरायण (वेदव्यास) की बनाई हुई है, जो कि जीव और ब्रह्म के एकत्व-साक्षात्कार के हेतु श्रवणाख्य विचार के प्रतिपादक न्यायों को दिखलाती है। उसके पहिले अध्याय में समस्त वेदान्त के वाक्यों का साक्षात् वा परम्पराद्वारा प्रत्यगभिन्न अद्वितीय ब्रह्म में तात्पर्य्य लगाया है। यों ही दूसरे अध्याय में वेदान्त वाक्यों के अद्वितीय ब्रह्म में सिद्ध हो जाने पर सम्भावित स्मृति और तर्कादिकों के विरोध की शंका उठाकर उसका परिहार दे करके अविरोध को दिखाया है। फिर तीसरे अध्याय में साधन-निरूपण किया है। एवं चौथे अध्याय में सगुण और निर्गुण विद्याओं के फल विशेष का निर्णय किया गया है। यहीं सब शास्त्रो का मस्तक है और दूसरे शास्त्र इसी के शेषभूत (बचे-खुचे) हैं यही शास्त्र भगवान् शंकराचार्य के भाष्यानुसार समस्तमोक्षाभिलाषी लोगों के लिए आदरणीय है।

इसी प्रकार से धर्मशास्त्रों को भी-मनु १, याज्ञवल्क्य २, विष्णु ३, यम ४, अंगिरा ५, वसिष्ठ ६, दक्ष ७, संवर्त ८, शातातप ९, पराशर १०, गौतम ११, शंख १२, लिखित १३, हारीत १४, आपस्तम्ब १५, उशना १६, व्यास १७, कात्यायन १८, बृहस्पति १९, देवल २०, नारद २१, पैठीनसि २२, इत्यादि महर्षियों ने बनाये हैं -जो उन लोगों की स्मृतियाँ कही जाती हैं। इन सभी में वर्णाश्रम के धर्मविशेषों का विभाग विस्तारपूर्वक कहा गया है। यों ही व्यासरचित महाभारत तथा महर्षि वाल्मीकिकृत रामायण—यद्यपि इतिहास के नाम से प्रसिद्ध है; पर वास्तव में धर्मशास्त्रों ही के अन्तर्गत है। सांख्यादिक धर्मशास्त्रों में ही परिगणित हैं; परन्तु यहाँ पर उनका स्वतंत्र निर्देश किया है, अतएव वे सब पृथक् ही रक्खे जाते हैं।

अब चारों ही वेदों के चार उपवेदों का भी यथाक्रम प्रयोजन भेद दिखाया जाता है, उसमें ऋग्वेद का उपवेद आयुर्वेद, यजुर्वेद का धनुर्वेद, सामवेद का गान्धर्ववेद और अथर्ववेद का अर्थशास्त्र उपवेद है। इसमें आयुर्वेद के आठ भेद हैं, अर्थात् सूत्र १, शरीर २, ऐन्द्रिय ३, चिकित्सा ४, निदान ५, विमान ६, कल्प ७, और सिद्धि ८, जिनके क्रमशः ब्रह्मा १, प्रजापति २, अत्रि ३, धन्वन्तरि ४, इन्द्र ५, भरद्वाज ६, दत्तात्रेय ७, और अग्निवेश्य ८, इत्यादि कर्ता हैं। इन्हीं लोगों के उपदेशानुसार चरक मुनि ने उसे संक्षिप्त किया है। यों ही सुश्रुत ने भी पांच स्थानों (भेदों) का दूसरा प्रस्थान रचा है—और वाग्भट प्रभृति ने भी बहुत कुछ लिखा है। पर वह सबका एक ही विषय है। इसलिए शास्त्र में कोई भेद नहीं है। कामशास्त्र भी आयुर्वेद के ही अन्तर्गत है, क्योंकि सुश्रुत ने वाजीकरण—नामक कामशास्त्र

को लिखा है, उस पर वात्स्यायन मुनि ने पाँच अध्यायों में कामशास्त्र[1] बनाया है—उसका प्रयोजन केवल विषयों से वैराग्य होना ही है, क्योंकि शास्त्रोद्दीपित मार्ग से भी विषयों के भोग में केवल दुःख ही अन्त में प्राप्त होता है।

वैद्यक शास्त्र का प्रयोजन रोगों की उत्पत्ति के कारण तथा रोगों के दूर करने वाले उपाय आदि का ज्ञान होना ही मुख्य है। पादचतुष्टयात्मक धनुर्वेद को विश्वामित्रजी ने बनाया है। उनमें पहिला दीक्षापाद है, दूसरा संग्रहपाद, तीसरा सिद्धिपाद और चौथा प्रयोगपाद है। इसके प्रथम पाद में धनुष का लक्षण और अधिकारियों का निरूपण किया गया है। धनुः शब्द यद्यपि धनुष के ही लिए रूढ़ (प्रचलित) है। पर चारों ही प्रकार के आयुधों का सूचक है। वे चारों प्रकार ये हैं—मुक्त (चलाया गया), अमुक्त (हाथ में लिए हुए चलाया गया), मुक्तामुक्त (जिसे कभी हाथ में रखकर चलाना पड़े और कभी फेंककर चलाना पड़े), और यन्त्रमुक्त (जो दूसरे के सहारे से चलाया जाय),—जैसे-मुक्त-चक्र अथवा चक्रा इत्यादि, अमुक्त-खड्ग—तलवार, गदा इत्यादि, मुक्तामुक्त—भाला वा बरछी, त्रिशूल प्रभृति, और यंत्रमुक्त—बाण किंवा गोली इत्यादि। इसमें मुक्त को अस्त्र और अमुक्त को शस्त्र कहा जाता है। वे अस्त्र भी ब्राह्म, वैष्णव, पाशुपत, प्राजापत्य, आग्नेय इत्यादि भेदों से बहुत प्रकार के हैं। इस रीति से देवाधिष्ठित मंत्रों के सहित चारों प्रकार के आयुधों में जिन क्षत्रियकुमारों का अधिकार है, वे सब पदाति (पैदल) रथी, गजारोही और अश्वारोही (असवार) के भेद से चार प्रकार के होते हैं एवं दीक्षा, अभिषेक, शकुन और मंगलकरण इत्यादि—सब कुछ प्रथम पाद में निरूपित है। समस्त शस्त्र-विशेषों का तथा आचार्य का लक्षणपूर्वक ग्रहण करने की विधि दूसरे पाद में कही गई है। गुरु-संप्रदाय के अनुसार सिद्ध शस्त्र-विशेषों का बारंबार अभ्यास और मंत्र के देवता का सिद्ध करना तीसरे पाद में कथित है। फिर देवताओं की पूजा और अभ्यासादिक से सिद्ध हुए अस्त्र-विशेषों का प्रयोग करना चतुर्थपाद में वर्णित है। क्षत्रियों का निजधर्माचरण संग्राम करना तथा दुष्ट, डाकू (लुटेरे) और चोर इत्यादि से प्रजावर्ग का पालन करना ही धनुर्वेद का प्रयोजन है। इस भाँति ब्राह्मप्राजापत्यादि क्रम से विश्वामित्र का रचित धनुर्वेद-शास्त्र है।

गान्धर्ववेद-शास्त्र भरतमुनि ने निर्माण किया है, जिसमें नाचना, गाना और बजाने के भेद से बहुत प्रकार के प्रपंच है। देवता की आराधना और निर्विकल्प समाधि (चित्त की एकतानता) आदि की सिद्धि ही गान्धर्ववेद का प्रयोजन है।

अर्थशास्त्र के भी अनेक प्रकार हैं—जैसे—नीतिशास्त्र, अश्वशास्त्र, गजशास्त्र, शिल्पशास्त्र, सूपकारशास्त्र और चतुःषष्टिकलाशास्त्र। वे चौसठों कलाएँ शैवागम में यों कही गई हैं—

---

१. कामसूत्र में सात अधिकरण हैं। यथा—साधारण १. सांप्रयोगिक २, कन्यासंप्रयुक्तक ३, भार्याधिकारिक ४, पारदारिक ५, वैशिक ६, और औपनिषदिक ७। इनमें सब मिलकर ३६ अध्याय हैं, जिस पर यशोधर की जयमङ्गला नाम की टीका है। पाँच अध्यायों का कामशास्त्र कौन हैं ? ढूढ़ना चाहिए।

१. गीत
२. वाद्य
३. नृत्य
४. नाट्य
५. आलेख्य
६. विशेषकच्छेद्य
७. तण्डुलकुसुमबलिविकार
८. पुष्पास्तरण
९. दशनवसनाङ्गराग
१०. मणिभूमिकाकर्म
११. शयनरचना
१२. उदकवाद्य
१३. उदकघातवाद
१४. अद्भुतदर्शनवेदिता
१५. मालाग्रथनकल्प
१६. शेखरापीडयोजन
१७. नेपथ्ययोग
१८. कर्णपत्रभङ्ग
१९. गन्धयुक्ति
२०. भूषणयोजन
२१. इन्द्रजाल
२२. कौचुमारयोग
२३. हस्तलाघव
२४. चित्रशाकापूपविकारक्रिया
२५. पानकरसरागासवयोजन
२६. सूचीवापकर्म
२७. सूत्रक्रीडा
२८. वीणाडमरुकवाद्य
२९. प्रहेलिकाप्रतिमाला
३०. दुर्वचकयोग
३१. पुस्तकवाचन
३२. नाटिकाख्यायिकादर्शन
३३. काव्यसमस्यापूरण
३४. पट्टिकावेत्रवाणविकल्प
३५. तर्कुकर्म
३६. तक्षण
३७. वास्तुविद्या
३८. रूप्यरत्नपरीक्षा
३९. धातुवाद
४०. मणिरागज्ञान
४१. आकरज्ञान
४२. वृक्षायुर्वेद
४३. मेषकुक्कुटलावकयुद्धविधि
४४. शुकसारिकाप्रलापन
४५. उत्सादन
४६. केशमार्जनकौशल
४७. अक्षरमुष्टिकाकथन
४८. म्लेच्छितकविकल्प
४९. देशभाषाज्ञान
५०. पुष्पशकटिकानिमित्तज्ञान
५१. यंत्रमातृका
५२. धारणमातृका
५३. असंवाच्यसंपाट्य मानसीकाव्यक्रियाविकल
५४. छलितकयोग
५५. अभिधानकोशच्छन्दोज्ञान
५६. क्रियाविकल्प
५७. ललितविकल्प
५८. वस्त्रगोपन
५९. द्यूतविशेष
६०. आकर्षक्रीडा
६१. बालक्रीडनक
६२. वैनायिकीविद्याज्ञान
६३. वैजयिकविद्याज्ञान
६४. वैतालिकीविद्याज्ञान

ये ही चौसठों कलाएँ हैं।

उपर्युक्त समस्त विषयों को अनेक मुनियों ने बनाया है, उन सबों का लौकिक और अलौकिक, उनके-उनके प्रयोजनों का भेद समझना चाहिए।

इस प्रकार से अठारहों विद्याएँ त्रयीशब्द के द्वारा कही गईं।

अब सांख्य शास्त्र का निरूपण किया जाता है, जिसे भगवान् कपिलदेवजी ने निर्माण किया है, जैसा कि तुलसीदास-रामायण में कहा है—

"देवहूती पुनि तासु कुमारी, जो मुनि कर्दम की प्रिय नारी।
आदिदेव प्रभु दीन दयाला, जरठ धरेहु जेहि कपिल कृपाला।

सांख्य शास्त्र जिन प्रकट बखाना, तत्त्व विचार निपुन भगवाना" ॥ इति ॥

इसमें त्रिविध दुःखों की अतिशय निवृत्ति ही परम पुरुषार्थ है। यह छः अध्यायों में यों कहा गया है—प्रथम अध्याय में विषयों का निरूपण किया गया है, दूसरे में 'प्रधान' (मूलप्रकृति) के कार्यों को कहा है, तीसरे में विषय वैराग्य है, चौथे में पिंगलकुमारादिक विरक्तों की आख्यायिका है, पाँचवें में परपक्ष का निर्जय है, और छठें अध्याय में समस्त अर्थों का संक्षेप है। (सत्तर आर्य्याछंद की कारिकाओं में सांख्यकारिका नामक ग्रंथ प्रसिद्ध है। इस पर गौडपादाचार्य का भाष्य अथवा वाचस्पति मिश्र की वृत्ति पठन में प्रचलित है) प्रकृति-पुरुष का ज्ञान ही सांख्यशास्त्र का मुख्य प्रयोजन है।

योगशास्त्र भगवान् पतञ्जलि का बनाया हुआ है (योगसूत्र के नाम से प्रसिद्ध है)। इसमें चार पाद हैं। प्रथम पाद में चित्तवृत्ति का रोकना और समाधि एवं वैराग्य का रूप तथा उनके साधनों का निरूपण किया है। दूसरे पाद में विक्षिप्तचित्तवाले की समाधि की सिद्धि के लिए—यम १, नियम २, आसन ३, प्राणायाम ४, प्रत्याहार ५, धारणा ६, ध्यान ७, और समाधि ८ नामक योग के आठों अंगों को निरूपित किया है।

तीसरे पाद में योग की विभूतियों का वर्णन है। चौथे पाद में कैवल्य-निरूपण है। इस शास्त्र का विजातीय प्रत्ययों के निरोध द्वारा निदिध्यासन की सिद्धि ही प्रयोजन है। (योगसूत्र पर महाराज भोज-देव की बनाई हुई वृत्ति है)।

यों ही पाशुपत्ति-मत अर्थात् पाशुपतशास्त्र है, जिसे स्वयं भगवान् पशुपति ने ही पशुपाश को छुड़ाने के लिए पाँच अध्यायों में रचा है। इसके पाँचों ही अध्यायों में कार्यरूप-जीव ही पशु, कारण-पशुपति ईश्वर, उसी पशुपति में चित्त का समाधान करना योग, एवं भस्म से त्रिकाल स्नानादि कर्मों का करना ही विधि है। ये कार्य-कारण-योग और विधि दुःखान्त कहे जाते हैं। इसी दुःखान्त-संज्ञक मोक्ष की सिद्धि ही इस शास्त्र का प्रयोजन है। इसी रीति से शैव-मन्त्रशास्त्र भी पाशुपतशास्त्र के अन्तर्गत है।

(उक्त पाशुपत शास्त्र का वर्णन शिवपुराण की वायुसंहिता के पूर्वभाग में उनतीसवें अध्याय में भी पाया जाता है)।

इसी भाँति वैष्णवशास्त्र नारदादिमहर्षियों का बनाया हुआ है, जो नारदपंचरात्र कहलाता है। इसमें वासुदेव, संकर्षण, प्रद्युम्न, अनिरुद्ध—ये ही चारों पदार्थ निरूपित हैं। अर्थात् भगवान् वासुदेव परमेश्वर ही सबके कारण हैं, उन्हीं से संकर्षण नामक जीव उत्पन्न होता है—उसी से उत्पन्न हुआ प्रद्युम्न मन है—फिर उससे अनिरुद्धसंज्ञक अहंकार उत्पन्न होता है। ये सब भगवान् वासुदेव ही के अंशभूत होने से उनसे भिन्न नहीं हैं। अतः उसी वासुदेव की मन-वचन और काय से आराधना करके मनुष्य कृतकृत्य होता है। ये ही सब बातें

निरूपण की गईं हैं। वैष्णव मन्त्रशास्त्र भी पंचरात्र में अन्तर्भूत है (वैष्णव मत का विशेष वर्णन—पद्मपुराण-ब्रह्मवैवर्तपुराण के कृष्णजन्मखण्ड, विष्णुपुराण और भागवतादिकों में मिलता है, तथा च इस विषय में हरिभक्तिविलास नामक ग्रंथ अवश्य द्रष्टव्य है ।

इस प्रकार से समस्त प्रस्थान-भेद दिखला दिया गया। इन सबों के मतानुसार संक्षेप से तीन ही प्रस्थान भेद सिद्ध होते हैं, अर्थात् आरम्भवाद, परिणामवाद और विवर्तवाद। पृथ्वी, जल, तेज और वायु—इन्हीं चारों के परमाणु-द्वयणुक—इत्यादि क्रम से ब्रह्माण्ड-पर्यन्त जगत् को बनाते हैं। कार्य-कारण के व्यापार से असत् (झूठा) ही उत्पन्न होता है। यह पहिला आरम्भवाद–तर्कशास्त्र मतावलम्बी तथा मीमांसक लोगों का है। सत्त्व रज-तमोगुणात्मक प्रधान ही महत्, अहंकारादि के क्रम से जगत् का आकार बन जाता है। पूर्व भी सूक्ष्मरूप कारण व्यापार से सत् ही कार्य रूप में अभिव्यक्त होता है। यह दूसरा पक्ष परिणामवाद—सांख्य-योग और पाशुपतमतवालों का है। ब्रह्म का ही परिणाम जगत् है, यही वैष्णव लोगों का भी मत है।

स्वप्रकाश परमानन्द अद्वितीय ब्रह्म अपनी माया के वश मिथ्या की भाँति जगत् के आकार में कल्पित हो जाता है—यह तीसरा पक्ष विवर्तवाद ब्रह्मवादी लोगों का है। सभी प्रस्थान बनानेवाले मुनि लोगों का विवर्तवाद के अन्त में वेदान्तप्रतिपाद्य अद्वितीय ब्रह्म ही में तात्पर्य है। (यहाँ पर यह शंका होती है कि फिर इतने प्रस्थान (मतभेद) क्यों किए गए ? उसका समाधान यह है कि—) वे मुनि लोग भ्रान्त नहीं थे, सब कुछ जानते थे। किन्तु बाहरी विषयों में आसक्त होने से लोगों का यथार्थ प्रवेश परमपुरुषार्थ में नहीं हो सकता। अतएव नास्तिकता को दूर करने की इच्छा से उन महानुभावों ने ये सब प्रकार भेद दिखलाए हैं। इसी कारण से उन लोगों के ठीक-ठीक तात्पर्य को विना समझे ही जो लोग वेद से विरुद्ध अर्थ में भी उनके तात्पर्य की उत्प्रेक्षा करके उनके मत को उपादेय समझ कर ग्रहण कर लेते हैं, वे ही—ऋजुकुटिलनानापथगामी (धारी) होते हैं। इसी से सभी लोगों का सीधे मार्ग में प्रवेश नहीं होता—और इसी विपर्यय में परमेश्वर की भी प्राप्ति नहीं हो सकती। हाँ, अन्तःकरण के शुद्ध हो जाने पर पीछे से ऋजुमार्ग का आश्रयण करने से ही सिद्धिलाभ होता है। यह समस्त शास्त्रों का निचोड़ है ॥७॥

### भाषापद्यानुवाद

वैदिक सांख्य अरु जोग मत, वैष्णव पाशुपतादि।
कहत एकते भिन्न पथ, यह उत्तम हितवादि ॥
सूधे टेढ़े मार्ग चलि, रुचि विचित्रता पाय।
जल अस बहतो जाइ नर, तुम सम सिंधु समाय ॥६॥

### भाषाबिम्ब

गुनैं कोऊ वेदै हरि हर मती सांख्य-मत को,
कहै योगाभ्यासी, सुगम पथ ये ही सबहि मो।
रुची नानाभांती ऋजु कुटिल मार्गें धरि (बहि) चली,
नरों के नारों के जलधि-सम हौ गम्य तुमहीं ॥६॥

एवं सर्वशङ्कोद्धारेण हरिहरस्वरूपं निरूप्य तदेवार्वाचीनपदस्थं स्तौति—

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं विदधति तु भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥८॥

## मधुसूदनी

महोक्ष इति। हे वरद, तव परिपूर्णपरमेश्वरस्याप्येतत्तन्त्रोपकरणं तन्त्रस्य कुटुम्बधारणस्योपकरणं साधनम् । तदेवाह । महोक्षः महानुक्षा वृद्धवृषभः, खट्वाङ्गं खट्वाया अवयवः शस्त्रविशेषः कापालिकानां प्रसिद्धः, परशुः टङ्कः कुठारो वा, अजिनं चर्म, भस्म पांशुः, फणिनः सर्पाः, कपालं मनुष्यशिरोस्थि चेति सप्तकम् । नन्वेवं दरिद्रस्तुष्टोऽपि किंदास्यतीत्यत आह—सुरा इत्यादि । सुरास्तु भवत्सेवया भवद्भ्रूप्रणिहितां भवतो भ्रूविक्षेपमात्रेण समर्पितां तां तामसाधारणीमृद्धिं संपत्तिं दधति धारयन्ति । त्वमतिदरिद्रस्त्वद्भक्तास्तु सर्वे सुरास्त्वत्प्रसादात्समृद्धा इति व्यतिरेकं तुशब्द आह । यो ह्यन्यान्धनवतः करोति, स तदपेक्षयाधिकधनवान्भवतीति प्रसिद्धं लोके ।

ननु तर्हीदृशोऽपि स्वयं कथं महोक्षादिमात्रपरिवार इत्यत आह—नहीत्यादि । हि यस्मात् स्वे आत्मनि स्वरूपे चिदानन्दघने आरमत्याक्रीडत इति तथा तं न भ्रमयति न मोहयति। विषयमृगतृष्णा विषया इन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धास्त एव मृगतृष्णा जलबुद्धया गृह्यमाणा मरीचिका । यथा मृगतृष्णा रविरश्मिरूपा जलविरुद्धस्वभावापि भ्रान्त्या जलमयीवाभासते तथा विषया अपि दुःस्वरूपा भ्रान्त्या सुखरूपा आभासन्त इति रूपकार्थः । यत्र जीवोऽपि स्वात्मारामतां प्राप्तो न विषयासक्तो भवति, तत्र किमु वक्तव्यं नित्यमुक्तः परमेश्वरो विषयैर्नाभिभूयत इत्यभिप्रायः । तेन वृषभारूढा खट्वाङ्गपरशुफणिकपालालङ्कृतचतुर्भुजा चर्मवसना भस्माङ्गरागा विविधभूषणा माहेश्वरी मूर्त्तिर्गुरूपदेशेन ज्ञाता स्तुत्यादिभिराराध्येत्यर्थः ।

वस्तुतस्तु पुरुषप्रधानमहदहङ्कारतन्मात्रेन्द्रियभूतानि महोक्षादिरूपेण गुप्तानि भगवन्तं महेश्वरमुपासत इत्यागमप्रसिद्धम् । तस्य जगत्कुटुम्बस्य तत्त्वान्येवोपकारणमिति निष्कर्षः ।

हरिपक्षे—तु महोक्षः अक्षश्चक्रं 'अक्षो रथावयवके च बिभीतके स्यादक्षाणि पण्डितजना विदुरिन्द्रियाणि'—इति धरणिः । महस्तेजोरूपम्, भस्मफणिनः भस्मवच्छुभ्रस्य कोमलाङ्गस्य च फणिनः शेषस्याऽजिनं शरीरत्वक् खट्वा शय्या । तथा

---

१. विदधति चेति पाठः ।

कपालं कं शिरः पाल्यतेऽनेनेति कपालं शिर उपधानं तस्यैव भस्मफणिनोऽङ्गं किञ्चिदुच्छ्रितावयवविशेषः। अथवा केन जलेन पाल्यत इति कपालं पद्मं शंखो वा तस्मिन्पक्षे भस्मफणिनोऽङ्गं अजिनं च खट्वा, अङ्गं पर्यङ्कस्थानीयं अजिनं च तदुपरि आस्तृतवस्त्रस्थानीयमिति बोद्धव्यम्। तथा परशुरिति परशुरामावताराभिप्रायेण। हे वरद, एतावदेव तन्त्रोपकरणमित्यादिपूर्ववत्। अथवा विषयमृगतृष्णा अविद्यान्तःकरणोपरक्तं प्रतिबिम्बकल्पं जीवं व्यामोहयत्यपि रामम् अनन्तसत्यज्ञानानन्दात्मकत्वेन योगिनां[1] रतिविषयं त्वां बिम्बकल्पं न मोहयति न स्वावरणांशेनाभिभवति। उपाधेः प्रतिबिम्बपक्षपातित्वात्। कीदृशी सा। स्वात्मा स्वः सच्चिदानन्दात्मकस्त्वमेवात्मा स्वरूपं यस्याः सा, तथा त्वय्यध्यस्ता सा स्वसत्तास्फूर्तिपदं त्वां कथं व्यामोहयेदित्यर्थः। अत्रापि चक्रादीनां भगवद्विभूतित्वं विष्णुपुराणादौ प्रसिद्धम् ॥८॥

## नारायणी

(वरद !) हे वरदानोन्मुख ! (महोक्षः) महांश्चासौ उक्षा च महोक्षः महावृषभः। **'अचतुर०'** (अष्टा० ५।४।७७) इत्यादिना निपातनात्साधुः। (खट्वाङ्गं) सुखं सुणपर्यायोऽस्त्रविशेषः, क्वचिद्दण्डस्योपरिब्रह्मकपालं खट्वाङ्गमुच्यते, क्वचित् 'खट्वाङ्गं नरपञ्जरम्'—इत्यप्युक्तम्। तथा (परशुः) परं शृणातीति परशुः 'आङ्परयोः खनिशृभ्यां डिच्च' (उणा० १।३३) इति कुः। परश्वधापरपर्यायः प्रसिद्धोऽस्त्रविशेषः। (अजिनम्) चर्म्म, (भस्म) क्षारं (भस्मतत्त्वज्ञानार्थं बृहज्जाबालोपनिषद् द्रष्टव्येति) (फणिनः) सर्पाः, (कपालं) मुण्डं (च) इति समुच्चये (इति) एवं विधम्, (इयत्) एतावदेव (तव) ते (तन्त्रोपकरणं) प्रधानपरिच्छेदः, प्रपञ्चरूपेण स्थितमुपकारकमिति वा। अस्तीति शेषः। परन्तु (सुराः) देवाः इन्द्रादयः (भवद्भ्रूप्रणिहितां) भवतो भ्रूक्षेपमात्रेण प्रदत्तां (तां ताम्) अतिशयप्रसिद्धाम् (ऋद्धिं) सम्पदं (विदधति) धारयन्ति। यद्येवं तर्हि स्वयं कथन्नोपभुज्यते ? इत्याशङ्क्याह। (हि) यस्मात् कारणात् (विषयमृगतृष्णा) भोगानां तुच्छा मृगतृष्णिकेव ईहा (स्वात्मारामम्) आत्मतत्त्वज्ञं योगिनं पुरुषं (न भ्रमयति) कदापि नैव चालयितुं शक्नोति। अत्र भगवतोऽभव्यं परिच्छेदं वर्णयित्वा परमसमृद्धिदातृत्वं च प्रदर्श्य निर्मायित्वपरमयोगित्वादिगुणगणा यथावदेव विशदीकृता इति ॥ ८ ॥

## संस्कृतपद्यानुवादः

महोक्षखट्वाङ्गकपालसर्पा भस्माजिनं पर्शुरियत्त्वदीयम्।
प्रपञ्चरूपेण महोपकारि मतं प्रभो ! ते वरदाग्रगण्यः॥
परन्तु शक्रादय एव देवा भ्रूक्षेपमात्रेण त्वया प्रदत्ताम्।
समृद्धिमृद्धां शिव ! धारयन्ति न याति योगी विषयेषु तृष्णाम् ॥ ८ ॥

---

१. 'योगिनामविषयम्' इति पाठः।

## भाषाटीका

(वरद !) हे वरदायक ! (महोक्षः) बड़ा अथवा बूढ़ा बैल (खट्वाङ्गं) अस्त्रविशेष (अथवा पाटो के समान कापालिक लोगों का प्रसिद्ध कहीं-कहीं मनुष्य की पंजड़ी को भी खट्वांग कहते हैं) (परशुः) फरसा, (अजिनं) चमड़ा अथवा खाल, (भस्म) छार, राखी (फणिनः) सांप (कपाल) मुंड, खोपड़ी (च) इत्यादि (इति) इस भाँति से (इयत्) इतनी ही भर (तव) आपकी (तंत्रोपकरणं) पूँजीपसार (हैसियत) है। परन्तु (सुराः) देवता लोग (भवद्भ्रूप्रणिहितां) आपकी भृगुटी के प्रसाद की दी हुई, (तां तां) उन-उन अर्थात् बड़ी भारी (ऋद्धिं) संपत्ति को (विदधति) धारण करते हैं, अर्थात् भोगते हैं। यदि आप ऐसे दानी हैं, तो स्वयं क्यों नहीं संमत्तियों को भोगते ? इस शंका पर कहते हैं कि (हि) क्योंकि (स्वात्मारामं) आत्मज्ञानी योगी पुरुष को (विषयमृगतृष्णा) विषयों की अर्थात् रूप-रस-गन्ध-स्पर्श और शब्द-रूपी मृगतृष्णा-जल की बुद्धि से बालूपर पड़े हुए के किरण (अभिप्राय यह कि जल से विरुद्ध स्वभाव होने पर भी बालूपर पड़े हुए सूर्य के किरण, भ्रम में पड़े हुए तृषार्त मृगों को जैसे जलमय ही भासते हैं, वैसे ही भ्रान्तिवश दुःखमय विषय भी सुखरूप जान पड़ते हैं) (न) नहीं, (भ्रमयति) भ्रम में डाल सकती है। तात्पर्य यह है कि आपकी सवारी बैल, चारों हाथों में खट्वांग फरसा, सर्प और कपाल, खाल ही का ओढ़ना बिछौना और अंगराग राख ही भर तो है। पर आपही की भौंके हिलने से ब्रह्मा-विष्णु-इन्द्रादिक देवता लोग भी बड़ी से बड़ी समृद्धियों का भोग करते हैं। किन्तु आप आत्मज्ञानी महापुरुष होने के कारण उन तुच्छ विषयों की भोग-लालसा नहीं करते। वास्तव में आत्मज्ञान हो जाने पर साधारण जीव भी विषयासक्त नहीं होते, तो फिर साक्षात् परमेश्वर को विषयों की मृग-तृष्णा कैसे भरमा सकती ? इसके पूर्व निर्गुण ईश्वर की स्तुति हो चुकी है। इसी से इस श्लोक में अर्वाचीन अर्थात् सगुणरूप का वर्णन किया है। महादेव के स्वरूप का वर्णन तुलसीदासजी ने भी रामायण में गौरी-विवाह प्रकरण में ऐसा ही किया है—

यथा—

"कुण्डल कंकन पहिरे व्याला, तनु विभूति पट केहरि छाला।
शशि ललाट सुंदर सिर गंगा, नयन तीन उपवीत भुजंगा।
गरल कंठ तर नर-सिर माला, अशिव भेष शिव धाम कृपाला।
कर त्रिशूल अरु डमरू विराजा, चले वसह चढ़ि बाजहिं बाजा" ॥
(तु० रा) ॥ ८ ॥

## भाषापद्यानुवाद

वरधा टाङ्गा खाल फनि, फरसा राख कपार।
वरदायक ! इतनी अहै, तुमरी पूँजि पसार ॥
तुव भृकुटी के हिलन (दान) ते, लहत ऋद्धि सब देव।
आतम ज्ञानिहि विषय की, मृग-तृष्णा नहि सेव ॥ ८ ॥

### भाषाबिम्ब

खड्डा बर्धा टांगा प (फ) रसु मृग (गज) छाला भसम लै,
कपालै सर्पों को ध (क) रत निज तंत्रोपकरनै।
समृद्धी पावैहैं सकल सुर तो-भौंह हिल तै,
प्रभू-लोगों पै तो विषय-मृगत्रिस्ना (तृष्णा) नहि चढ़ै॥ ८॥

•

एवं स्तुत्ययोर्हरिहरयोर्निर्गुणं सगुणं च स्वरूपं निरूपितम्, सम्प्रति स्तुतेः प्रकारं निरूपयन् स्तौति—

ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये।
समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता॥९॥

### मधुसूदनी

**ध्रुवमिति**—हे पुरमथन, तैः स्तुतिप्रकारैस्त्वां स्तुवन्न जिह्रेमि नाहं लज्जे। विस्मित इव जातचमत्कार इव। यथा कश्चिदद्भुतं दृष्ट्वा विस्मितस्तत्परत्रशत्वाल्लोकोपहासमगणयित्वा विचेष्टते, तथाऽहमपि स्तोतुमयं न जानातीति जनो मामुपहसिष्यतीति लज्जामगणयन् त्वत्स्तुतौ प्रवृत्तोऽस्तीत्यर्थः। तैः कैः प्रकारैरित्याह। ध्रुवमित्यादि। कश्चित् कोऽपि सांख्यपातञ्जलमतानुसारी सर्वं समग्रं जगद् ध्रुवं जन्मनिधनरहितं सदेव गदति। व्यक्तं वदतीत्यर्थः। न ह्यसत उत्पत्तिः संभवति, न वा सतो विनाश—इत्याविर्भावतिरोभावमात्रमुत्पत्तिविनाशशब्दाभ्यामभिलक्ष्यते। तेन परमेश्वरोऽपि तावन्मात्रस्येष्टे न त्वसत उत्पत्तेः, सतो वा विनाशस्येत्यभिप्रायः। इति सत्कार्यवाद एकः पक्षः। तथाऽपरोऽन्यः सुगतमतानुवर्ती सकलमिदमध्रुवं क्षणिकमिति गदति। नहि सतः स्थिरत्वं सम्भवति। अर्थक्रियाकारित्वमेव सत्त्वम्[१]। तच्च सदर्थस्येक्षणयोगेन न विलम्बेनोत्पद्यते इति। एकस्मिन् क्षणे सर्वार्थक्रियासमाप्तेरुत्तरक्षणेऽसत्त्वमेव। तथा च परमेश्वरस्यापि क्षणिकविज्ञानसन्तानरूपत्वादसावसत उत्पत्तेरीष्टे, न तु सतः स्थिरत्वायेति द्वितीयः पक्षः सर्वक्षणिकतावादलक्षणः। तदुभयपक्षासहिष्णुश्च परस्तार्किकः समस्तेऽप्येतस्मिञ्जगति ध्रौव्याध्रौव्ये नित्यत्वानित्यत्वे व्यस्तविषये

१. 'सदर्थस्याक्षेपायोगेन' इति पाठः।

भिन्नधर्मवर्तिनी गदति, (आकाशादिचतुष्कपृथिव्यादिचतुष्कपरमाणवश्च नित्याः। आकाशकालदिगात्ममनः पृथिव्यादिपरमाणवश्च नित्याः इति वा) कार्यद्रव्याणि चानित्यानि। तथा चानित्यानामुत्पत्तिविनाशयोरीष्टे परमेश्वरो न तु नित्यानामपीत्यर्थः। इत्येवं तृतीयः पक्षः। तथा च त्रिष्वप्येतेषु द्वैताङ्गीकारादद्वितीयसन्मात्ररूपस्य परमेश्वरस्य स्पर्शोऽपि नास्तीति सोपाधिकसंकुचितैश्वर्यरूपेण स्तुतिः सर्वथा लज्जाकरीत्यर्थः। तर्हि किमिति न लज्जस इत्यत आह। ननु अहो खलु निश्चितं मुखरता वाचालता धृष्टा निर्लज्जा। तथा च मुखरतैव लज्जामपहरतीत्यर्थः। एवं सर्वप्रकारप्रवादकवादादीनामाभासत्वमुक्तम्, अद्वितीयवादस्यैव लज्जानास्पदत्वेन सत्यत्वमिति द्रष्टव्यम्। एतच्च 'त्वमर्कस्त्वं सोमः' इत्यादौ स्पष्टीकरिष्यते।

हरिपक्षेऽप्येवम्—तत्र पुरमथनशब्दः प्राग् व्याख्यातः ॥ ९ ॥

## नारायणी

(पुरमथन !) हे त्रिपुरदाहक ! (कश्चित्) सांख्यपातञ्जलदर्शनानुयायी (सर्वं) सचराचरमखिलम् (इदं) दृश्यमानं (जगत्) ब्रह्माण्डमण्डलं (ध्रुवं) नित्यम् अविनाशीति-यावत्, (गदति) कथयति, तन्मते समस्तमपीदं जगदविनश्वरमेव। (तु) इति हेतुनिदर्शनम्। (अपरः) तद्भिन्नो बौद्धादिमतानुवर्ती (सकलम्) अशेषं जगत्, (अध्रुवम्) अनित्यमेव वदति। (परः) ताभ्यामन्यो वीतरागो मध्यस्थः तार्किको वा (समस्तेऽप्येतस्मिञ्जगति, ध्रौव्याध्रौव्ये) ध्रुवत्वाध्रुवत्वे, नित्यत्वानित्यत्वे इत्यर्थः। (व्यस्तविषये) निक्षिप्तप्रपञ्चकं परमाण्वादिकं च नित्यं, घटपटादिकार्यजातमनित्यमिति वदति। अनेन प्रकारेण तैः पूर्वकथितनित्यत्वानित्यत्वादिवादिभिः (विस्मित इव) आश्चर्यतां गतो मोहितश्चाहं (त्वां) भवन्तं (स्तुवन्) स्तुत्या तोषयन्, सन् (जिह्नेमि) लज्जे, लज्जितो भवामि (ननु) अहो ! (खलु) निश्चयेन (मुखरता) वाचालता, (न धृष्टा) अपितु सर्वथैव धृष्टेति ध्वनेरभिप्रायः। क्वचिन्नकारस्य जिह्नेमीति पदेनैव संगतिरूरीकृता। अत्र जगतो नित्यत्वमनित्यत्वं नित्यानित्यत्वञ्च तत्तत् पथानुसारेण दर्शयित्वा तद्विषये स्वाश्चर्यतामपि प्रतिपाद्य भगवतः स्तुत्यर्थमात्मनो वाचालतैव प्रकटीकृतेति ॥ ९ ॥

## संस्कृतपद्यानुवादः

एको ध्रुवं वक्ति जगत्समग्रं परो वदत्यध्रुवमेव सर्वम्।
ध्रुवाध्रुवं कश्चिदिदं ब्रवीति व्यस्तत्समस्तो विषयस्ततोऽस्य ॥
एवं वदद्भिर्बहुभिर्निजं मतं तैर्वादिभिर्विस्मयतामहं गतः।
लज्जे स्तुवंस्त्वां त्रिपुरासुरान्तक ! वाचालता धृष्टतया युनक्ति माम् ॥९॥

## भाषाटीका

इस प्रकार से भगवान् के निर्गुण और सगुण रूपों का वर्णन करके अब स्तुति करने का प्रकार दिखलाते हैं—(पुरमथन !) हे त्रिपुरासुरदाहक ! (कश्चित्) कोई, अर्थात् सांख्य और पातंजल इत्यादि दर्शनों को माननेवाला (इदं सर्वं) यह सचराचर समस्त (जगत्) ब्रह्माण्ड ध्रुवं) नित्य है, अर्थात् इसका कभी नाश नहीं होता—ऐसा ही कहता है, (अपरस्तु) और उससे भिन्न दूसरा तो, अर्थात् बौद्धादिक (सकलं अध्रुवं) अशेष (सारा) संसार अनित्य है, यही सिद्ध करता है। (परः) इन दोनों से भिन्न वीतरागी अथवा तार्किक (समस्ते अपि एतस्मिन् जगति ध्रौव्याध्रौव्ये व्यस्तविषये) इस समग्र संसार में नित्यत्व, अनित्यत्व भिन्नधर्मवर्ती बने रहते हैं—अर्थात् जगत् में नित्यत्व और अनित्यत्व दोनों ही मिले हैं—अभिप्राय यह कि पृथिवी, जल, तेज, वायु के परमाणु और आकाश, काल, दिशा–आत्मादि तो नित्य हैं और द्वयणुकादि कार्यद्रव्य अनित्य हैं ऐसा (गदति) कहता है। अत एव (तौ) उन सब दार्शनिकों द्वारा (विस्मित इव) मानों चकित होकर (त्वां स्तुवन्) मैं आपकी स्तुति करता हुआ, (जिह्रेमि) बहुत लज्जित हो रहा हूँ ! (ननु) अहो (खलु) निश्चय करके (मुखरता न धृष्टा ) वाचालता धृष्ट नहीं है ? अर्थात् धृष्ट ही है। भाव यह है कि, ऊपर के कहे हुए तीनों प्रकार के मतवादियों ने द्वैत को ही स्वीकार किया है—इसी से अद्वैतरूप सन्मात्र परमेश्वर का स्पर्श भी नहीं होने पाता। इसलिए इन लोगों की सिद्धान्त-शैली को देखकर मैं तो आश्चर्य में पड़ गया हूँ। इसी से आपकी स्तुति करने में लज्जित हो रहा हूँ। फिर भी बकवादीपन, ढीठाई किए बिना नहीं मानता ॥ ९ ॥

## भाषापद्यानुवाद

एक कहत जग नित्य यह, दूजो कहत अनित्य।
अपर कहत दोऊ मिलत, जग में नित्य-अनित्य ॥
इहि विधि अचरज में परो, अस्तुति करत लजाउं।
काह करौं बाचालता, (बकवादिपन) लहत ढिठाई ठाउँ ॥ ९ ॥

## भाषाबिम्ब

कहै कोऊ सारा जगत नित, दूजे अनित है,
परे भाषैं नाही नित अनित दोऊ मिलित है।
यही भांती कर्ते स्तुति चकित ह्वै लज्जित बनौं,
नहीं ढीठी जिह्वा तजति बकवादीपन तबौं ॥ ९ ॥

एवं श्लोकनवकेन स्तुतिसामग्रीं निरूप्य स्तुतौ प्रस्तुतायां समस्तप्रभाववता-मग्रेसरयोर्हरिविरञ्च्योरपि त्वत्प्रसादादेव त्वत्साक्षात्कार इत्येवं निरतिशयं माहात्म्यं प्रकटयन् स्तौति—

तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चिर्हरिरधः
परिच्छेत्तुं यातावनलमनलस्कन्धवपुषः ।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश य-
त्स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥१०॥

## मधुसूदनी

**तवेति**—हे गिरिश, तवानुवृत्तिः सेवा किं न फलति ? अपितु सर्वमेवं फलति । त्वत्साक्षात्कारपर्यन्तं फलं ददातीत्यर्थः । तत्रान्वयव्यतिरेकाभ्यां कारणतां द्रढयितुं भगवदनुवृत्तिव्यतिरेके फलव्यतिरेकमाह । यद्यस्मादनलस्कन्धवपुषस्तेजःपुञ्जमूर्तेस्त-वैश्वर्यं स्थूलं रूपं परिच्छेत्तुमियत्तयावधारयितुमुपर्यूर्ध्वं विरिञ्चिर्ब्रह्मा अधोऽधस्ताद्ध-रिर्विष्णुः यत्नात्सर्वप्रयत्नेन यावद्गन्तुं शक्तौ तावद्यातौ गतौ अनलं नाऽलम् । न परिच्छेत्तुं समर्थावित्यर्थः । यत्र स्थूलरूपमप्यपरिच्छेद्यम्, तत्र दूरे सूक्ष्मरूपमप्यपरिच्छेद-सम्भावना । तेन त्वदनुवृत्तिं विना हरिविरिञ्च्योः प्रसिद्धमहाप्रभावयोरपि त्वं न विज्ञेयस्तत्र का वार्ताऽन्येषामिति व्यतिरेकमुक्त्वाऽन्वयमाह ।

ततस्तस्मात् ( कारणात् ) स्वयत्नवैफल्यादनन्तरं ताभ्यां हरिविरञ्चिभ्याम् । **'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः'** (अष्टा० १।४।३४) इति चतुर्थी । तयोर्ज्ञानायेत्यर्थः । कीदृशाभ्यां भक्तिश्रद्धाभरगुरुगृणद्भ्याम् । भक्तिरत्र कायिकी सेवा, श्रद्धाऽऽस्तिक्यबुद्धिः (मानसीसेवा), तयोर्भरोऽतिशयस्तेन गुरुं श्रेष्ठं निरतिशयं यथा तथा गृणद्भ्यां वाचिकीं सेवां कुर्वद्भ्याम् । यद्धि गुरुतरं भवति शिलोच्चयादि तत्पवनपर्जन्यादिभिर्न विक्रियामुपैति, अलघुद्रव्यत्वात्, तथा स्तुतिरप्यतिगौरववती शिलोच्चयादिस्थानीया पवनपर्जन्यस्थानीयैर्विघ्नैश्चालयितुं न शक्येति गुरुशब्देन ध्वनितम् । एवं रूपेण तवैश्वर्यं स्तुवद्भ्यां ताभ्यां किमित्याह । स्वयं तस्थे स्वयमेव, न तु तयोः प्रयत्नेन तस्थे स्वमात्मानं प्रकाशयति स्म । अत्र तवैश्वर्यमिति कर्तृपदं द्रष्टव्यम् । **'प्रकाशनस्थे-याख्ययोश्च'** (अष्टा० १।३।२३) इत्यात्मनेपदम् । यद्वा गृणद्भ्यामिति कर्तरि तृतीया । तस्थे स्थितं निवृत्तमिति भावप्रत्ययः । ततस्तयोर्निवृत्तावपि किं तवानुवृत्तिर्न फलति; अपितु फलत्येवेत्यर्थः । तस्मादेव हरिविरिञ्चिभ्यामपि त्वदनुवृत्त्यैव त्वं साक्षात्कृतः का वार्ताऽन्येषामित्यन्वय उक्तः । एवं त्वदनुवृत्तिरेव सर्वं फलतीत्यन्वयव्यतिरेकाभ्यां दृढीकृतम् ।

**हरिपक्षे** तु गिरौ गोवर्धनाख्ये शेते गोपी रमयन्निति गिरिशः श्रीविष्णुः । अथवा गिरिं मन्दरं श्यति तनूकरोति क्षीरोदं मथन्निति गिरिशः । योजनिका पूर्ववत् ।

हरिः सर्पः शेषः विरिञ्चिशेषाभ्यामपि त्वत्कृपयैव त्वं प्राप्त इति पूर्ववत्सर्वम् । अत्र 'अनिल' इति क्वचित्पाठः, स न साम्प्रदायिकः । तथा चान्यत्रोक्तम्—**'नोर्ध्वं गम्यः सरसिजभुवो नाप्यधः शार्ङ्गपाणेरासीदन्तस्तव हुतवहस्कन्धमूर्त्त्या स्थितस्य'** इति ॥१०॥

## नारायणी

(गिरिश !) हे गिरिशायिन् ! गिरौ शेते इति गिरिशः—**'गिरौ डश्छन्दसि'** (अष्टा० ३।२।१५) इत्यतो डः । अथवा गिरिराश्रयत्वेनास्यास्ति—**'लोमादिपामादि'** (अष्टा० ५।२।१००) इत्यादिना शः । तथा चोक्तमपि क्वचित्—**'हरो हिमालये शेते हरिश्शेते महादधौ'** । (अनलस्कन्धवपुषः) ज्योतिस्समूहशरीरस्य, ज्योतिरूपस्येत्यर्थः । (तव) भवतः (ऐश्वर्यं) महत्त्वम्, स्थूलरूपमित्यर्थः, (यत्नात्) महता परिश्रमेण (परिच्छेत्तुम्) एतावदिति निश्चेतुम्, परीक्षार्थं वा, (उपरि) ऊर्ध्वदेशे (विरिञ्चिः) ब्रह्मा । **'विरिञ्चो द्रुहिणः शिञ्जो विरिञ्चिद्रुघणो मतः'** इति शब्दार्णवः । क्वचिद् विरञ्चिरपि लभ्यते—'चिरं विरञ्चिर्नचिरं विरञ्चिः' इति । (हरिः) विष्णुः, (अधः) अधोदेश एवं इमौ ब्रह्मविष्णू (अनलं यातौ) असमर्थौ भूतौ, क्वचित् **'अनिलस्कन्धवपुषः'** इत्यपि पाठो दृश्यते, तत्र वायुशरीरस्येत्यर्थः । ततो वायुतत्त्वपर्य्यंतं लिङ्गस्य मस्तकं कालाग्निपर्यन्तं मूलम्, ब्रह्मा ब्रह्माण्डव्यापी, विष्णुरप्तत्त्वनिवासी, कथमेतौ भवतो महिमानं परिज्ञातुं समर्थौ स्यातामिति तात्पर्य्यार्थः । (ततः) तदनन्तरं (भक्तिश्रद्धाभरगुरुगृणद्भ्यां) भक्तिर्भजनम्, श्रद्धा विश्वासपूर्विका स्पृहा, तयोर्भरः समूहो भारो वा महत्त्वमित्यर्थः । तेन गुरु महत् यथा भवति तथा गृणद्भ्यां स्तुवद्भ्यां (ताभ्यां) ब्रह्मविष्णुभ्याम् अत्र—**'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः'** (अष्टा० १।४।३४) इत्यतो बोधनार्थे चतुर्थी । (यत्) तवैश्वर्यं, (स्वयं) स्वयमेव (तस्थे) प्राप । **'प्रकाशनस्थेयाख्ययोश्च'** (अष्टा० १।३।२३) इत्यात्मनेपदम् । (तव) भवतः (अनुवृत्तिः) सेवनं (किन्न फलति), अपितु सर्वमेव ददातीत्यर्थः । अत्र कदाचिदहमहमिकया विवदतोर्ब्रह्मविष्णवोर्मध्ये ज्योतिरूपं लिङ्गं प्रकटय्य तदाद्यन्तसीमपरिज्ञानार्थमादिश्य च भगवता तौ असमर्थौ सन्तौ स्वयमनुगृहीतौ इति शैवपुराणोक्ता कथाऽवगन्तव्या, स्कन्दपुराणस्य माहेश्वरखण्डान्तर्गताऽरुणाचलमाहात्म्येऽप्येषा कथा सविस्तरा वर्णितास्तीति च । तथा चैवमेवोक्तमस्मत्पितृव्यैः 'पण्डितचन्द्रशेखरत्रिपाठिभि'र्निजनिर्मितविश्वनाथस्तुतौ—

> **यः कञ्जभूकमलनाभविवादकाले**
> **प्रादुश्चकार निजबोधमनन्तलिङ्गम् ।**
> **पूज्यं हरिं विधिमपूज्य मतश्चकार**
> **तं विश्वनाथमुमया सहितं भजेऽहम् ॥**

(स्कन्दपु० माहेश्वर–कौमारिकाखं०–३३ अ०)

> **सृष्ट्यादौ लिङ्गरूपी स विवादो मम ब्रह्मणः ।**
> **अभूद्यस्य परिच्छेदे नालमावां बभूविव ॥ २८।१ ॥**

## संस्कृतपद्यानुवादः

ज्योतिः स्वरूपस्य हि वैभवं ते ज्ञातुं गतोऽधो जलशायिदेवः ।
ब्रह्मोपरिष्टादपि नो समर्थौ स्यातां यदा तौ सुरवृन्दवन्द्यौ ॥
श्रद्धामहाभक्तिभरैः स्तुवद्भ्यां ताभ्यां तदा तत्स्वयमेव तस्थे ।
स्वयं प्रकाशाऽद्य ! गिरीश ! सत्यं तवानुवृत्तिः फलिनी सदैव ॥ १० ॥

## भाषाटीका

(गिरिश !) हे कैलासवासिन् ! (अनलस्कन्धवपुषः) ज्योतिःपुंजशरीरधारी, अर्थात् ज्योतीरूप (तव) आपके (ऐश्वर्यं) माहात्म्य को, किं वा स्थूलरूप को, (परिच्छेत्तुं) परखने के लिए, कितना है—इसकी जाँच करने को (यत्नात्) बड़े परिश्रम से (विरंचिः) ब्रह्मा, तो (उपरि) ऊपर की ओर और (हरिः) भगवान् विष्णु (अधः) नीचे की ओर (यातौ) जाने पर (अनलं) असमर्थ ही हुए—(ततः) तदनंतर (भक्तिश्रद्धाभरगुरुगृणद्भ्यां ताभ्यां) भजन और श्रद्धा के भार से गौरवयुक्त होकर स्तुति करने पर उन दोनों ही देवश्रेष्ठों से (स्वयं तस्थे) आप स्वयं मिले, अथवा प्रकाशित हुए; क्योंकि (तव अनुवृत्तिः किं न फलति ?) आपकी सेवा क्या नहीं फलती है ? अर्थात् सभी फलों को देती है । तात्पर्य्य यह है कि पूर्वोक्त श्लोकों में स्तुति की सामग्री का निरूपण किया, फिर स्तुति आरम्भ करके कहते हैं—परमप्रभावशाली ब्रह्मा-विष्णु भी आप ही के भजन और सेवन से आपको जान सके हैं, यह बात भी प्रकट कर दी—क्योंकि ब्रह्मा तो ब्रह्माण्डभर ही में व्याप्त रहते हैं, और विष्णु जलतत्त्व के निवासी होने से उन सबके परे रहने वाले आपको कैसे जान सकते हैं हाँ, जब आप ही स्वयं उनको जना देते हैं, तभी जान सकते हैं । जैसा कहा है—

"सोइ जानै जेहि देहु जनाई, जानत तुम्है तुम्है होइ जाई ।" (तु॰ रा॰)

शिवपुराण में यह कथा है कि एक बार ब्रह्मा और विष्णु में यह विवाद उठ पड़ा कि बड़ा कौन है ? दोनों ही सुरश्रेष्ठ शिव के पास गए । उन्होंने अपने ज्योतिर्लिंग का पता लगानेवाले को बड़ा ठहराया । इस पर ब्रह्मा ऊपर चले और विष्णु नीचे की ओर सिधारे । फिर ब्रह्मा ने तो गौ और केतकी पुष्प को साक्षी देकर अपने को अन्त तक पहुँचने वाला बतलाया, पर विष्णु ने हार मान ली—इस पर भगवान् ने ब्रह्मा को अपूज्य और गौ को मलभोजी एवं केतकी को कंटक और सर्पों का स्थान बताकर त्याज्य कर दिया । पर सत्यरूप विष्णु को ही अपने से भी श्रेष्ठ होने की आपने आज्ञा दी । इसी से गौ का पिछला भाग शुद्ध और आगे का भाग अशुद्ध है और केतकी शिव को नहीं चढ़ाई जाती । सृष्टिकर्ता होने पर भी संसार में यज्ञों को छोड़कर ब्रह्मा का पूजन नहीं होता । यह कथा लिंगपुराण तथा स्कन्द-पुराणादिकों में भी बहुशः पाई जाती है । इससे यह बात सिद्ध होती है कि पहिले जो यह कह आए कि देवता आपही के भौंह की दी हुई सम्पत्ति भोगते हैं । वही बात सर्वदेवश्रेष्ठ ब्रह्मा, विष्णु के ऊपर अनुग्रह-वर्णन करके दिखाई गई है, जिससे यह स्पष्ट है कि ये देवता लोग भी परमशिव की उपासना करके ही बड़े महत्त्व के पद को प्राप्त हुए हैं । इस प्रकार से परम

शैव देवताओं का वर्णन करके अब दैत्यराक्षसादिक शैवों का भी आगे वर्णन आरम्भ करते हैं ॥ १० ॥

### भाषापद्यानुवाद

तुमरे ज्योती लिंग की, महिमा बूझन लाय।
ऊपर ब्रह्मा चढ़ि चले, नीचे विष्णु सिधाय ॥
थकिकै अस्तुति तिन करी, श्रद्धा भक्ति बढ़ाय।
मिले आप कब नहि फलै, तुम सेवा पनफाय ॥ १० ॥

### भाषाबिम्ब

परीछा लेवैको तुव अगम ऐश्वर्ज्ज पद में
गये विस्नू (ष्णू) नीचे उपरि चलि ब्रह्मा थकित भे।
भजे स्रद्धा (श्रद्धा) भक्ती करि तुरत आपै तिहि मिले
तुम्हारी सेवा से नहिं लहत सो कौन फल है ? ॥ १० ॥

अथ बलिरावणयोरपि भगवदनुग्रहं दर्शयन् स्तौति—

**अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं**
**दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ।**
**शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः**
**स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ ११ ॥**

## मधुसूदनी

**अयत्नादिति**—हे त्रिपुरहर, स्थिराया निश्चलायास्त्वद्भक्तेस्तवसेवायाः विस्फूर्जितमिदं प्रभावोऽयम्। किं विशिष्टायास्त्वद्भक्तेः। शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः। शिरांस्येव पद्मानि अर्थाद्रावणस्य तेषां श्रेणी पंक्तिस्तया रचितः कल्पितश्चरणाम्भोरुहयोः पादपद्मयोर्बलिरुपहारो यस्यां सा तथा। रावणेन हि नवभिर्निजशिरोभिः स्वहस्तकृत्तैः शंभोरुपहारः कृत इति पुराणप्रसिद्धम्। किं तद्विस्फूर्जितमित्यत आह। यत् दशास्यो रावणो बाहून् विंशतिभुजान्। कीदृशान्। रणाय युद्धाय कण्डूः खर्जूः। अतिस्पृहेति यावत्। तया परवशांस्तदधीनानभृत धृतवान्। रणकण्डूर्हि रणेनैव निवर्तते। रणासम्भवाच्च सर्वदा कण्डूरेव तद्भुजेष्विति भावः। तर्हि रणं

संपाद्य किमिति तत्कण्डूं न निवर्तयतीति चेत्, न, प्रतिमल्लाभावादित्याह। त्रिभुवनं त्रैलोक्यमवैरव्यतिकरं विद्यते वैरस्य विरोधस्य व्यतिकरः कारणं दर्पादि यत्र तत्तथा आपाद्य संपाद्य। त्रैलोक्यवर्तिनो वीरानिन्द्रादीन्स्वदास्यं नीत्वेत्यर्थः। तदप्ययत्नादयत्नेनैव। स्वयमेव रावणपराक्रमं श्रुत्वा सर्वे वीरा दर्पादि त्यक्तवन्त इत्यर्थः। तथा चानायासेनैव निर्जितत्रिजगतो रावणस्य भुजानां कण्डूर्नैव शान्तेत्येष शौर्यातिशयो भगवद्भक्तेरेव प्रभाव इत्यर्थः। 'आसाद्य' इति क्वचित्पाठः। तस्य प्राप्येत्यर्थः।

हरिपक्षे तु त्रीणि जाग्रत्स्वप्नसुषुप्त्याख्यानि पुराणि भक्तानां जीवानां स्वसाक्षात्कारेण हरतीति त्रिपुरहरो विष्णुः। हे त्रिपुरहर मोक्षदायक विष्णो, दशास्यो यत्तादृशान् बाहून् भुजानभृत तत्त्वद्भक्तेरेव पूर्वं कृताया इदानीं फलरूपेण परिणममानायाः, अत एव स्थिराया अनेककल्पव्यवधानेऽपि यावत्फलपर्य्यन्तं स्थायिन्यास्तव सेवाया विस्फूर्जितमिदं नान्यस्य प्रभावोऽयमित्यर्थः। त्वदीयवैकुण्ठपुरद्वारपालस्य पार्षदप्रवरस्य ब्रह्मशापव्याजेन त्वदिच्छयैवासुरीं योनिमनुभवतोऽपि रावणस्य त्वद्भक्तिप्रभावादेव निरतिशयं पौरुषमित्यर्थः। तथाच बलेर्वैरोचनेः त्वद्भक्तेर्विस्फूर्जितमिदं यागशालायां त्वदागमनत्वत्पाणितोयदानत्वच्चरणाम्बुजस्पर्शनादि एतत्सर्वं सूचयन् संबोधयति। हे शिरःपद्मश्रेणीरचितचरणाम्भोरुह। अत्रापि बलेरिति सम्बध्यते। बलेः शिर एव पद्मश्रेणी पद्ममयी निःश्रेणिका पादविक्षेपभूमिस्तस्यां रचितमर्पितं चरणाम्भोरुहं येन स तथा। योगपद्मपीठे हि भगवच्चरणारविन्दाधारत्वेन बलेः शिरोऽपि पद्मपीठत्वेन निरूपितम्। शिरः शब्दस्य नित्यसापेक्षत्वाच्चात्र सापेक्षसमासो न दोषाय, देवदत्तस्य गुरुकुलमितिवत्। बलिना खलु भगवद्वामनावतारप्रार्थनया पदत्रयमिता भूमिर्देयेति प्रतिज्ञातम्, तत्र पदद्वयेनैव सर्वस्मिञ्जगति भगवताक्रान्ते स्वसत्यपालनाय तृतीयपदस्थाने स्वशिर एव बलिना दत्तं, तच्च भगवता स्वपदाम्बुजेनावष्टब्धमिति पुराणप्रसिद्धम्। नह्येतादृशः प्रसादो ब्रह्मादिभिरपि लब्धोऽस्ति। तस्माद्वलिकृतायास्त्वद्भक्तेरेव प्रभावोऽयमित्यर्थः॥ ११॥

## नारायणी

(त्रिपुरहर!) हे त्रिपुरविदारक, (दशास्यः) रावणः (यत्) प्रसिद्धं (अयत्नात्) विनैव प्रयासेन (त्रिभुवनं) त्रैलोक्यमात्रम् (अवैरव्यतिकरं) स्वशत्रुसम्पर्कशून्यम्, निष्कण्टकमित्यर्थः। (आपाद्य) आसाद्य, कृत्वा वा (रणकण्डूपरवशान्) युद्धखर्जूपराधीनान्, संग्रामलोलुपानिति यावत्। (बाहून्) भुजान् (अभृत) धृतवान् (तत् शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः) शिरांसि मुण्डान्येव पद्मानि तेषां श्रेणी पंक्तिस्तया रचिता कृता चरणाम्भोरुहयोः पदकमलयोः बलिः पूजोपहारो यस्याम्, तस्याः (स्थिरायाः) अचलायाः, दृढायाः (त्वद्भक्तेः) भवत्सेवायाः (इदं) प्रत्यक्षं (विस्फूर्जितं) विलसितम्, प्रतापफलमस्तीति शेषः। अत्र रावणस्य निर्द्वन्द्वं त्रैलोक्यराज्याधिपत्यरूपं फलं त्वद्भक्तेरेवेति भक्तिमहिमा यथावत्स्फुटीकृत इति॥ ११॥

## संस्कृतपद्यानुवादः

स्वशत्रुसम्पर्कविहीनमेतत्त्रैलोक्यमापाद्य दशाननो यः।
दधार (बभार) बाहून् रणलम्पटान्स्वान्सङ्ग्रामकण्डूतिवशंवदान् वा ॥
शिरोब्जमालारचितांघ्रिपद्मबलेः स्थिरायाा भवतस्सुभक्त्याः।
भक्तेष्टदानव्रतिनः पुरारे! विस्फूर्जितं तत् प्रकटं विभाति ॥ ११ ॥

## भाषाटीका

(त्रिपुरहर!) हे त्रिपुरासुरान्तक! (दशास्यः) दशमुख रावण ने (यत्) जो, (अयत्नात्) विना प्रयास के ही (त्रैलोक्यं) तीनों लोकों को (अवैरव्यतिकरम्) अपने शत्रुवर्ग से रहित (आपाद्य) बनाकर (रणकण्डूपरवशान्) संग्राम की खुजली से पराधीन, अर्थात् युद्धाभिलाषी (बाहून्) (बीसों) भुजाओं को (अभृत) धारण किया, (तत्) सो, वह (शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः) मुण्डरूपी कमलों की माला से की गई चरणारविन्द की (बलि) पूजा, जिसकी ऐसी (स्थिरायाः) निश्चल (त्वद्भक्तेः) आप की ही भक्ति का (इदम्) यह, प्रत्यक्ष (विस्फूर्जितम्) विलास अथवा प्रतापफल है। अभिप्राय यह कि कुछ प्रयत्न किए बिना ही त्रैलोक्यभर का निष्कण्टक राज्य पाकर प्रतिद्वन्द्वी योद्धा नहीं मिलने से अपने बाहुओं की खुजलाहट को मिटाने में जो रावण दर्पित बना रहा, उसका कारण अपने मुंडों को काटकर आपके चरणकमलों पर चढ़ा देने की दृढ़ भक्ति है, अर्थात् आप की ही सेवा का उसे यह असाधारण फल मिला था। यथा–

"रन मद मत्त फिरै जगधावा। प्रतिभट खोजत कतहुँ न पावा ॥
ब्रह्म सृष्टि जहँ लगि तनुधारी। दशमुख बसवर्ती नरनारी ॥"

और फिर जैसी कि रावण की उक्ति अंगद के प्रति कही गई है—

"जान उमापति जासु सुराई, पूजे जेहि सिर सुमन चढ़ाई।
सिर सरोज निज करहि उतारी, पूजे अमित बार त्रिपुरारी (तु० रा०)" ॥११॥

## भाषापद्यानुवाद

बिन प्रयास त्रैलोक मँह, करि निष्कण्टक राज।
भयउ दसानन भुजन धरि, परम बिवस रन खाज ॥
मुंड-माल पद कमल पै, तुम्हरे दियो चढ़ाय।
तुव दृढ़ भक्ति विमल फल, त्रिपुरान्तक! अधिकायं ॥११॥

## भाषाबिम्ब

विना जत्नै जित्यो त्रिभुवन बली रावन सबै,
भुजासाली ह्वैके भयउ रन-कंडू तबै।
चढ़ादीन्ह्यो सीसै करि कमल-माला चरन-वै,
विहारी भक्ती का प्रकट मल स्वामी विदित है ॥११॥

एवं बलिरावणयोर्भक्तिवशादनुग्रहं प्रदर्श्य तयोरेव दर्पवशान्निग्रहं प्रदर्शयन् स्तौति—

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥१२॥

## मधुसूदनी

**अमुष्येति**—हे त्रिपुरहर, अमुष्य पूर्वश्लोकोक्तस्य रावणस्य प्रतिष्ठा स्थितिः त्वयि अलसचलिताङ्गुष्ठशिरसि सति पातालेऽप्यलभ्या आसीत्। अलसं मन्दं यथा स्यात्तथा चलितं कम्पितमङ्गुष्ठशिरोऽङ्गुष्ठाग्रं येन स तथा तस्मिन्। चलितमिति ह्रस्वत्वं च कम्पतेश्चलतेर्मित्त्वानुशासनात्। तथा च तवाङ्गुष्ठकम्पनमात्रेणैव तस्य वीराभिमानिनोऽधः प्रवेशोऽशक्यप्रतीकार आसीदित्यर्थः। अमुष्य किं कुर्वतः। त्वदधिवसतावपि कैलासे तव मन्दिरेऽपि स्फटिकगिरौ भुजवनं भुजवृन्दं विंशतिसंख्याकं बलाद्विक्रमयतोऽतिशौर्येण व्यापारयतः। इममुत्पाट्य लङ्कायां नेष्यामीत्यभिप्रायेण भुजचेष्टां कुर्वत इत्यर्थः। कीदृशं भुजवनम्। त्वत्सेवासमधिगतसारं तव सेवया समधिगतः प्राप्तः सारो बलं येन, तत्तथा। त्वत्प्रसादेनैव बलमासाद्य त्वद्गृहमुत्पाटयतीत्यहो कृतघ्नता मौढ्यं चेत्यभिप्रायः।

एवं हि पुराणप्रसिद्धं 'भगवत्प्रसादादासादितबलेन रावणेन स्वबलपरीक्षार्थं भगवन्निवासस्यापि कैलासस्योत्पाटनमारब्धम्। ततश्च पार्वत्या भीतया प्रार्थितो भगवान् कैलासस्याधोगमनार्थमङ्गुष्ठाग्रमात्रं शनैर्व्यापारयामास। तावन्मात्रेणैव क्षीणबलो रावणः पातालं प्रविवेश। पुनश्च भगवता करुणया समुद्धृतः' इति।

ननु भगवत्प्रसादाल्लब्धवरो रावणः कथं भगवन्तं तदानीं विस्मृतवानित्यत आह। ध्रुवं निश्चितमुपचितः समृद्धः सन् खलः कृतघ्नो मुह्यति कृतं विस्मरति, स्वोपचयहेतुमपि न गणयतीत्यर्थः।

**हरिपक्षे तु**—कैलासे केलिः क्रीडा सैव प्रयोजनमस्येति कैलः, कैलोऽसिः खड्गो यस्य सः कैलासिः। इच्छामात्रेण निर्जितसर्वशत्रोरपि तव क्रीडार्थमेव नन्दकधारणमित्यर्थः। अमुष्य बलेः, त्वदधिवसतौ त्वन्निवासे तव स्वत्वास्पदीभूतेऽपि त्रैलोक्ये बलान्मदीयमिदं त्रैलोक्यमिति स्वत्वाभिमानाद्भुजवनं हस्तोदकं विक्रमयतः मम स्वत्वत्यागपूर्वकमेतस्य प्रतिग्रहीतुः स्वत्वमुत्पादयामीत्यभिप्रायेण भगवतः पाणावुदकं प्रयच्छतः। कीदृशं भुजवनम्। त्वत्सेवया समधिगतः सारः सौभाग्यविशेषो येन तत्तथा। तव पाणिपद्मसम्बन्धेनातितरां शोभमानमुदकमित्यर्थः। तथा च सर्वजगन्निवासस्य तव स्वत्वास्पदीभूतं यत्तत्स्वकीयमिति मत्वा तुभ्यं ददतो बलेर्महानेवाप-

राधः। त्वया तु परमकारुणिकेन प्रतिज्ञातविक्रमत्रयमितभूमिदानेऽपि तस्यासामर्थ्यं मासाद्य तस्य[1] मत्ततानिवृत्तये योग्य एव दण्डः कृत इत्याह। त्वयि अलसचलिताङ्गुष्ठशिरसि सति तस्य प्रतिष्ठा स्थितिः पातालेऽलभ्यासीत्, का वार्ता स्वर्गमर्त्ययोः।

अथवा पाताले विद्यमानस्यापि बलेरिन्द्रादिभिरप्यलभ्या प्रतिष्ठा कीर्तिरासीत्। तत्र सर्वदा भगवतः संनिहितत्वादिति भावः। अलसं सलीलं चलितः कम्पितोऽङ्गुष्ठः शिरसि अर्थाद्बलेर्येन तस्मिन्। यथा तृतीयविक्रमभूम्यर्थं बलिना शिरसि प्रसारिते तत्र च त्वदीयपादाङ्गुष्ठसम्बन्धमात्रेणैव तस्य पातालप्रवेशो जात इत्यर्थः। ध्रुवमुपचितो इत्याद्यर्थान्तरन्यासः पूर्ववत्। अवथा खलोऽयमसुरो बलिरुपचितः मुह्यति। अतो मोहनिवृत्तयेऽपचितः कर्तव्य इति भगवतोऽभिप्रायवर्णनम्। **'यस्याहमनुगृह्णामि तस्य वित्तं हराम्यहम्'** इति भगवद्वचनात्॥ १२॥

## नारायणी

हे भगवन्! इत्यध्याहार्य्यं (त्वत्सेवासमधिगतसारं) भवदाराधनबलेनैव प्राप्तबलं "सारो बले स्थिरांशे च" इत्यमर-मेदिन्यौ। (भुजवनं बाहुसमूहम्, विंशतिसंख्याकत्वाद्वनमिवेत्युपमितिसमासः। (बलात्) शक्तिपूर्वकं—**"अपादाने पञ्चमी"** (अष्टा० २।३।२८)। (त्वदधिवसतौ) भवतो निवासस्थाने (कैलासे) स्वनामविख्याते, हिमगिरिशिखरे, के जले लासो यस्य सः केलासः **"हलदन्तात्०"** (अष्टा० ६।३।९)। इत्यलुक्, तस्यायं कैलासः। अथवा केलीनां समूहः कैलम्—**"तस्य समूहः"** (अष्टा० ४।२।३७) इत्यण्, तेन आस्यते अत्रेति, आस् उपवेशने—**"हलश्च"** (अष्टा० ३।३।१२१) इति घञ्। (विक्रमयतः) स्वपराक्रमं दर्शयतः, (अमुष्य) पूर्वकथितनाम्नो रावणस्य (त्वयि) (अलसचलिताङ्गुष्ठशिरसि) अलसेन अप्रयत्नादेव चलितं अधःकृतमङ्गुष्ठस्य शिरः अग्रभागो येन सः, तस्मिन्। एतादृशे त्वयि भवति सति (प्रतिष्ठा) स्थितिः (पातालेऽपि) रसातलाद्यधःप्रदेशेऽपि (अलभ्या) सर्वथा दुर्लभा (आसीत्) बभूव। अहो! युक्तमेवैतत्। यतः (उपचितः) उत्कृष्टलक्ष्म्या सम्पन्नः समृद्धो वा (खलः) दुर्ज्जनः (मुह्यति) मोहं प्राप्नोत्येवेति (ध्रुवम्) निश्चितम्। अर्थान्तरन्यासेनैव कारणनिर्देशः। अत्र कदाचित्स्वभुजदर्पितो रावणः कैलासपर्वतमुच्चखान, ततो भगवता निजाङ्गुष्ठाग्रभागेन नामितो गिरिस्तं नितरामपीडयदिति पौराणिकी कथाऽनुसन्धेया॥ १२॥

## संस्कृतपद्यानुवादः

**त्वदीयसेवाप्तमहाबलं बलाद् भुजावनं दर्शयतः पराक्रमी।**
**दशाननस्योद्धरतोऽतिदर्पिणः त्वदीयकैलासनिवासपर्वतम्॥**
**अभूत्त्वदङ्गुष्ठशिरःप्रकम्पनाद्रसातलेऽपि स्थितिरेव दुर्लभा।**
**इदं परं निश्चितमेव धूर्जटे खलः समृद्धः खलु मुह्यति प्रभो॥ १२॥**

---

१. 'ममतानिवृत्तये' इति पाठः।

## भाषाटीका

हे भगवन् ! (त्वदधिवसतौ) आपके निवास-स्थान (कैलासे) कैलास पर्वत में (अपि) में (त्वत्सेवासमधिगतसारं) आपकी ही सेवा से प्राप्त हुए बल से पूर्ण (भुजवनं) बीसों भुजारूपी वन का (विक्रमयतः) पराक्रमो दिखलाते हुए (अमुष्य) इसी पूर्वोक्त रावण की (प्रतिष्ठा) स्थिति, (रहाइद्य) (त्वयि) आपके (अलसचलिताङ्गुष्ठशिरसि) (सति) अलसाते हुए अंगूठा के अग्रभाग को हिला देने पर (पातालेऽपि) पाताल में भी (अलभ्या आसीत्) नहीं मिल सकी। (ध्रुवं उपचितः खलः मुह्यति) यह बात ध्रुव है कि बढ़ा हुआ (समृद्ध हो जाने पर) दुष्ट अथवा कृतघ्न मोह को प्राप्त होता ही है।

अभिप्राय स्पष्ट है कि वही युद्ध की चाट से भुजाओं को खुजलाने वाला रावण जब अपना जोड़ी योद्धा नहीं पा सका, तो आपही की सेवा से बल-बलाते हुए अपने भुजाओं की खुजली मिटाने के लिए आपके ही निवास-स्थान कैलास पर्वत को उठाने लगा, पर जब आपने अपने अंगूठे की नोक से दबा दिया, तो उसे पाताल में भी ठिकाना नहीं मिला। वह आप से ही वर पाकर आपको ही बल दिखाने लगा। यह कोई आश्चर्य की बात नहीं है। क्योंकि ओछे लोग अथवा दुष्टजन बढ़ती पाकर अवश्यमेव मोहाध हो जाते हैं। जैसा कि कहा है—

"विषयी जीव पाइ प्रभुताई। मूढ़ मोह बस होंहि जनाई॥"
"ज्यहिते नीच बड़ाई पावा। सो प्रथमहि हठि ताहि नसावा॥" (तु० रा०)

यों ही रावण के कैलास उठाने की बात भी रामायण में इस रीति से कही गई है—

"कौतुकही कैलास पुनि, लीन्हेसि जाइ उठाइ।
मनहुँ तौलि निज बाहुबल, चला अधिक सुख पाइ॥"

अथवा अंगद के प्रति भी रावण की ऐसी ही एक उक्ति लिखी है। यथा—

"पुनि नभसर मम कर निकर, करि कमलन पर बास।
सोभित भयउ मराल इव, संभु सहित कैलास॥"

इसी भाँति कैलास को महादेव का निवास भी लिखा है। यथा—

"परम रम्य गिरिवर कैलासू। जहाँ सदा सिव उमा निवासू।" (तु०रा०) ॥१२॥

## भाषापद्यानुवाद

सो तुव सेवन पाइ बल, निज भुजवन पनफाय।
तुव निबास कैलास गिरि, बल करि लयो उठाय॥
रचिक अंगूठा-नोकते, चापत गयउ पताल।
खल संपति पाये अवसि, परत (फंसत) मोह के जाल॥ १२॥

## भाषाबिम्ब

भुजों में सेबाते परम-बल पाई तुमहि सो,
उठालेवै चाह्यो गरब-वस कैलास गिरिको।
अगूंठा के दावेते दसबदन पाताल धसिगो,
समृद्धी पावैते अवसि खल मोहान्ध बनतो ॥ १२ ॥

•

पूर्वत्र भगवद्विषये समुन्नतयोर्बलिरावणयोरत्यन्तमवनतिर्दर्शिता। अधुना तत्रावनतयोरिन्द्रबाणयोरत्यन्तमुन्नतिं दर्शयन् हरिहरौ स्तौति—

**यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-**
**मधश्चक्रे बाणः परिजनविधेयत्रिभुवनः।**
**न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो-**
**र्न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥१३॥**

## मधुसूदनी

**यदिति**—सुत्राम्ण इन्द्रस्यर्धिं सम्पत्तिं परमोच्चैः सतीमप्यधश्चक्रे न्यक्कृतवान्। बाणो बलिसुतः। कीदृशः। परिजनविधेयत्रिभुवनः परिजनो दासः, तद्वद्विधेयं वश्यं त्रिभुवनं यस्य, परिजनानामिव विधेयं वश्यं त्रिभुवनं यस्येति वा। स तथा उच्चैः सतीं तदधश्चक्रे तदन्यत्र चित्रमपि तस्मिन् बाणे न चित्रं नाश्चर्यम्। कीदृशे। त्वच्चरणयोर्वरिवसितरि नमस्कर्तरि इन्द्रसम्पत्तेरप्यधःकरणं त्वन्नमस्कारस्य न पर्याप्तफलं किन्त्वेकदेशमात्रमित्याह। न कस्य इति। त्वयि विषये शिरसो याऽवनतिर्नमस्क्रिया, सा कस्यै उन्नत्यै न भवति; अपि तु सर्वामेवोन्नतिं मोक्षपर्यन्तां जनयितुं समर्था भवत्येवेत्यर्थः। अवनतिरप्युन्नतिहेतुरित्यतिशयोक्तिसंकीर्णोऽयमर्थान्तरन्यासः। सर्वोत्कृष्टत्वमचिन्त्यमहिमत्वं च भगवतः सूचयतीति भावः।

**हरिपक्षे तु**—हे परम वरद, सुत्राम्ण इन्द्रस्य बाणः शर एकोऽपि ऋद्धिं सम्पत्तिमुच्चैरधोऽपि सतीं त्रिभुवनव्यापिनीं चक्रे कृतवानिति यत् तत्तस्मिन्सुत्राम्णि न चित्रमित्यादि पूर्ववत्। त्वत्प्रसादादेव सर्वानसुरानेकेनापि बाणेन जित्वा त्रिभुवनराज्यं प्राप्तवानिन्द्र इत्यर्थः। अत्र बाण इति शस्त्रमात्रोपलक्षणम्। कीदृशो बाणः? परिजनवद्विधेयमायत्तं त्रिभुवनं यस्मात्स तथा। शेषं पूर्ववत् ॥ १३ ॥

---

१. प्युन्नत्यै–इति प्रचलितः पाठः।

## नारायणी

(वरद !) हे वरदायक ! (परिजनविधेयत्रिभुवनः) स्वदासीकृतत्रैलोक्यः, (बाणः) बाणनामासुरः, (यत्) क्रियाविशेषणमव्ययपदं (सुत्राम्णोऽपि) इन्द्रस्यापि, किमुतान्येषाम्। सुष्ठु त्रायते इति सुत्रामा—'आतो मनिन्क्वनिब्वनिपश्च' (अष्टा० ३।२।७४) इत्यनेन मनिन् प्रत्ययः। सु–यद्–इत्युपसर्गद्वयप्रयोगात् 'सूत्रामा' दीर्घादिरपि भवति। 'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः। (परमोच्चैः सतीं) परममहत्त्वं गताम् (ऋद्धिं) समृद्धिं, देवराजाधिपत्यसम्पदमिति भावः। (अधश्चक्रे) तिरश्चकार, (तत्) यत्तदोर्नित्यसम्बन्धः। (त्वच्चरणयोः) भवदीयपादाम्बुजयोः (वरिवसितरि) शुश्रूषके वरिवस्यतीति वरिवसिता—सेवक इत्यर्थः। 'नमोवरिवश्चित्रङः क्यच्' (अष्टा० ३।१।१९) इति क्यच्, ततः—'क्यस्य विभाषा' (अष्टा० ६।४।५०) इति यलोपश्च। (तस्मिन्) बाणासुरे (चित्रं न) आश्चर्यस्थानं न भवति। यतः (त्वयि) भवतो विषये (शिरसः) मस्तकभागस्य (अवनतिः) अवनमनम्, प्रणाम इति यवत्, (अपि) किमु शुश्रूषणमिति–अपि भावः। (कस्य) साधारणस्यापि जनस्य (उन्नत्यै) अभ्युदयाय (न भवति); अपितु सर्वेषामेव महोदयदात्री सम्पद्यते इति ध्वनिः। अत्र शिरसोऽवनत्यै-वोन्नतिर्लभ्यते इति विरोधालङ्कारः।

यदा भवतः प्रणामेनैव परमोत्कर्षलाभो भवति, तदा परमाराधकेन बाणासुरेण ऐन्द्रं पदमधरीकृतञ्चैतत्किमाश्चर्यमित्यभिप्रायः स्पष्ट एव। एतेषूक्तेषु त्रिषु श्लोकेषु परमशैवानां रावण-बाणादीनां बलप्रतापादिकथनेन प्रभोरेव महिमोत्कर्षवर्णनं विशदीकृतम्। सापराधानां तामसानामपि निजभक्तितत्पराणां परमानुग्राहको भवानेवेति ध्वनितम्। ननु भगवन्महिमवर्णनामारभ्य किमिति परमपापिष्ठानां दैत्यराक्षसादीनां कथोच्यते—इति चेत्, न, भगवत्पादपद्मप्रणिहितमनसां केषाञ्चिदपि स्मरणं विभोस्तोषकं स्मर्तृणाञ्च मङ्गलजनकमेवेति।

रावणकृतं शिवताण्डवस्तोत्रं सुप्रसिद्धमेव; परन्तु बाणकृतशिवतोटकमपि स्कन्दपुराणस्थं द्रष्टव्यम् ॥ १३ ॥

## संस्कृतपद्यानुवादः

पुरन्दरस्यापि महासमृद्धां समृद्धिमह्नाय महोन्नतां यत्।
तिरश्चकार प्रबलप्रतापो बाणः स्वदासीकृतसर्वलोकः॥
त्वत्पादपङ्केरुहसेवके तत् तस्मिन्न वैचित्र्यमुपैति किञ्चित्।
कृता त्वदर्थे सिरसो नतिर्हि कस्योन्नतिन्नैव करोति शम्भो ॥ १३ ॥

### भाषाटीका

(वरद ! हे वरदोन्मुख ! (परिजनविधेयत्रिभुवनः) अपने दासों के समान बना दिया है त्रैलोक्यमात्र को जिसने, ऐसे (बाणः) बाणासुर ने (यत्) जो (सुत्राम्णोऽपि) देवराज

इन्द्र की भी (परमोच्चैः सतीं) बहुत बड़ी भारी (ऋद्धि) समृद्धि को (अधश्चक्रे) नीचे कर दिया (तत्) सो, वह (त्वच्चरणयोः) आपके चरणों के (वरिवसितरि) प्रणाम करने वाले अर्थात् सेवक (तस्मिन्) उस बाणासुर के विषय में (चित्रं न) कुछ आश्चर्यजनक नहीं है। क्योंकि (त्वयि) आपके लिए (कस्य) किस जन का (शिरसः अवनतिरपि) सिर का झुकाना भी (उन्नत्यै) अभ्युदय के लिए (न भवति) नहीं होता—अर्थात् सभी प्रणाम करने वाले का महोदय होता है।

भाव यह है—त्रैलोक्यविजयी बाणासुर ने जो इन्द्र की सम्पत्ति को तुच्छ समझकर नीचे कर दिया वह तो कोई आश्चर्य की बात नहीं है। क्योंकि वह आपका परम उपासक था। पर साधारणजन भी आपके निमित्त यदि सिर को नीचा करे तो बड़ी ऊँची उन्नति प्राप्त कर लेता है। यहाँ पर सिर के झुकाने से ऊँची गति का पाना वर्णन किया है—इससे विरोधालंकार तथा अतिशयोक्ति के सहित अर्थान्तरन्यास का समावेश स्पष्ट है। पूर्वोक्त चारों श्लोकों से महादेव उपासक सत्त्व गुण विशिष्ट विष्णु, रजोगुणी ब्रह्मा और तमोगुण-प्रधान रावण-बाणासुर के उत्कर्ष की कथा सूचित करके भगवान् की बड़ी भारी महिमा दिखलायी है। इस पर रावणादिक असुर राक्षसों के बल और प्रतापादिक वर्णन करने से पाप-कथा के उल्लेख का सन्देह नहीं करना चाहिए। क्योंकि ईश्वर के चरणारविन्द की उपासना करने वाले सभी लोगों का स्मरण करना भगवान् को भाता है और मंगल देता ही है। इससे भगवान् की ही महिमा का प्रभाव सूचित किया गया है; क्योंकि जगदीश्वर अपनी अपेक्षा अपने भक्तों की बड़ाई सुनकर विशेष प्रसन्न होते हैं। वे अपने सेवकों को अपने से ही ऊपर रक्खा चाहते हैं। जैसा कि कहा है—

"प्रभु तरुवर कपि डार पर, ते किय आपु समान।

और—

मोरे मन प्रभु अस विश्वासा, रामते अधिक रामकर दासा" ॥ १३ ॥

## भाषापद्यानुवाद

जो इन्द्रासन की करी, ऊँची संपति नीच।
बाना-सुर कीन्ह्यों सबै, सेवक त्रिभुवन बीच ॥
यह नहिं अचरज ताहि लगि, तुव पद सेवत जोय।
काहि न उन्नत करत सिर, तुवहित अवनत होय ॥ १३ ॥

## भाषाबिम्ब

करी इन्द्रासन की तृन-सरिस सम्पत्ति महती,
बनायो दासों सा सकल जग बानासुर बली।
तुम्हारे भक्तों पै अचरज नहीं होत कछु भी,
प्रनामैं कर्नेसे (में) लहत नहिं को उन्नति भली (बड़ी) ॥ १३ ॥

अधुना कालकूटप्रलयजलयोः संहारं दर्शयन् शङ्करनारायणो स्तौति—

**अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-**
**विधेयस्यासीद्यस्त्रिनयन विषं संहृतवतः ।**
**स कल्माषः कण्ठे तव न कुरुते न श्रियमहो**
**विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥१४॥**

## मधुसूदनी

**अकाण्डेति**—हे त्रिनयन, विषं समुद्रमन्थनोद्भूतं कालकूटाख्यं गरलं संहृतवतः पीतवतस्तव कण्ठे यः कल्माषः कालिमासीत्स कालिमा तव कण्ठे श्रियं शोभां न कुरुते किम् ? अपितु कुरुत एवेत्यर्थः । ननु भगवानतिशयितविशेषदर्शी महानर्थहेतुकं विषं किमिति पीतवानित्यत आह । अकाण्ड इति । अकाण्डेऽसमये ब्रह्माण्डक्षयो महाप्रलयो विषोर्मिवेगात् संभावितस्तस्माच्चकिता भीता देवाऽसुरा इन्द्रबलिप्रभृतयस्तेषु कृपा दया तया विधेयस्य वश्यस्य । अन्यस्यैतत्पाने सामर्थ्यं नास्तीति विश्वत्राणाय विषं स्वयमेव पीतवानित्यर्थ ।

ननु विषविकारात्कल्माषः कथं कण्ठे शोभां तनोतीत्यत आह । अहो इत्यादि । अहो आश्चर्ये । भुवनभयभङ्गव्यसनिनः परमेश्वरस्य विकारोऽपि श्लाघ्यः प्रशंसनीयः, भुवनस्य लोकस्य भयं त्रासस्तस्य भङ्गो निरन्वयनाशः, स एव व्यसनं सर्वमन्यद्विहाय क्रियमाणत्वाद् व्यसनं तदस्यास्तीति तथा तस्य । तेन जगदुपकृतिकृतं दूषणमपि भूषणमेवेत्यर्थः ।

**हरिपक्षे तु**—हे त्रिनयन, त्रयाणां लोकानां नयनवत्सर्वावभासक, **"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्"** (मु० उ० २।२।७७) इति श्रुतेः । अकाण्डेऽकाले ब्रह्माण्डक्षयो महाप्रलयः । दैनन्दिनप्रलयजलपूरवेगात्संभावितस्तस्माच्चकिता ये देवाऽसुराः स्वायंभुवमनुप्रभृतयस्तद्विषयककृपावशीकृतस्य तव विषं जलं **'विषं क्ष्वेडं विषं जलम्'** इत्यादिकोशात् ।

तच्च प्रलयकालीनं यज्ञवाराहरूपेणावगाह्य पङ्कीकृत्य संहृतवतः शोषितवतः पङ्कव्यामिश्रणेन यः कल्माषो मलिनिमासीत्स कल्माषः स्तोतृभिर्वर्ण्यमानः, अर्थात्स्तोतृणां कण्ठे श्रियं शोभां न कुरुते इति न; अपितु कुरुत एवेत्यर्थः । अर्थान्तरन्यासः पूर्ववत् ॥ १४ ॥

## नारायणी

( त्रिनयन ! ) हे त्रिलोचन ! (अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपाविधेयस्य) अकस्मादेव असमय एवेति वा, ब्रह्माण्डक्षयेण समस्तब्रह्माण्डगोलकविध्वंसेन,

आकालिकप्रलयसम्भावनयेति यावत्. चकिताः विस्मयाविष्टा ये देवा असुराश्च, तेषु कृपा विधेया कर्तव्या यस्य, तस्य, अर्थात् परमकारुणिकस्य। तथा (विषं) क्षीरोदमथनोद्भूतं कालकूटं महाविषं (संहृतवतः) निगीर्णवतः, विषपायिन इत्यर्थः। (तव) भवतः (कण्ठे) गलदेशे, यः (कल्माषः) कृष्णपाण्डुरो वर्णः। कलयतीति कल्—"क्विप्च" (अष्टा० ३।२।७६) माषयत्यभिभवति वर्णानिति माषः "हन्त्यर्थाश्च" इति चुरादौ पाठात् णिच्—ततः कल् चासौ माषश्च कल्माषः। "कल्माषो राक्षसे कृष्णे शबलेऽपि" इति हेमचन्द्रः। नीलिमेत्यर्थः। (आसीत्, स किं श्रियं न कुरुते ?) शोभां न करोति, इति, (न) अपितु परमां श्रियं सम्पादयति। द्वौ नञौ प्रकृतार्थ-दार्ढ्य-बोधकौ भवतः। क्वचित् नु इत्यपि पाठस्तत्र वितर्केऽर्थो विधेयः (अहो !) युक्तमेवैतत्, (भुवनभयभङ्गव्यसनिनः) सकललोकत्रासनिवारणतत्परस्य पुरुषस्य (विकारोऽपि) महान् दोषोऽपि सर्वथा (श्लाघ्यः) स्तुत्य एव भवति। अत्र परमदयालुर्भगवान् महाविषं निपीय त्रैलोक्यरक्षणार्थमेवात्मानं नीलकण्ठञ्चकारेति पौराणिकी गाथा सुप्रसिद्धाऽपि महिम्नः स्तुत्याऽतीव समीचीना कृतेति द्रष्टव्यम्।

उक्तं च स्कन्दपु० माहेश्वरकौमारिकाखण्डे ३३ अ०—

"अकाण्डे यच्च ब्रह्माण्डक्षयोद्युक्तं हलाहलम्।
कण्ठे दधार श्रीकण्ठः कस्तस्मात्परमो भवेत्" ॥ १४ ॥

## संस्कृतपद्यानुवादः

अकाण्डलोकक्षयभीतदेवासुरानुकम्पावशवर्तिनस्ते।
यत्कालकूटं पिबतो बभूव महाविषं त्र्यम्बक नीलकण्ठः॥
तन्नीलवर्णत्वमतीव शोभां करोति शम्भोः भवतो नु कण्ठे।
ब्रह्माण्डरक्षाकरणोद्यतस्य श्लाघ्यो विकारोऽपि सदा महद्भिः॥१४॥

## भाषाटीका

पूर्वोक्त चारों श्लोकों में भगवद्भक्तों की महिमा को प्रकट करके अब साक्षात् भगवान् की महिमा का वर्णन आरंभ करते हैं। (त्रिनयन) हे त्रिलोचन ! (अकाण्डब्रह्माण्डक्षयचकित-देवासुरकृपाविधेयस्य) अचानक ही सचराचर ब्रह्मांडभर का नाश होता हुआ समझकर घबराये हुए देवता और असुरों के ऊपर दया के वशवर्ती होकर (विषं) क्षीरसागर के मन्थन से उत्पन्न हुए कालकूट नामक महाविष के (संहृतवतः) पी डालने वाले (तव) आपके (कण्ठे) कंठ में जो (कल्माषः) नीलापन हो गया है, (सः) वह (श्रियं न कुरुते-इति न) शोभा को नहीं करता है, ऐसा नहीं है—अर्थात् बहुत बड़ी शोभा बढ़ा रहा है। (अहो) आश्चर्यसूचक अव्यय पद है। (भुवन-भय-भङ्ग-व्यसनिनः) समस्त संसार के भयों को भंग कर देने वाले व्यसनी का (विकारोऽपिश्लाघ्यः) विकार भी सर्वथा प्रशंसा के ही योग्य हैं, अर्थ यह कि यदि आप उस कालकूट विष को नहीं पीते तो समस्त संसार ही उससे भस्म हो जाता। अतः देवों-दैत्यों का

भेद त्यागकर आप सबसे बड़ी दया करके उसे पीकर स्वयं नीलकण्ठ बन गए। इससे आपकी शोभा कुछ घटी नहीं वरन् और भी बढ़ गई। क्योंकि जो कोई और सब कामों को छोड़ अपने सुख को त्यागकर संसार मात्र के भय को दूर करने में एकाग्रचित्त से लग जाता है, उसका बिगड़ जाना भी प्रशंसित ही होता है। यही भाव स्पष्ट है। जैसा कि कहा भी है—

"परहित लागि तजै जो देही। संतत संत प्रसंसहि तेही" ॥
"जरत सकल सुरवृंद, विषम गरल जेहि पान किय।
तेहि न भजसि मतिमंद, को कृपाल संकर सरिस" (तु० रा०) ॥ १४ ॥

## भाषापद्यानुवाद

अनायास (बिनहिकाल) ब्रह्माण्ड-क्षय,-चकित सुरासुर देखि।
कालकूट विष पीलियो, तुम करि कृपा विसेषि ॥
सो नीलापन कंठ में, तुमरे शोभा देत।
भव भय भंजन व्यसनिकर, विकृति प्रसंसा हेत ॥ १४ ॥

## भाषाबिम्ब

अनायासै लोकै भसम करिदेतो लखि विषै,
उठाके पीलीन्ह्यो तुम करि दया दैत्य सुरपै।
वही सोभा काला (नीला) पन लगि करै कंठतल (मभि) मो,
विकारो गावै है जगत भयहारी-व्यसनिको ॥ १४ ॥

•

अथ कामस्य जनिनिधने दर्शयन् हरिहरौ स्तौति —

**असिद्धार्था नैव क्वचिदपि सदेवासुरनरे**
**निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः।**
**स पश्यन्नीश त्वामितरसुरसाधारणमभू-**
**त्स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥१५॥**

## मधुसूदनी

**असिद्धार्था इति**—हे ईश, यस्य स्मरस्य विशिखा बाणाः सदेवासुरनरे जगति देवासुरनरादिसहिते त्रैलोक्ये जयिन उत्सृष्टाः क्वचिदप्यसिद्धार्था अकृतकार्या न निवर्तन्ते; अपितु सिद्धार्था एव नित्यं जयिन एव भवन्ति। जयिन इति स्मरस्य वा विशेषणम्। नित्यं जयशीलस्येत्यर्थः। स एतादृशपौरुषवानपि स्मरः यथान्ये देवा मम

जय्यास्तथाऽयमपीतीतरदेवतुल्यं त्वां पश्यन् स्मर्तव्यात्माऽभूत् स्मर्तव्यः स्मरणीय आत्मा शरीरं यस्य स तथा। नष्ट इत्यर्थः। पश्यन्निति हेतौ शतृप्रत्ययः। लक्षणहेत्वोः च शतुः स्मरणात्। 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे' इतिवत्। तेनेतरदेवसाधारणत्वेन त्वद्दर्शनमेवाव्यवधानेन विनाशहेतुः का वार्ता परिभवादेरितिभावः। तत्र कैमुतिकन्यायमाह। नहीत्यादि। हि यस्माद्वशिषु जितेन्द्रियेष्वपि परिभवतिरस्कारः पथ्यो हितो न भवति। स्वनाशायैव संपद्यत इति यावत्। किं पुनः परमवशिनां वरे परमेश्वरे त्वयीत्यर्थः।

**हरिपक्षे तु**—हे इतरसुरसर्वविलक्षणदेव, पूर्वं स्मर्तव्यात्मा स्मृतोऽपि स्मरः कामस्त्वां पश्यन्नभूज्जातः। त्वत्सकाशाज्जात इत्यर्थः। पितैव खलु पुत्रं जातमात्रमवलोकयति, अतः पुत्रोऽपि तमेवावलोकयतीति पश्यन्नभूदित्यनेन जन्यजनकभावो लभ्यते। कथं जातः? साधारणं तव तुल्यरूपं यथा स्यात्तथा। **'आत्मा वै पुत्रनामासि'** इति श्रुतेः तत्किं सर्वांशेन भगवत्तुल्यः, तथा च **'न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः'**, **'न तत्समश्चाभ्यधिकश्च दृश्यते'** (श्वे० उ० ६।८) इत्यादि श्रुतिविरोध इत्याशङ्क्य वैलक्षण्यमाह। नहीत्यादि। वशिषु जितेन्द्रियेषु हि यस्मात्स्मरो न पथ्यो न हितः। तत्र हेतुः परिभवः परिभवत्यनर्थे योजयतीति परिभवः कामः। स खलु सर्वेषां संसारबन्धहेतुः, परमेश्वरस्तु सर्वेषां संसारबन्धस्यात्यन्तोच्छेदहेतुरिति महद्वैलक्षण्यमित्यर्थः। असिद्धार्था इत्यादि पूर्ववत् ॥१५॥

## नारायणी

(ईश!) ईष्टे इति ईशः—तत्सम्बुद्धौ, **"इगुपध०"** (अष्टा० ३।१।१३५) इति कः। हे स्वामिन्! (यस्य) कामस्य (विशिखाः) बाणाः (सदेवासुरनरे) देवदानवमनुष्यादिसमन्विते, स्वर्गपातालमर्त्यलक्षणे, समस्ते (जगति) संसारे (क्वचिदपि) कुत्रचिदपि (असिद्धार्थाः) अकृतप्रयोजना व्यर्था वा (नैव) सर्वथा नहि (निवर्तन्ते); किन्तु कृतकृत्या एव प्रत्यागच्छन्ति, अत एव (नित्यं) सर्वदा (जयिनः) विजयिनः सन्ति। 'जयिन' इति पदन्तु 'यस्ये' ति पदस्यापि विशेषणत्वमिच्छति। (स स्मरः) प्रसिद्धः कामदेवः—**"कामः पञ्चशरः स्मरः"** (अ० को० १।१।२५) इत्यमरः। (त्वाम्) भवन्तम् (इतरसुरसाधारणम्) अन्यसामान्यदेवसदृशं (पश्यन्) विलोकयन्, विचारयन्, सन् वा (स्मर्तव्यात्मा) स्मरणीयशरीरः, अनङ्ग इत्यर्थः (अभूत्) बभूव। विनष्टोऽभूदिति यावत्। (हि) यस्मात्कारणात् (वशिषु) जितेन्द्रियपुरुषेषु (परिभवः) अनादरः, तिरस्कारदृष्टिरिति वा (न पथ्यः) पथोऽनपेतः पथ्यः—**"धर्मपथ्यर्थन्यायादनपेते"** (अष्टा० ४।४।९२) इति यत्। कदापि सुखकारी नहि भवतीति। अत्र प्रसिद्धो मदनदहनमहिमावदातो यथोक्तञ्च महाकविकालिदासेन कुमारसम्भवाख्ये (कु० सं० ३।७२) काव्ये—

"क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार" ॥ १५ ॥

## संस्कृतपद्यानुवादः

स्वलक्ष्यहीनाः क्वचिदेव नासन् मनुष्यदेवासुरमण्डलेषु।
बाणा यदीया जयिनो जगत्सु सिद्धाः सदा नैव कदाप्यसिद्धाः॥
स कामदेवोऽन्यसुरैस्समानं सामान्यरूपेण विलोकयन् त्वाम्।
अनङ्गतां प्राप जितेन्द्रियेषु ह्यनादरो नैव कदापि पथ्यः (कार्य्यः) ॥१५॥

## भाषाटीका

(ईश !) हे नाथ ! (यस्य) जिस कामदेव के (विशिखाः) बाण (सदेवासुरनरे) स्वर्ग-पाताल और मर्त्यलोक के रहने वाले देवता, दैत्य और मनुष्यों के सहित (जगति) ब्रह्माण्ड में (क्वचिदपि) कहीं पर भी (असिद्धार्थाः) अपने कार्य को बिना साधे। नैव निवर्तन्ते) कदापि लौटते ही नहीं हैं एवं (नित्यं जयिनः) सर्वदा विजयशाली ही बने रहते हैं। (स स्मरः) वही कामदेव (त्वाम्) आपको (इतरसुरसाधारणम्) दूसरे सब सामान्य देवताओं के समान (पश्यन् सन्) देखता हुआ, अर्थात् एक साधारण देवता सा समझता हुआ (स्मर्तव्यात्मा) स्मरण करने योग्य है शरीर जिसका, अर्थात् अनङ्ग ही (अभूत्) हो गया। (हि) क्योंकि (वशिषु) जितेन्द्रिय लोगों का (परिभवः) अनादर करना (पथ्यः न) उचित, अथवा सुखकारी नहीं होता।

अभिप्राय यह कि—जिस कामदेव के बाण समग्र ब्रह्माण्ड में कभी व्यर्थ नहीं होते, वरन् सदैव विजयी बने रहते हैं, ऐसा महाधनुर्धर वह कामदेव भी आपको साधारण देवता-सा समझ आपकी दृष्टि फिरते ही जलकर छार हो गया। अर्थान्तरन्यास से बात को पुष्ट करते हैं। सच ही कहा है कि जितेन्द्रिय पुरुषों का अपमान करने का ऐसा ही फल मिलता है। यह कथा प्रायः सभी पुराणों में पाई जाती है। शिवपुराण में तो इसका बड़ा विस्तार है, जिसका थोड़ा-सा अंश गोस्वामी तुलसीदासजी ने अपने रामायण के बालकांड में भी अनुवादित किया है। उसी के अन्त में यह लिखा है -

भयउ ईस मन छोभ बिसेषी, नयन उघारि सकल दिसि देखी।
सौरभ पल्लव मदन बिलोका, भयउ कोप कंपेउ त्रयलोका।
तब सिव तीसर नयन उघारा, चितवत काम भयउ जरि छारा।
हाहाकार भयउ जग भारी, डरपे सुर भे असुर सुखारी॥ (तु० रा०) ॥१५॥

## भाषापद्यानुवाद

देवा-सुर-नर में कतहुँ, कबहुँ न होइ असिद्ध।
जाके लौटत (फिरते) बान नहिं, विजयी जग परसिद्ध॥
भो अनंग सो काम लखि, तुहि सब देव समान।
होत जितेन्द्रिन पै नहीं, हितकारी अपमान॥ १५॥

### भाषाविम्ब

विना काजे साधे कतहुँ नर-देवा-सुरन में,
नहीं लौटे आवैं कबहुँ विजयी बान जिहिके।
भयो कामै छारो इतर सुरसो बूझि तुमको,
जितेन्द्रो से ढीठापनहु (न) सुखकारी कहुँ भयो? ॥ १५ ॥

अथ जगद्रक्षणार्थे नर्तनावतरणे दर्शयन् हरिहरौ स्तौति—

**मही पादाघाताद्व्रजति सहसा संशयपदं**
**पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम्।**
**मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा**
**जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥१६॥**

### मधुसूदनी

महीति—हे ईश, जगद्रक्षायै त्वं नटसि नृत्यसि। सन्ध्यायां जगन्ति जिघांसन्तं वरलब्धतत्कालबलं महाराक्षसं निजताण्डवेन मोहयसीत्यर्थः। त्वं तु जगतां रक्षायै नृत्यसि,[1] जगन्ति तु त्वत्ताण्डवेन संशयितानि भवन्तीत्याह। महीत्यादि। तव चरणाघातेन सहसा संशयपदं संकटं मही व्रजति। तथा विष्णोः पदमन्तरिक्षं भ्राम्यद् भुजपरिघरुग्णग्रहगणं भुजा एव परिघा अतिसुवृत्तपीवरदृढदीर्घत्वात्तैर्भ्राम्यद्भिर्भुजरूपपरिघै रुग्णाः पीडिताः ग्रहगणा नक्षत्रसमूहा यत्र तत्तथा संशयपदं व्रजतीत्यर्थः। तथा द्यौः स्वर्लोकः अनिभृता असंवृत्ता या जटास्ताभिस्ताडितं तटं प्रान्तदेशो यस्याः सा तथा मुहुर्दौस्थ्यं दुःस्थत्वं याति। एवं च क्रमेण त्रयाणां लोकानामपि संशयो दर्शितः।

नन्वसौ सर्वज्ञोऽप्यपायमपर्यालोचयन्नेव किमित्येवंविधताण्डवे प्रवृत्त इत्यत आह। नन्विति। ननु अहो विभुता परममहत्ता, प्रभुतेति यावत्। वामैव प्रतिकूलैव। अनुकूलमाचरत्यपि किञ्चित्प्रतिकूलमवश्यमाचरतीत्येवशब्दार्थः।

दृश्यते हि स्वल्पकेऽपि राजनि स्वदेशरक्षणाय सेनया सह संचरति स्वदेशोपद्रवः, किमुत तादृशे महेश्वर इत्यर्थः।

हरिपक्षे तु—हे ईश, त्वं जगद्रक्षायै नटसि नटवदाचरसि। नटशब्दादाचारार्थे क्विपि प्रत्ययलोपे नटसीति रूपम्। मत्स्यादिभूमिकां व्रजसीत्यर्थः। कस्यामवस्थायां जगद्रक्षणार्थमवतरणमित्युच्यते। महीपादित्यादि। महीं पातीति महीपो राजा, तस्मादाघातात्सा मही सह समकालमेव संशयपदं व्रजति। आ समन्ताद्घातो नाशोऽस्मादित्या-

१. 'नटसि' इति पाठः।

घातो हिंस्रः। तथा च यदैव हिंस्रस्य राज्यं तदैव संकटं व्रजतीत्यर्थः। तथा च विष्णोः पदमधिष्ठानं यत्र भगवान्विष्णुः स्वविभूतिभिः सह पूज्यते तद्विष्णोः पदं देवयजनाख्यं यज्ञशालादि। तत्कीदृशम्? भ्राम्यद्भिर्भुजस्थपरिघैर्भुजरूपपरिघैर्वा रुग्णो भग्नो ग्रहगणः सवित्रादिरूपः सोमपात्रसमूहो[1] यत्र तत्तथा यागादिशुभकर्माणि यदा ध्वस्यन्ते तदेत्यर्थः। तथा द्यौर्दौःस्थ्यं याति। अनिभृतजटाः पाखण्डव्रतचिह्नभूतास्ताभिरताडितं अभावमिव गमितं तटं तुङ्गं पदं सत्यलोकाख्यं यस्याः सा तथा। पाखण्डिभिर्हि वैकुण्ठलोकोऽपि नाङ्गीक्रियते, किं पुनरिन्द्रादिलोक इत्यर्थः। यदा चैवं तदा त्वं नटवदाचरसीत्यर्थः। तथा च भगवद्वचनं गीतासु—

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
>
> (गीता–४।७) इति।

श्रीभागवते च—

> यर्ह्यालयेष्वपि सतां न कथा हरेः स्युः पाखण्डिनो द्विजजना वृषला नृदेवाः।
> स्वाहास्वधावषडिति स्म गिरो न यत्र शास्ता भविष्यति कलेर्भगवान्युगान्ते॥
>
> (भाग० २।१२।४०) इत्यादि।

नन्विच्छामात्रेणैव जगन्ति रक्षितुं क्षमोऽपि किं मत्स्यादिरूपैः क्लिश्यतीत्यत आह नन्वित्यादि। ननु निश्चितं विभुता विभववत्ता। सम्पन्नतेति यावत्। वामैव वक्रैव। सत्यप्यृजौ प्रकारे वक्रेणैव प्रकारेण स्वसम्पत्तिं सफलयितुं सम्पन्नः कार्यं करोतीत्यर्थः। तेनाष्टविधमैश्वर्यमौत्पत्तिकं[2] दर्शयन्भक्तानामभिध्यानाय तानि तानि श्रवणमनोहराणि चरितानि तेन तेनावतारेण धत्ते भगवानिति भावः॥ १६॥

## नारायणी

हे विभो! यदा (त्वं जगद्रक्षायै) जगतां रक्षणाय, रक्षसाञ्च प्रतारणाय (नटसि) नृत्यसि, नाट्यं करोषि, तदा (मही) भूमिः। 'क्षमावनिर्मेदिनी मही' (अ० को० २।३) इत्यमरः। मह्यते इति महिः—'अचः' (अष्टा० ६।४।१३८)। 'कृदिकारादक्तिनः' (अष्टा० ४।१।४५) ग०—इति ङीप्। 'वीचिः पङ्क्तिर्महिः केलिरित्याद्या ह्रस्वदीर्घयोः' इति वाचस्पतिः। भूलोको वा। लोको यथा ऋग्वेदे—'तिस्रो महीरुपरास्तस्थुः' (ऋ० सं० ३। ६।२) महीः लोकाः इति तद्भाष्ये सायणाचार्यः। (पादाघातात्) चरणविन्यासरूपताडनात् (सहसा) झटिति (संशयपदम्) उत्पतति अथवा अधः प्रयातीति सन्देहस्थानं (व्रजति) गच्छति। तथा च (विष्णोः पदम्) आकाशं, भुवर्लोको वा–'वियद्विष्णुपदं वापि पुंस्याकाशविहायसी' (अ० को० १।१।२) इत्यमरः।

---

१. 'पात्रविशेषसमूहो' इति पाठः। २. 'ह्वयंमात्ययिकं' इति पाठः।

(भ्राम्यद्भुजपरिघरुग्णग्रहगणम्) सञ्चालितबाहुरूपपरिघैरवरुद्धो भग्नो वा नक्षत्रवर्गो यस्मिन् तत् तथा भवति। अर्थाद्भुजपरिचालनकर्मणैव ग्रहगणसमूहो भग्नो भवति। एवं (द्यौः) स्वर्गः स्वर्लोक इत्यर्थः। (मुहुः) वारं वारं (अनिभृतजटाताडिततटा) असंवृतजटाकलापैस्ताडितं तटं प्रान्तभागो यस्याः सा तथोक्ता सती (दौस्थ्यम्) दुःस्थत्वं दुरवस्थत्वं वा (याति) प्रयाति (ननु) इति वितर्के। (विभुता) वैभवमैश्वर्य्यं तु (वामैव) प्रतिकूलैव भवति। तर्हि त्वन्तु जगद्रक्षार्थमेव नटसि; परन्तु तेन कर्मणा भुर्भुवः-स्वर्लोकानां सर्वेषाञ्च प्रलय एवोत्पद्यते, ततस्त्वत्ताण्डवं विनाशकरमिति चेत्, न—

प्रलयाग्निशिखादग्धं पुनरुत्पद्यते जगत्।
प्रकृष्टलयसंयुक्तं प्रलयं ताण्डवं विभोः॥ (हि तत्) ॥१॥
क्षेत्रेषु धान्यलवनं शराणां मूलदाहनम्।
बीजाङ्कुरादिवृद्ध्यर्थं जायते दृश्यते स्फुटम् ॥२॥
ताण्डवाडम्बरस्तद्वत्प्रलयानलतापितान् ।
परमाणून्प्रकुरुते सृष्टियोग्यान्पुनः स्वयम् ॥३॥
अतोऽस्य नर्तनं लोकरक्षायाः कारणं परम्।
विचारणीयं विद्वद्भिर्महामङ्गललक्षणम् ॥४॥ ॥ १६ ॥

## संस्कृतपद्यानुवादः

व्रजति संशयतां सहसा मही चरणताडनतो भवतो विभो !।
भुजलताविहता ग्रहतारका गगनमध्यगता वितता द्रुतम् ॥
भजति दौस्थ्यमथो त्रिदशालयो निभृतशुद्ध-(भ्र) कपर्द्दतटाहतः।
नटसि यज्जगतामभिगुप्तये कठिनतामुपयाति हि वैभवम् ॥ १६ ॥

## भाषाटीका

हे भगवन् ! जब कभी (त्वम्) आप (जगद्रक्षायै) संसार की रक्षा के लिए (नटसि) ताण्डव करते हैं, अर्थात् नाचने लगते हैं, तो (मही) पृथिवी, अर्थात् भूलोक (पादाघातात्) पैरों के चोट से (सहसा) तुरत ही (संशयपदम्) संदेह की भूमि, अर्थात् कभी तो ऊपर को उभड़ आती है और फिर कभी नीचे को धँस जाती है, इस कारण से संदेहास्पदता को (व्रजति) चली जाती है। (विष्णोःपदम्) आकाशमंडल, अथवा भुवर्लोक (भ्राम्यद्भुजपरिघरुग्णग्रहगणम्) (भवति) घूमते हुए बाहुरूप परिघों (बेंवड़ों) से रुक गए हैं ग्रहगण जिसमें—ऐसा हो जाता है। अर्थात् आपके हाथ हिलाने से ग्रह और नक्षत्रादिकों को गति रुक जाती है। तथा (द्यौः) स्वर्गलोक (मुहुः) बारंबार (अनिभृतजटाताडिततटा) (सती) निरन्तर जटाओं से टक्कर खा रहा है कोर जिसका—ऐसा होकर (दौस्थ्यम्) दुरवस्थता को (याति) प्राप्त होता है। इस पर कहते हैं कि—(ननु विभुता वामा एव) अहो ! वैभव तो टेढ़ा होता ही है। भाव यह है कि आप तो संसार की रक्षा के लिए ही ताण्डव करते हैं, पर उससे तीनों लोकों की दुर्दशा होने लगती है; क्योंकि ऐश्वर्य्य तो सदा प्रतिकूल होता है।

इस पर यह शंका होती है कि सर्वज्ञ और सर्वान्तर्यामी होकर यदि महादेवजी संसार के हिव के लिए नाचते हैं, उससे ब्रह्माण्डभर का नाश ही होने लगता है नो फिर उनका नाचना मला (अच्छा) कैसे कहा जा सकता है ? इसका समाधान यह है कि भगवान् जब नाचते हैं, तब उनके ताण्डव से ही प्रलयानल उत्पन्न हाकर सारी सृष्टि को भस्म कर देता है फिर उसी भस्म होने के कारण पृथिवी इत्यादि पांचो भूतों के परमाणु सृष्टि के लिए विशेष उपयुक्त हो जाते हैं। जैसे कि सरहरी का .जुट्टा फूंक देने से विशेष पनपने लगता है, वैसे ही महारुद्र के ताण्डव से सृष्टिकार्य का विशेषतः उपकार ही होता है। पर जो हानि दीख पड़ती है, उसका कुछ दूसरा कारण नहीं है। केवल इतना हो भर समझ लेना चाहिए कि ऐश्वर्यशाली लोगों के प्रबन्ध करने में प्रायः बहुतेरी बातों का उलट-फेर हुआ ही करता है। अतः शिवजी के ताण्डव से संसार की रक्षा ही होती है, यह सिद्ध है।

एतद्भिन्न यह बात प्रत्यक्ष है कि, साधारण राजे-महाराजे लोग भी जब अपने देश अथवा राज्य के रक्षणावेक्षण के लिए दौरा पर जाते हैं, तो प्रजालोगों का हित तो ऐसा ही तैसा होता है, पर भारी संकट का सामना करना पड़ता है। थोड़े दिन हुए हमारे वर्तमान महाराज पंचम जार्ज प्रिंस आफ वेल्स के रूप में जब भारतवर्ष में पधारे थे, तब उनकी सवारी निकालने के प्रबन्ध में मासों पूर्व से ही बनारस में कितने लोगों का मार्ग चलना रोक दिया जाता था। फिर अब भी छोटे-मोटे कर्मचारीगण प्रतिवर्ष शीतकाल में प्रजा (रैय्यत) लोगों के सुभीते के लिए ही अपने प्रान्त के ग्राम्यप्रदेशों (देहातों) में दौरा करने जाते हैं। उनका अभिप्राय प्रजा को सुख (आराम) देने का ही है। पर प्रजागण को जो-जो सुख अथवा दुःख प्राप्त होते हैं, उसे वे ही लोग समझ सकते हैं, जिन्हें कभी दौरा में अपने विचार (मोकदिमे) के लिए जाने का सौभाग्य प्राप्त हुआ होगा। क्योंकि न तो वहाँ खाने की सामग्री ही मिलती है, न रहने के लिए कहीं ठिकाना लगता है। फिर सहायक (वकील मुख्तारों) का वेतन (फीस) और यान (इक्का) की भृति (केराया) तो दूने से कभी घटती ही नहीं। अतः जब साधारण मनुष्यों के ऐश्वर्य का ऐसा टेढ़ा फल चखना पड़ता है तब उस सर्वाधिष्ठाता देवाधिदेव के ताण्डव से त्रैलोक्य मात्र का थल-उथल हो जाना क्या असम्भव है ? इसीलिए कहा गया है कि—

"ननु वामैव विभुता" ॥ १६ ॥

### भाषापद्यानुवाद

पदाघात ते अवनितल संसय (संकट) भरो लखात।<br>
नभ भांजन (घूमत) भुज परिघ लगि तारागन रुकिजात॥<br>
होत जटा फटकारते सरग (स्वर्ग) दुखी बहुबार।<br>
जग रच्छा लगि (हित) नटहु पै वैभव कठिन विकार ॥१६॥

### भाषाविम्ब

लगेते पैरोंके धरनितल में संसय छये (ई)<br>
उठाये हाथों के गगनमहं तारा रुकिगये (ई)।<br>
जटाके फट्कारे सरग सगरो खलबल मची,<br>
जगत्-रच्छा लागी (हेतू) नटहु विभुता टेढ़िहि रची ॥१६॥

अथ गङ्गाया उद्धरणधारणे दर्शयन् हरिहरौ स्तौति—

**वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः**
**प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।**
**जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-**
**त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥१७॥**

## मधुसूदनी

**वियदिति ।** हे ईश, अनेनैव लिङ्गेन तव दिव्यं दिवि भवं सर्वदेवनियन्तृ वपुः शरीरं धृतमहिम सर्वेभ्यो महत्तरं उन्नेयमूहनीयम् । तव वपुषः सर्वमहत्तरत्व-मेतावतापि निश्चेतुं शक्यं किमिति प्रमाणान्तरमत्रापेक्षितव्यमिति एवकारार्थः । इतिशब्दः प्रकारार्थे । एवं प्रकारेण लिङ्गेनेत्यर्थः । तमेव प्रकारं दर्शयति । वियदि-त्यादि । वियदाकाशं व्याप्नोत्याच्छादयतीति तथा तारागणेन नक्षत्रवृन्देन स्वान्तः-पातिना गुणिता शुभ्रत्वादिगुणसजातीयत्वाद्वर्धिता फेनोद्गमरुचिर्यस्य स, तथा एतादृशो वारां प्रवाहः, स तव शिरसि पृषतलघुदृष्टः पृषताद्बिन्दोरपि लघुरल्पतरः पृषतलघुः स इव दृष्ट आलोकितः । तेन तु वारां प्रवाहेण जलधिवलयं जगद्द्वीपाकारं कृतं जलधीनां वृन्दं जगद्भूलोको द्वीपाकारं जम्बूद्वीपादिसप्तकरूपं यस्मिंस्तथा विहितम् । 'अगस्त्येन हि सप्तसु समुद्रेषु पीतेषु पुनर्भगीरथानीतगङ्गाप्रवाहेणैव तेषां पूरणं जातम्' इति पुराणप्रसिद्धम् ।

तथा च यो जलराशिस्तव शिरसि विन्दोरप्यल्पो दृष्टः, स एवात्र कियान्मन्दा-किनीनाम्ना वियद्व्याप्यास्ते, कियान्भागीरथीति गङ्गेति च प्रसिद्धो भूलोके सप्त-समुद्रानापूर्यास्ते, कियांस्तु भोगवतीति संज्ञया पातालमभिव्याप्यास्ते इत्यनेन तव दिव्यवपुषो महत्त्वमनुमीयत इत्यर्थः ।

हरिपक्षे तु—तारागणैर्गुणिताः फेना यस्याः, सा तारागणगुणितफेना गङ्गा, तस्या उद्गमे उद्भवे रुचिः शोभा यस्य स तथा शिरसि सर्वलोकानां शिरःस्थानीये ब्रह्मलोके बलिछलनोत्क्षिप्तचरणाङ्गुष्ठनिर्भिन्नब्रह्माण्डविवरादागतो गङ्गोत्पत्तिहेतु-र्वियद्व्यापको यो वारां प्रवाहः, स ते त्वया पृषतलघुदृष्टः बिन्दोरपि लघुदृष्टः । बिन्दो-रपि लघु यथा स्यात्तथोपलब्ध इत्यर्थः । अनेनैव लिङ्गेन च तव दिव्यं वपुः बलिछल-नार्थं दिव्याकाशे आविर्भावितं त्रैविक्रमं रूपं धृतमहिमोन्नेयम् । शेषं पूर्ववत् ॥ १७ ॥

## नारायणी

हे भगवन् ! (वियद्व्यापी) आकाशवद् व्यापनशीलः (तारागणगुणितफेनोद्गम-रुचिः) तारागणो नक्षत्रसमूहस्तेन गुणिता उपमिलिता तद्वत्ता प्रापितेति यावत्—

फेनोद्गमस्य हिण्डीरोत्पत्तेः रुचिः शोभा यस्य स एतादृशः (यः) प्रसिद्धः (वाराम्) जलानां "आपः स्त्री भूम्नि वार्वारि" (अ० को० १।१०।६) इत्यमरः। (प्रवाहः) स्रोतः ओघो वा (ते) तव (शिरसि) शिरःस्थितजटाजूटे इत्यर्थो लक्षणया। (पृषतलघुदृष्टः) बिन्दुसदृशसूक्ष्मरूपो विलोकितः—"पृषन्ति बिन्दुपृषता" (अ० को० १।१०।६) इत्यमरः। (तेन) प्रवाहेण (जलधिवलयम्) समुद्ररूपपरिखावेष्टितं (जगत्) भुवनं (द्वीपाकारम्) भूखण्डसदृशं (कृतम्) विनिर्मितम् (अनेनैव) हेतुना (तव) भवतः (दिव्यम्) सर्वोत्कृष्टं (वपुः) शरीरं (धृतमहिम) महामहिमाशालि, केचित् सम्बुद्धिपदमेतदित्याहुः। तत्र धृतो महिमा सर्वज्ञत्वं सर्वकर्तृत्वञ्च येनेति योज्यम्। (इति) एवंविधम् (उन्नेयम्) ऊहनीयं बोध्यमित्यर्थः।

कदाचिदगस्त्यमुनिना पीते समुद्रे शुष्कतां गते सति शिवशिरःस्थितया बिन्दुरूपतामभिगतया गङ्गयैवापूर्यमाणः सागरो जगत्परिखारूपो वरीवर्ति। इमामेव पौराणिकीं कथामवलम्ब्येदं गङ्गाधररूपमहिमवर्णनं सुष्ठु कृतमिति विचारणीयं विद्वद्भिरिति एवमेवोक्तं च स्कन्दपुराणे माहेश्वरकौमारिकाखण्डे तृतीयाध्याये—

"वियद्व्यापी सुरसरित्प्रवाहो विप्रुषाकृतिः।
बभूव यस्य शिरसि कस्तस्मात्परमो भवेत्"। इति ॥१७॥

## संस्कृतपद्यानुवादः

यो व्योमवद् व्यापकशीलतां गतस्तारागणाशङ्कित-वर्धित-फेनकान्तिमान्।
वारिप्रवाहो लघुबिन्दुरूपधृक् शम्भो! जटाजूटतटे तवेक्षितः॥
कृतं जगत्तेनसमुद्रवेष्टचं द्वीपस्वरूपं जलमध्यवर्त्ति।
महामहिम्ना महितं त्वदीयमनेन दिव्यं वपुरूहनीयम् ॥१७॥

## भाषाटीका

हे स्वामिन्! (वियद्व्यापी) आकाश के समान सर्वत्र भरा रहनेवाला (तारागण-गुणितफेनोद्गमरुचिः) नक्षत्र समूह से गुनी गई है फेन के निकलने की शोभा जिसकी—ऐसा (यः) जो (वारां प्रवाहः) जलों का स्रोत (ते शिरसि) आपके मस्तक पर, अर्थात् जटाजूट में, (पृषतलघुदृष्टः) बूँद के समान छोटा-सा देख पड़ता है, (तेन) उसी प्रवाह से (जलधिवलयम्) समुद्र से घिरा हुआ (जगत्) संसार (द्वीपाकार) द्वीप के आकार का, अर्थात् द्वीपरूप (कृतम्) कर दिया गया। (अनेनैव) एक इसी कारण से (धृतमहिमदिव्यं) बड़ी भारी महिमा को धारण किये हुए, परमदिव्य (तव वपुः) आपका शरीर (ऊहनीयम्) समझने योग्य है।

शिवपुराणादिकों में यह कथा प्रसिद्ध है कि जब अगस्त्य मुनि सब समुद्रों को पी गये, तब राजर्षि भगीरथ के साथ आकर श्रीगंगाजी ने अपने ही प्रवाह से उन सबको पूरा किया। वही बात इस श्लोक में दिखालाई गई है। तात्पर्य यह कि जो जल आपकी जटा में एक बूंद-सा झलकता है, उसी से सब समुद्र भर गए, जिनसे यह जगत् टापू के समान बन गया। बस इसी से आपके शरीर की महिमा प्रकट है। यहाँ गंगाधररूप की महिमा

कही गई है। गंगाजी का वर्णन यद्यपि रामायण में कई-कई स्थानों पर मिलता है, पर यहाँ पर केवल इतना ही उद्धृत किया जाता है

"गङ्ग सकल मुद मङ्गल मूला, सब सुख करनि हरनि भव सूला।
कहि कहि कोटिक कथा प्रसङ्गा, राम विलोकत गङ्ग तरङ्गा॥" (तु० रा०)॥ १७॥

**भाषापद्यानुवाद**

तारा गन सम फेन रुचि व्यापक मनहुँ अकास।
लखियत तुमरे सीस पै जल लघु बूंद विलास॥
अंबुधि-परिखा द्वीपसम तासो जगत् घिराय।
याते तुव बपु दिव्य की महिमा जानी-जाय॥ १७॥

**भाषाबिम्ब**

अकासै में फैली ग्रहगन-रुची फेन-उबली,
जलों की जो धारा तुव सिरसि बूदों सम लखि।
वही ते द्वीपों (टापू) सा जगत जलधीवेष्टित भयो,
यही से जानी है वपुष-महिमा दिव्य तुमरो॥ १७॥

•

अथ लङ्कात्रिपुरदाहौ दर्शयन् हरिहरौ स्तौति—

**रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो**
**रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति।**
**दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-**
**र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः॥१८॥**

## मधुसूदनी

रथ इति—हे ईश, त्रिपुरतृणं दिधक्षोस्तव कोऽयमाडम्बरविधिः। त्रयाणां पुराणां समाहारस्त्रिपुरम्, तदेव तृणम्, अनायासनाश्यत्वात्। तद्दग्धुमिच्छोस्तव केयं महत्प्रयोजनमुद्दिश्यैव संभ्रमरचना। नहि लौकिका अपि नखच्छेद्ये कुठारं परिगृह्णन्ति अतस्तवात्यल्पे प्रयोजने न महान्प्रयास उचित इत्यर्थः।

आडम्बरविधिमेव दर्शयति। रथ इत्यादि। क्षोणी पृथ्वी रथरूपेण परिणता, शतधृतिर्ब्रह्मा यन्ता सारथिः, अगेन्द्रः पर्वतश्रेष्ठो मेरुः धनुः कोदण्डं, सोमसूर्यौ द्वे चक्रे, रथचरणं चक्रं तद्युक्तपाणिर्विष्णुः शरो बाणः, चतुर्थवाक्ये श्रुतोऽप्यथोशब्दः सर्वत्र वाक्यभेदाय योजनीयः। इतिशब्दः प्रकारार्थः। त्रिभुवनमपीच्छामात्रेण संहरतस्तवैवं प्रकारेण सामग्रीसम्पादनमाडम्बरमात्रमित्यर्थः। एवमाक्षिप्य परिहारमाह। विधेयैरित्यादि। खलु निश्चितं प्रभोरीश्वरस्य धियो बुद्धयः संकल्पविशेषाः परतन्त्राः

पराधीना न भवन्ति, अपि तु स्वतन्त्रा एव। ताः कीदृश्यः? विधेयैः स्वाधीनैः पदार्थैः क्रीडन्त्यः खेलन्त्यः। नहि क्रीडायां प्रयोजनाद्यपेक्षास्ति। तस्माद्विचित्राणि वस्तूनि स्वाधीनतया क्रीडासाधनीकृत्य क्रीडतस्तव सर्वाणि कार्याणि स्वेच्छामात्रेण कर्तुं क्षमस्य लौकिकवैदिकनियमानधीनबुद्धेर्न किञ्चिदप्यनुचितमित्यर्थः।

हरिपक्षे तु—त्रीणि त्रिकूटगिरिशिखराणि पुराण्याश्रयो यस्येति त्रिपुरं लङ्कापुरम् तदेव तृणं तद्दग्धुमिच्छोस्तव कोऽयं श्रीरामरूपेण सुग्रीवसख्यसमुद्रबन्धनादिश्चाडम्बर-विधिः। रथः क्षोणीत्यादिरूपकम्। क्षोणीव रथः, शतधृतिरिव यन्ता, अगेन्द्र इव धनुः, चन्द्रार्काविव रथचक्रे, रथचरणपाणिरिव शरः, स्वतुल्यवीर्यो बाण इत्यर्थः। क्षोण्यादिसदृशरथाद्युपादानमेतादृशात्यल्पप्रयोजनायापेक्षितुमुचितं न भवतीत्यर्थः। शेषं पूर्ववत् ॥१८॥

## नारायणी

हे प्रभो! (त्रिपुरतृणम्) त्रयाणां पुराणां समाहारस्त्रिपुरम्, तदेव तृणमिव अतितुच्छमित्यर्थः। (दिधक्षोः) दग्धुमिच्छोः (ते) तव (अयं क आडम्बरविधिः) किं प्रयोजनमुद्दिश्येयं संभ्रमरचना, आयास इति वा। अत्यल्पेऽपि कार्य्ये किमिति महान्प्रयासः स्वीकृत इति यावत्। तमेवाडम्बरविधिं विवृणोति—(क्षोणी) पृथिवी "क्षोणिर्ज्या काश्यपी क्षितिः" (अ० को०) इत्यमरः। (रथः) यानम्, रथरूपा कृता, एवमेव (अथो) पदमपि सर्वत्र यथावद्योजनीयमिति। (शतधृतिः) ब्रह्मा (यन्ता) सारथिः कृतः, (अगेन्द्रः) गिरिश्रेष्ठः सुमेरुः, (धनुः) चापः कृतः (चन्द्रार्कौ) सोमसूर्यौ (रथाङ्गे) द्वे चक्रे विहिते, "रथाङ्गं न द्वये चक्रे ना चक्राङ्गविहङ्गमे" इति मेदिनी। (रथचरणपाणिः) चक्रपाणिर्विष्णुः (शरः) बाणः कृतः। (इति) शब्दस्तु प्रकारार्थः, एवंविध इति वा। महाकालरूपेण त्रैलोक्यप्रलयकारिणस्तवैतादृशरणसामग्रीसज्जीकरण-माडम्बरविधानमेवेति यावत्। अथाक्षेपं परिहरति। (खलु) इति निश्चयेन, (विधेयैः) स्वायत्तपदार्थैः सेवकजनैर्वा (क्रीडन्त्यः) खेलां कुर्वन्त्यः (प्रभुधियः) प्रभूणां महतां बुद्धयः सङ्कल्पविशेषाः (परतन्त्राः) पराधीनाः (न) कदापि न भवन्ति। अर्थात् क्रीडाकाले प्रयोजनाद्यपेक्षा न सम्भवति। इयं त्रिपुरदाहकथा शिवपुराणादिषु प्रसिद्धै-वास्ति। तथाप्यत्र महिमवर्णनार्थमेव संक्षिप्तरूपेणोपन्यस्तेति। तद्यथा स्कन्दपुराणस्य कौमारिकाखण्डे त्रयस्त्रिंशेऽध्याये—

"क्षोणी रथो विधिर्यन्ता शरोऽहं मन्दरो धनुः।
रथाङ्गे चापि चन्द्रार्कौ युद्धे यस्य च त्रैपुरे ॥१८॥

## संस्कृतपद्यानुवादः

पृथ्वी रथः सारथिरात्मयोनिः शरासनं यत्र सुमेरुरासीत् (मन्दरपर्वतोऽभूत्)।
बभूवतुः सोमरवी च चक्रे बाणोऽभवच्चक्रधरोऽरिभेत्ता॥
किं दग्धुमिच्छन् त्रिपुरातितुच्छमाडम्बरं तत्र भवानकार्षीत्।
विधेयलीलानिपुणाः प्रभूणां धियः स्वतन्त्रा ननु (खलु) सर्वथैव ॥१८॥

## भाषाटीका

हे प्रभो ! (त्रिपुरतृणं) त्रिपुरासुर नामक एक तृण को (दिधक्षोः) जला डालने की इच्छा करने वाले (तव) आपको (अयं कः आडम्बरविधिः) यह कौन सा आडम्बर फैलाने का प्रयोजन था, जो आपने (क्षोणीरथः) भूमि को रथ, (शतधृतिः) ब्रह्मा को (यन्ता) सारथि (अगेन्द्रः) सुमेरुपर्वतेन्द्र को (धनुः) धनुष (चन्द्रार्कौ) चन्द्रमा और सूर्य को (रथाङ्गे) रथ के पहिये । (अथो) इसी भाँति (रथचरणपाणिः) चक्रधर विष्णु को (शरः) बाण के रूप में परिणत किया । (इति)—यहाँ प्रकारार्थवाची अव्यय है । (खलु) निश्चय करके (प्रभुधियः) स्वामी की बुद्धियाँ (विधेयैः) स्वाधीन पदार्थों से अर्थात् अपने अधीन लोगों के साथ (क्रीडन्त्यः) [सत्यः] खेल करतीं हुईं (परतन्त्राः न) पराधीन नहीं होतीं । अभिप्राय यह है कि—जब आप अशेष ब्रह्माण्ड का प्रलय करने लगते हैं, उस समय किसी वस्तु के जुटाने की आवश्यकता नहीं पड़ती, तब फिर एक तृण के समान महान् तुच्छ त्रिपुर को दग्ध करने के लिए जो इतना बखेड़ा बढ़ाया कि भूमि को रथ बनाकर उसमें चन्द्र-सूर्य की पहिया लगाई, फिर ब्रह्मा को सारथि बनाकर सुमेरु पर्वत को धनुष एवं साक्षात् विष्णु को बाण बनाया, भला यह सब आडम्बर नहीं है तों और क्या है ? इससे यही ज्ञात होता है कि प्रभु लोगों की बुद्धि अपनों के साथ खेलवाड़ में लग जाने पर भी पराधीन नहीं होती । यह त्रिपुरासुर की कथा बहुत प्रसिद्ध है, उसे यह वरदान हो चुका था कि जल-थल सबको छोड़कर जब एक ही बाण से तीनों पुर भस्म हों, तब वह असुर मरे । इसे अन्य किसी से असाध्य समझकर स्वयं महादेवजी ने एक ही बाण में उन सबको ध्वस्त कर दिया ।

इस श्लोक में यह दिखलाया है कि ब्रह्मा और विष्णु इत्यादि सभी आपके अधीन हैं, पर आप किसी के अधीन नहीं हैं । यथा—

"परम स्वतंत्र न सिर पै कोई, भावै मनहि करहु तुम सोई ।" (तु० रा०) ॥१८॥

## भाषापद्यानुवाद

रथ भूमि सारथि विधी, धनुष सुमेरु महान ।
रवि ससि दोऊ चक्र जहँ, चक्रपानि भे बान ॥
कस आडंबर त्रिपुर तृन–जारन लगि यह कीन ? ।
सेवक सन क्रीड़ा करति, प्रभु-मति निज आधीन ॥ १८ ॥

## भाषाबिम्ब

विधी सार्थी, भूमी रथ, हिमगिरी चाप बनहीं,
हरी ह्वैगे बानै, रवि ससि भये चक्र जबहीं ।
क्यारी ऐसी क्यों त्रिपुर तृन जारै कर करैं (री),
स्वदासों से खेलैं प्रभु-मति पराधीन नहि है (री) ॥ १८ ॥

अथेन्द्रोपेन्द्रयोर्भक्तिं तत्फलं च दर्शयन् हरिहरौ स्तौति—

हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥१९॥

## मधुसूदनी

हरिरिति—हे त्रिपुरहर, हरिर्विष्णुस्तव पदयोः साहस्रं सहस्रसंख्यापरिमाणं कमलानां पद्मानां बलिमुपहारम् । सहस्रकमलात्मकं बलिमित्यर्थः । आधाय समर्प्य तस्मिन्कमलसहस्रबलावेकोने सति एकेन कमलेन भक्तिपरीक्षार्थं त्वया गोपितेन हीने सति नियमभङ्गो मा भूदिति तत्पूरणार्थं तदा कमलान्तरमलभमानो निजमात्मीयं नेत्रकमलमेवोदहरदुत्पाटितवान् । यदेवं स्वनेत्रोत्पाटनरूपं भजनम्, असौ भक्त्युद्रेकः भक्तेः सेवायाः अत्यन्तप्रकर्षः चक्रवपुषा सुदर्शनरूपेण परिणतिं गतः, त्रयाणां जगतां रक्षायै जागर्ति । परिपालनार्थं सावधान एव वर्तत इत्यर्थः । एवमाख्यायिका च पुराणप्रसिद्धा । तथा चैवंविधाचिन्त्यमाहात्म्यस्त्वमसीति भावः ।

हरिपक्षे तु—त्रिपुरहरेति प्राग्व्याख्यातम् । हरिरिन्द्रस्तव पदयोः साहस्रं कमलबलिमाधाय । कीदृशं नेत्रकमलं नेत्राण्येव कमलानि यस्मिन्स तथा नेत्रसहस्रात्मकं कमलसहस्रबलिमित्यर्थः । युगपन्नेत्रसहस्रव्यापारेण त्वच्चरणयोर्दर्शनरूपमाराधनं कृत्वेत्यर्थः । आराधनप्रयोजनमाह । निजमात्मानमेकः सहायान्तरशून्यः । अनेन तस्मिन्नेतल्लोकविलक्षणे स्वर्गलोके उदहरदुद्धृतवान् । स्वर्लोकाधिपतिमात्मानं कृतवानित्यर्थः । निजमुद्धर्तुं युगपन्नेत्रसहस्रेण त्वच्चरणावलोकेन यत्प्रवणत्वं असौ भक्त्युद्रेकः चक्रवपुषा चक्रं सैन्यमैरावतोच्चैःश्रवःप्रभृति तद्रूपेण परिणतिं गतः, परिणतः समुद्रमथनेन लक्ष्मीपीयूषादिप्रादुर्भावात् । त्रयाणां लोकानां रक्षायै जागर्तीत्यादि पूर्ववत् ॥१९॥

## नारायणी

(त्रिपुरहर !) हे त्रिपुरदाहक ! पूर्वकथितविधिनैव त्रिपुरविध्वंसकेत्यर्थः । (हरिः) विष्णुः, भवतः (पदयोः) चरणाम्बुजयोः (साहस्रम्) सहस्रसंख्यापरिमितं (कमलबलिम्) पद्मोपहारं (आधाय) निवेद्य ( तस्मिन् ) सहस्रकमलात्मकबलौ ( एकोने ) एकेन कमलेन हीने सति, भ्रष्टसङ्कल्पत्वभयात्प्रतिज्ञातसंख्यापूरणार्थमेव (निजम्) आत्मीयं (नेत्रकमलम्) चक्षूरूपं कमलम्, पुण्डरीकाक्षाभिधानत्वात् (उदहरत्) उदपाटयत्, (असौ) स्वनेत्रकमलोत्पाटनरूपः (भक्त्युद्रेकः) सेवनप्रकर्षः (चक्रवपुषा) सुदर्शनचक्रस्वरूपेण

(परिणतिं) परिणामम्, फलपरिपाकावस्थामित्यर्थः। (गतः) प्राप्तः (त्रयाणाम्) स्वर्ग-मर्त्यपातालाख्यानां (जगताम्) लोकानां (रक्षायै) परित्राणार्थमेव (जागर्ति) जागरूकः सावधानो वा वर्तते। अत्र स्वनेत्रपद्मोपहारदानादेव हरिणा हरसकाशाल्लब्धं सुदर्शन-चक्रमित्याख्यायिका सुप्रसिद्धापि बोधयति, यद् विश्वम्भरस्याप्यनुग्राहको भगवान् विश्वेश्वर एवेत्यचिन्तनीयता विशदीकृता प्रभोर्महिम्न इति। तथा चोक्तमपि स्कन्दपुराणे माहेश्वरखण्डारुणाचलमाहात्म्यस्य षोडशाध्याये—

एकोने पद्मसाहस्रे स्वनेत्रेण कृतार्चनम्।
शूलिन्! सुदर्शनं दत्त्वा दैत्यद्विषमतूतुषः ॥१९॥

अस्मदुक्ताख्यपितृव्यचरणैर्निजनिर्मितपूजापुष्करिणीग्रन्थोपान्ते विश्वनाथ-स्तुतौ—तद्यथोक्तम्।

यत्पादपद्मपरिकल्पितमुग्ररूपं चक्रं ज्वलज्ज्वलनदीप्तिसुदर्शनाख्यम्।
विष्णुप्रियं निखिलदैत्यविनाशदक्षं तं विश्वनाथमुमया सहितं नतोऽस्मि ॥१९॥

## संस्कृतपद्यानुवादः

साहस्रमम्भोजबलिं विधाय त्वदीयपादाम्बुजयो रमेशः।
यदेकपद्मोनबलौ च तस्मिन् स्वनेत्रपाथोजमुदाजहार॥
उद्रेक एष भगवन्! भवतः सुभक्तेर्यातोऽथ चक्रवपुषा परिणामस्वरूपम्।
त्रैलोक्यरक्षणविधौ प्रथितः पटीयाञ्जागर्ति दुष्टदलनोत्कसुदर्शनाख्यः ॥१९॥

## भाषाटीका

(त्रिपुरहर!) हे त्रिपुरविदारक! अर्थात् पूर्वोक्त प्रकार से त्रिपुरासुर के दाहक! (हरिः) भगवान् विष्णु ने (तव) आपके (पदयोः) चरणों पर (साहस्रम्) पूर्ण सहस्र संख्यक, (कमलबलिम्) कमल के फूलों का उपहार (आधाय) रखकर, अथवा निवेदन करके (तस्मिन्) उस सहस्र कमल की पूजा में (एकोने) (सति) एक (फूल) के घट जाने पर, निज संकल्प के भ्रष्ट हो जाने के डर से (निजम्) अपने (नेत्रकमलम्) नयनरूपी कमल को (उदहरत्) निकाल कर रख दिया। (असौ भक्त्युद्रेकः) यही भक्ति की प्रकर्षता (ज्यायसी) (चक्रवपुषा) सुदर्शनचक्र के स्वरूप से (परिणतिम्) परिणाम को (गतः) प्राप्त होने पर (त्रयाणां जगताम्) स्वर्ग-मर्त्य-पातालादि तीनों ही लोकों के (रक्षायै) पालन के लिए (जागर्ति) जागती रहती है, अर्थात् सावधान बनी रहती है।

अभिप्राय यह है कि जिस सुदर्शनचक्र के द्वारा भगवान् विष्णु ने त्रैलोक्य मात्र का पालन करके विश्वम्भर का नाम प्राप्त किया है, उसके भी आपही कारण हैं, आपही के अनुग्रह से उनको सुदर्शनचक्र मिला है। यह कथा ऐसे ही पुराणों में प्रसिद्ध है। एक बार भगवान् विष्णु सहस्र-संख्यक कमलों से देवाधिदेव के सहस्रनाम के अनुसार एक-

एक कमल चढ़ाने लगे, अन्त में परीक्षा लेने के लिए श्रीशंकरजी ने एक पुष्प गुप्त कर दिया। जब विष्णु को एक फूल का घट जाना ज्ञात हुआ, तब उन्होंने विचार किया कि मेरा नाम पुण्डरीकाक्ष प्रसिद्ध है। यदि फूल नहीं है तो उसके बदले में अपनी एक आँख निकाल कर चढ़ावें और ऐसा ही किया। इस अपूर्व महाभक्ति को देखकर भगवान् आशुतोष ने परम प्रसन्न होकर उनको सुदर्शनचक्र दिया, जिससे वे त्रैलोक्य भर के पालनकर्ता हो गए। इससे यह बात भलीभाँति प्रकट होती है कि औरों को कौन कहे साक्षात् विष्णु भगवान् के ही अनुग्राहक स्वयं महादेव स्वामी ही हैं॥ १९॥

### भाषापद्यानुवाद

हरि सहस्र अरविंद बलि तुव पद पूजन लाय।
एक घटे पर निज नयन-कमलहिं दियो चढ़ाय॥
चक्र सुदर्शन रूपते भयो भक्ति परिनाम।
त्रिभुवन रच्छा लागि जो जगत आठहु जाम॥ १९॥

### भाषाबिम्ब

हरी पूजा कीन्हीं सहस्र-कमलों से तुमरि ही,
घटे यें एकै के कमलसम आँखी निज दयी (ई)।
वही भक्ती बाढ़ी सफलित भई चक्र-तनुतें,
जगत्-रच्छा लागी त्रिपुरहर ! सो जागत रहै॥ १९॥



एवं पूर्वश्लोकेषु परमेश्वराराधनादेव सर्वपुरुषार्थप्राप्तिरन्वयव्यतिरेकाभ्यामुक्ता। तत्र केचिन्मीमांसकंमन्याः परमेश्वरनिरपेक्षात्कर्मजनितादपूर्वादेव शुभाशुभप्राप्तिरित्याहुः, तान्निराकुर्वन् हरिहरौ स्तौति—

**क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां**
**क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते।**
**अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं**
**श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः[1] कर्मसु जनः॥२०॥**

## मधुसूदनी

**क्रताविति**—हे त्रिपुरहरेति सम्बोधनं पूर्वश्लोकादनुषज्यते। क्रतौ यागादिकर्मणि आशुतरविनाशिस्वभावत्वात्सुप्ते लीने स्वकारणे सूक्ष्मरूपतां प्राप्ते ध्वस्ते सति। क्रतुमतां यागादिकर्मकारिणां कालान्तरदेशान्तरभावितत्तत्फलसम्बन्धे तन्निमित्तं त्वं

१. कृत इत्यपि पाठः। मधुसूदनाचार्यमतेन कृत एव पाठः समीचीनः।

जाग्रदसि प्रबुद्ध एव वर्तसे। वर्तमाने विहितेन शत्रा जागरणस्य सर्वदास्तित्वमुच्यते। तेन सर्वदैवावहितोऽसीत्यर्थः।

ननु लिङादिपदवाच्यक्रियायाः स्वर्गादिसाधनत्वान्यथानुपपत्त्या कल्प्यमपूर्वमेव फलयोगाय जागर्ति किमीश्वरेणेत्यत आह। क्वेत्यादि। प्रध्वस्तं विनष्टं कर्म पुरुषस्य चेतनस्य फलदातुराराधनं विना क्व फलति ? न क्वापीत्यर्थः। नहि लोके कुत्रापि विनष्टस्य कर्मणोऽपूर्वद्वारा फलजनकत्वं दृष्टम्। लोकानुसारिणी च वेदेऽपि कल्पना, लोकवेदाधिकरणन्यायात्। चेतनस्य तु राजादेराराधितस्य विनैवापूर्वं सेवादेः फल-जनकत्वं दृश्यते। तत्र लोकदृष्टप्रकारेणैव वैदिककर्मणामपि फलजनकत्वसम्भवे न लोक-विरुद्धापूर्वफलदातृत्वकल्पनावकाशः। अपूर्वं हि लोकसिद्धकारणान्तरनिरपेक्षं वा स्वर्गादिफलं जनयेत्तत्सापेक्षं वा। आद्ये तत्फलोपभोगयोग्यदेहेन्द्रियादिकमपि नापेक्षेत। न चैतदिष्टम्, सर्वस्यापि सुखदुःखादेः शरीरसंयुक्तात्ममनोयोगादिदृष्टकारणजन्यत्वाभ्यु-पगमात्। द्वितीये तु लोकसिद्धदेहेन्द्रियाद्यपेक्षावदीश्वरापेक्षापि नियता, लोके तथा दर्शनात्। तस्माच्छ्रुतिन्यायसिद्धेश्वरपदार्थधर्मिबाधकल्पनाद्वारमपूर्वपदार्थस्य नैरपेक्ष्य-धर्ममात्रबाधकल्पनम्, 'फलमत उपपत्तेः' इति न्यायात्। इदं चापूर्वमभ्युपेत्य तत्सापेक्षत्वमीश्वरस्योक्तम्।

वस्तुतस्तु नापूर्वे किञ्चित्प्रमाणमस्ति, लिङादीनामिष्टाभ्युपायतावाचकत्वात्। तदन्यथानुपपत्तेश्च श्रुतिन्यायसहस्रसिद्धपरमेश्वरेणैवोपक्षयात् नापूर्वसिद्धिः। अपूर्वं च तत्फलदातृत्वं च द्वयं भवद्भिः कल्प्यम्। अस्माभिस्तु केवलमीश्वरः कल्प्यः। तस्य फलदातृत्वादिकं तु चेतनत्वाद्राजादिवल्लोकसिद्धमेव। सर्वज्ञत्वेन च तत्तत्कर्मानुरूप-फलदातृत्वान्न वैषम्यनैर्घृण्यादिदोषप्रसङ्गः। यत एवं त्वमेव सर्वकर्मफलदाताऽतस्त्वां क्रतुषु श्रौतस्मार्तकर्मसु कालान्तरफलसाधनेषु फलदानप्रतिभुवं फलदानाय लग्नकमिव सम्प्रेक्ष्य सम्यक् श्रुतिस्मृतिन्यायैः प्रकर्षेण निश्चित्य कर्मफलदातुस्तव सद्भावप्रतिपादि-कायां हि श्रुतौ **'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वी पितरोऽन्वायत्ताः'** (बृ० उ० ३।८।९) **'कर्माध्यक्षः सर्वभूताधिवासः', 'एष उ ह्येव साधु कर्म कारयति तं यमुन्निनीषते एष उ एव बाऽसाधु'** (उपनिषदि) इत्यादिकायां श्रुतौ श्रद्धां बद्ध्वा अर्थवादत्वप्रयुक्तस्वार्थाप्रामाण्यशङ्कानिरासेन लोकसिद्धदृढतरन्याया-नुगृहीततया[1] देवताधिकरणन्यायेन स्वार्थे प्रामाण्यं निश्चित्य जनः श्रुतिस्मृतिविहित-कर्माधिकारी कर्मसु श्रौतस्मार्तेषु कृतपरिकरः कृतः परिकर उद्यमो येन स तथा। कृतारम्भो भवतीत्यर्थः। प्रतिभूसादृश्यं च एतावन्मात्रेणैव विवक्षितम्।

---

१. 'गृहीतेन' पाठः।

यथा कश्चिदुत्तमर्णः प्रमाणनिश्चितं दीर्घकालावस्थानं स्वधनार्पणसमर्थं कश्चित्प्रतिभुवं निरूप्य अधमर्णे पलायिते मृते वा एतस्मादेव कुशलिनः प्रतिभुवः सकाशात्स्वधनं प्राप्स्यामीत्यभिप्रायेण यस्मैकस्मैचिदधमर्णायर्णं प्रयच्छति, तद्वदधमर्णस्थानीये कर्मणि प्रलीनेऽपि परमेश्वरादेव प्रतिभूस्थानीयात्तत्फलं प्राप्स्यामीत्यभिप्रायेणोत्तमर्णस्थानीयो यजमानो निःशङ्कमेव कर्मानुतिष्ठतीति भावः ॥

**हरिपक्षेऽप्येवम्**—शेषं पूर्ववत् । यद्वा सुजनः साधुजनः कर्म श्रुतिस्मृतिविहितं कर्माकृत कृतवान् । कीदृशः सुजनः ? परिकरः, परि सर्वतः कं सुखं राति ददातीति तथा सर्वेषां सुखकरः । अहिंसक इत्यर्थः । 'दृढपरिकरः' इति क्वचित्पाठः । तस्य दृढारम्भ इत्यर्थः । अयं च न साम्प्रदायिकः ॥ २० ॥

## नारायणी

हे जगदीश्वर ? (क्रतौ) यज्ञादिकृत्ये (सुप्ते) विलीने ध्वस्ततां गते सति (क्रतुमताम्) यागादिकर्मकारिणां यज्वनां (फलयोगे) स्वर्गादिफलसाधने (त्वं जाग्रत् असि) भवानेव जागरूकः अप्रमत्त इति यावत्, शतृप्रत्ययः, तिष्ठसि । यतः (प्रध्वस्तम्) विनष्टं (कर्म) कार्यं (पुरुषाराधनं) चेतनस्य फलदातुरीश्वरस्येत्यर्थः, आराधनं सेवनम् (ऋते) विना (क्व फलति) न क्वापीति ध्वनिः । (अतः) अस्मादेव कारणात् (क्रतुषु) यज्ञादिकर्मसु (फलदानप्रतिभुवम्) फलप्रदानकाले प्रतिभूः लग्नकः उत्तमर्णाधमर्णयोर्मध्यस्थस्तं (त्वाम्) भवन्तं (सम्प्रेक्ष्य) सम्यगवलोक्य निश्चित्येत्यभिप्रायः । (जनः) लोकः, श्रुतिस्मृत्युदितकर्माधिकारी (श्रुतौ) वेदवाक्ये (श्रद्धाम्) शङ्कारहितां सप्रमाणां स्पृहां (बद्ध्वा) दृढीकृत्य, निश्चित्य वा (कर्मसु) श्रौतस्मार्तविधिषु (दृढपरिकरः) स्थिरोद्यमो भवति । क्वचित्कृतपरिकर इत्यपि पाठो लभ्यते, तत्र कृतारम्भ इत्यर्थः कर्त्तव्यः । अत्राचेतनस्य कर्मणः स्वयमेव फलदानेऽक्षमतां निरूप्य प्रतिभूरूपाच्चैतन्यमयादीश्वरादेव फलप्राप्तिं ज्ञापयित्वा महामहिमप्रदर्शनपूर्वकं कर्मवादिनां मीमांसकादीनां मतं यथावन् निरस्तमिति ॥ २० ॥

## संस्कृतपद्यानुवादः

यज्ञे विनष्टे फलदानहेतोः त्वं सावधानो भवसि प्रयत्नात् ।
फलत्यनाराध्य भवन्तमीश क्व यज्वनां कर्म क्वापि नष्टम् ॥
अतोऽवलोक्य क्रतुषु प्रभो त्वां फलप्रदानप्रतिभूस्वरूपम् ।
श्रद्धां विधायाथ जनः प्रयोगे श्रुत्युक्तवाक्ये बहुलादरोऽस्ति ॥ २० ॥

## भाषाटीका

हे जगदीश्वर ! (क्रतौ) यज्ञ इत्यादि कर्मों के (सुप्ते) [सति] सो जाने अर्थात् विनष्ट हो जाने पर (क्रतुमताम्) यज्ञकर्ता लोगों के (फलयोगे) स्वर्गादिक फलसाधनों में (त्वं जाग्रत् असि) आप ही जागते रहते हैं; क्योंकि (प्रध्वस्तम्) विनष्ट, अथवा बिगड़ा हुआ (कर्म, यज्ञादिक कार्य

(पुरुषाराधनम्) चेतनस्वरूप फलदाता ईश्वर की आराधना किए विना (ऋते), (क्व फलति) कहाँ फलीभूत होता है ? अर्थात् कहीं भी फलदायक नहीं हो सकता। (अतः) इसी कारण से (क्रतुषु) यज्ञादिक कर्मों में (फलदानप्रतिभुवं) फल देने के समय लग्नक [जामिनदार] (त्वां) आपको (सम्प्रेक्ष्य) अच्छी रीति से देखकर (जनः) लोग, (अर्थात् जो श्रुति-स्मृति के कहे हुए कर्मों के अधिकारी हैं) (श्रुतौ) वेद के वचनों में (श्रद्धां) आदरयुक्त विशेष इच्छा को (बद्ध्वा) बांध कर अर्थात् दृढ़ करके (कर्मसु) कर्मों के करने में (दृढपरिकरः) स्थिर उद्यम होते हैं—अर्थात् कमर कस कर उस कर्म के करने पर दृढ़ हो जाते हैं।

अभिप्राय यह है कि यज्ञादिक—सकल कर्म तो अचेतन हैं। अतएव वे सब स्वयं फल नहीं दे सकते। तब उनके फलों का दाता एक मात्र ईश्वर ही है, क्योंकि वह सर्वज्ञ और सर्वशक्तिमान् हैं। इस श्लोक में यह बात दिखलाई गई है कि जैसे कोई महाजन जब किसी अधमर्ण (असामी) को कुछ देता है तब एक किसी को मध्यस्थ (जामिनदार) बना लेता है। इसलिये कि यदि अधमर्ण कहीं मर गया, अथवा कहीं भग गया, तो जो मध्यस्थ रहता है, उससे अपना द्रव्य ले सकता है। उसी प्रकार से सब कर्म तो अधमर्णरूप हैं, और कर्मों का करनेवाला पुरुष ही उत्तमर्ण (महाजन) है—वही ईश्वर के लग्नक अथवा प्रतिभू (जामिनदार) रहने से निःशङ्क होकर कर्मों को करता है। क्योंकि यदि कर्म नष्ट भी हो जावें, तो उनके प्रतिभू स्वयं आप (ईश्वर) ही बने रहते हैं—इससे कर्ता को किसी कर्म पर फल नहीं पाने का अथवा कर्म के निष्फल हो जाने का संदेह नहीं रह जाता। अतएव श्रुति-स्मृतिपुराणादिकों के कर्मों पर लोगों का भरोसा बना रहता है—अर्थात् यदि ईश्वर के विना आराधे कर्म ही फल दे सकते हैं, तो जब कर्म नष्ट हो जायंगे तो उनका फल कौन दे सकता है ? अतएव समस्त फलों के दाता ईश्वर ही को जागरूक सब लोग कर्म करने में तत्पर होते हैं, यदि ऐसा नहीं होता तो संसार में सब कर्मों का होना ही बन्द हो जाता। यह बात सब प्रकार से सिद्ध है ॥ २० ॥

## भाषापद्यानुवाद

क्रतु सूते पै जागहू, तुम फल वितरन हेत।
विनु अवराधे पुरुष को, बिगरे को फल देत ॥
प्रतिभू तुमहि विलोकि जग, जग्यन के फल माँहि।
करि स्रद्धा स्रुति कर्म पै, जन निज कमर कसाँहि ॥ २० ॥

## भाषाबिम्ब

क्रतूके सूते पै फलद बनि आपै नित जगैं,
विना तो आराधे करम विगरे क्यों फलि सकैं।
तुमी को जज्ञों में फल-मिलनको जामिन लखैं,
श्रुती पै स्र (श्र) द्धा सें कमर कसि कर्मैं जन करैं ॥ २० ॥

एवं भगवत्प्रसादेन क्रतुफलप्राप्तिमुक्त्वा विहितानां शुभफलजनकानुपपत्त्या धर्माख्यमपूर्वंद्वारत्वेन कल्पनीयमिति पक्षो निराकृतः। सम्प्रति विहिताकरणनिषिद्धकरणयोरशुभफलस्य भगवत्प्रसादासाध्यत्वात्तदर्थमवश्यमधर्माख्यमपूर्वं कल्पनीयमिति शङ्कायां राजाज्ञालङ्घनादेरिव भगवदाज्ञोल्लङ्घनादखिलानर्थफलत्वं दृष्टद्वारेणैव भविष्यतीत्यभिप्रायेण भगवतोऽप्रसादेन क्रतुफलाप्राप्तिमनर्थप्राप्तिं च दर्शयन् हरिहरौ स्तौति—

> क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
> मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः।
> क्रतुभ्रेषस्त्वत्तः क्रतुषु[1] फलदानव्यसनिनो[2]
> ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥२१॥

## मधुसूदनी

क्रियेति—हे शरणद, दक्षो दक्षनामा प्रजापतिः क्रियास्वनुष्ठेयासु दक्षः प्रवीणः, यज्ञविधौ कुशल इत्यर्थः। एतेन विद्वत्त्वमधिकारिविशेषणमुक्तम्। तथा तनुभृतां शरीरिणामधीशः स्वामी, प्रजापतित्वात्। एतेन सामर्थ्यमधिकारिविशेषणमुक्तम्। एतादृशः क्रतुपतिर्यजमानः। तथा ऋषीणां त्रिकालदर्शिनां भृगुप्रभृतीनामार्त्विज्यमृत्विक्त्वमाध्वर्य्वादिरूपता। तथा सुरगणा ब्रह्मादयो देवगणाः सदस्याः सभ्या उपद्रष्टारः। एतादृशसर्वसामग्रीसम्पत्तावपि त्वत्तः परमेश्वरादप्रसन्नात्क्रतोर्यज्ञस्य भ्रेषः भ्रंशो जातः। कीदृशात्? क्रतुफलविधानव्यसनिनः क्रतोर्यज्ञस्य फलं स्वर्गादि, तस्य विधानं निष्पादनं तेन व्यसनी तदेकनिष्ठस्तस्मात् क्रतुफलदातृस्वभावोऽपि त्वमवज्ञाय क्रतुभ्रंशहेतुतां नीत इत्यर्थः। एतदेव द्रढयन्नाह। ध्रुवमिति। ध्रुवं निश्चिते क्रतुफलदातरि परमेश्वरे विषये श्रद्धाविधुरं भक्तिरहितं यथा स्यात्तथानुष्ठिता मखा यज्ञाः कर्तुर्यजमानस्याभिचाराय नाशायैव भवन्तीत्यर्थः।

हरिपक्षे तु – तनुभृतामधीशः क्रतुपतिः तनुं स्वशरीरमेव बिभ्रति पुष्णन्तीति तनुभृतो दैत्या देवाबाह्यास्ते हि सुरनरपितृभ्यो न प्रयच्छन्ति सर्वहिंसया स्वशरीरमेव पुष्णन्ति, तेषामधीशो राजा बलिः क्रतुपतिर्यजमानः, अथवा तनूक्षीणान्बिभ्रति पुष्णन्ति ते तनुभृतो वदान्यास्तेषामधीशो दातृवीराग्रगण्यो[3] बलिः। कीदृशः। क्रियादक्षोदक्षः उत्कृष्टान्यक्षीणीन्द्रियाणि यस्य स उदक्षः, क्रियादक्षश्चासावुदक्षश्चेति स तथा। सुरेषु देवेषु गण्यन्ते इति सुरगणा देवतुल्याः पुरुषाः सदस्याः। श्रद्धाविधुरत्वं च भगवदनुगृहीतेन्द्रादिदेवगणैः सह विरोधात्। स्वभक्तद्रोहो हि भगवतः स्वद्रोहादप्यधिकः। शेषं पूर्ववत् ॥२१॥

---

१. क्रतुभ्रंशः। २. क्रतुफलविधानव्यसनिनः। पाठावपि।

३. 'दानवाग्रगण्यो' इति पाठः।

## नारायणी

(शरणद !) हे शरणार्तिहारिन् ! (क्रियादक्षः) सकलकर्मप्रवीणः (तनुभृताम्) शरीरधारिणाम् (अधीशः) स्वामी (दक्षः) दक्षप्रजापतिः (क्रतुपतिः) यज्ञकर्ता, यजमानः तथा (ऋषीणाम्) त्रिकालदर्शिनां भृगुप्रभृतीनाम् (आर्त्विज्यम्) ऋत्विजो भावः, ऋत्विक्-कृत्यमित्यर्थः । एवं (सुरगणाः) ब्रह्मादयो देवा एव यत्र (सदस्याः) सभ्या उपद्रष्टार इति यावत् । एतादृशविशिष्टसामग्रीसम्पत्तावपि (क्रतुषु) यज्ञेषु (फलदानव्यसनिनः) फलं स्वर्गादिकं तद्दाने व्यसनी, तदेकनिष्ठस्तस्मात् (त्वत्तः) भवतः सकाशादेव (क्रतुभ्रेषः) यज्ञविध्वंसः । अभूदिति शेषः । (हि) यतः (श्रद्धाविधुरम्) सकलकर्मफलदायक ईश्वरे भक्तिविरहितं यथा स्यात्तथानुष्ठिताः (मखाः) यज्ञाः (कर्तुः) यागकारिणो यजमानस्य (अभिचाराय) विनाशायैव भवन्तीति (ध्रुवं) विनिश्चितमेव । क्वचित् 'क्रतुभ्रंशः' इत्यत्र क्रतुभ्रेष इत्यपि पाठस्तत्राप्यर्थः स एव । तथा च 'क्रतुषु फलदानव्यसनिनः' इत्यत्रापि क्रतुफलविधानव्यसनिन इति लभ्यते, अर्थस्तु स्पष्ट एव । अत्राखिलपुराण-प्रसिद्धां दक्षयज्ञविध्वंसकथामवलम्ब्यानीश्वरवादिनां मतं निराकुर्वता स्तोत्रा भगवतो महिमैव स्पष्टीकृत इत्यवधेयम् । उक्तमपि स्कन्दपुराणस्य माहेश्वरकौमारिकाखण्डे (३३ अ० २४ श्लो०) "यज्ञादिकाश्च ये धर्मा विना यस्यार्चनं वृथा ।

दक्षोऽत्र सत्यदृष्टान्तः कस्तस्मात्परमो भवेत्" ॥२१॥

## संस्कृतपद्यानुवादः

क्रियासु दक्षो यजमानरूपोऽप्यधीश्वरो देहभृताञ्च दक्षः ।<br>
प्रजापतिर्देवगणान्सदस्यान् कृत्वर्त्विजः श्रेष्ठतमानृषींश्च ॥<br>
त्वत्तः क्रतुभ्रंशमवाप यज्ञफलप्रदानव्यसनातुरात्सः ।<br>
श्रद्धावि-(विश्वास) हीना हि मखा भवन्ति कर्तुर्विनाशार्थमवश्यमेव ॥२१॥

## भाषाटीका

(शरणद) हे शरणागतरक्षक ! (क्रियादक्षः) समस्त क्रियाओं के अभिज्ञ तथा (तनुभृमाधीशः) शरीरधारियों के अधिनायक, अर्थात् कर्मप्रवीण एवं सामर्थ्यवान् अधिकारी (दक्षः) दक्षनामा प्रजापति (क्रतुपतिः) स्वयं यज्ञकर्ता, अथवा यजमान हुए तथा (ऋषीणामा-र्त्विज्यम्) (त्रिकालदर्शीभृगु इत्यादि) ऋषि लोग जहाँ पर ऋत्विक्–अर्थात् होम कराने वाले थे, और (सदस्याः सुरगणाः) सभी देवता लोग सभासद थे, (ऐसा भारी यज्ञ) (क्रतुषु फलदानव्यसनिनः) यज्ञों में फल देने के व्यसनी (आदतो) (त्वत्तः) आप ही द्वारा (क्रतुभ्रेष) यज्ञ का विध्वंस हुआ । (हि) क्योंकि (श्रद्धाविधुरम्) श्रद्धा से रहित (यज्ञाः) समस्त यज्ञ (कर्तुः) यज्ञकर्ता के (अभिचाराय) उलटे फल अर्थात् विनाश ही के लिए होते हैं । (ध्रुवम्) यह बात निश्चित है ।

भाव यह कि जब स्वयं यजमान को ईश्वर पर श्रद्धा नहीं होती, तब उसके यज्ञादिक कर्मों के अनुष्ठान करने से उलटे (विपरीत) ही फल मिलते हैं। जैसे स्वयं बड़े कर्मनिष्ठ तथा प्रजामात्र के स्वामी दक्षप्रजापति बड़े-बड़े महर्षियों को ऋत्विक् और समस्त देवताओं को सभासद बनाकर यज्ञ करने लगे, पर आपकी भक्ति से वंचित होने के कारण समस्त यज्ञों के फलदाता आप ही के द्वारा उनका यज्ञ विध्वस्त हो गया। इसी से आपका 'क्रतुध्वंसी' नाम ही पड़ गया। यद्यपि यह कथा प्रायः सभी पुराणों में पाई जाती है; तथापि काशीखण्ड के ८७।८८।८९ अध्यायों में विशदरूप से वर्णित है और तुलसीकृत रामायण में भी मिलती है, जिसके अन्त में ऐसा लिखा है--

'समाचार जब संकर पाये, बीरभद्र करि कोप पठाये।
यज्ञ विधंस जाइ तिन कीन्हा, सकल सुरन्ह विधिवत फल दीन्हा॥
भइ जग विदित दच्छ गति सोई, जस कछु संभु-विमुख कर होई।
यह इतिहास सकल जग जाना, ताते मैं संक्षेप बखाना॥' ॥ २१ ॥

### भाषापद्यानुवाद

दीच्छित दच्छ प्रजापती, क्रिया-कांड में दच्छ।
ऋषी लोग ऋत्विज (ग) जहाँ, सभ्य देव परतच्छ॥
क्रतु फल दाता तुमहि सो, जज्ञ भयो सो भ्रष्ट।
बिनु स्रद्धा के जज्ञ सब, कर्तहि करहिं विनष्ट॥ २१॥

### भाषाबिम्ब

क्रिया-ज्ञाता दच्छै प्रभु सबहिके दीक्षित बने,
ऋषी लोगै ऋत्विक् सुरगन सभै सभ्य जहँ भे।
भयो जज्ञै सोऊ विहत, फलदानी (ता) तुमहि सो,
बिना स्रद्धा कीन्हे लहत मखकर्ता नहि फ (म) लो॥ २१॥

•

अथ ब्रह्ममारीचयोर्मृगरूपयोर्वधं दर्शयन् हरिहरौ स्तौति—

**प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं**
**गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा।**
**धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं**
**त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः॥२२॥**

### मधुसूदनी

**प्रजानाथमिति**—हे नाथ नियामक, तव परमेश्वरस्य धनुःपाणेः धृतपिनाकस्य मृगव्याधरभसः मृगान्विध्यतीति मृगव्याधो लुब्धकः, तस्येव रभस उत्साहातिरेको

मृगव्याधरभसः शर एव तथा आरोपितः, स चार्द्रानक्षत्ररूपेण परिणत इति पुराणप्रसिद्धः। अमुं प्रजानाथं ब्रह्माणं दिवं स्वर्गं यातं प्राप्तमपि नक्षत्रमध्ये मृगशिरोरूपेण परिणतमपि तथा सपत्राकृतं सह पत्रेण शरं शरीरे प्रवेश्यातिव्यथां नीतः सपत्राकृतस्तादृशमिवात्मानं मन्यमानम्। रूपकमेतत्। शरस्यार्द्रानक्षत्ररूपेण संनिधानमात्रम्, नतु ताडनमिति द्रष्टव्यम्। अथवा शरेण ताडित एव ब्रह्मा रुद्रस्य क्रोधोत्साहविशेष एवार्द्रानक्षत्ररूपेण परिणत इति पुराणान्तरप्रसिद्ध्या द्रष्टव्यम्। अत एव त्रसन्तं बिभ्यन्तमद्यापि न त्यजति। इदनीमपि धनुष्पाणिमेव त्वां सर्वदा दर्शयतीत्यर्थः। तस्यैतादृशदण्डार्हतामाह। स्वामात्मीयां दुहितरं पुत्रीं रोहिद्भूतां लज्जया मृगीभूतां ऋश्यस्य मृगस्य वपुषा शरीरेण रिरमयिषुं रमयितुमिच्छुम्। इयं चेल्लज्जया मृगीभूता तर्ह्यहमपि मृगरूपेणैनां भजिष्यामीति बुद्ध्या मृगरूपेण प्रसभं हठेनानिच्छन्तीमपि तां गतं रत्यर्थं प्राप्तम्। तस्य परमदर्शिनोऽपि स्वमर्यादातिक्रमे कारणं वदन् विशिनष्टि। अभिकं कामुकम्। कामेनाभिभूतत्वात्स्वमर्यादोल्लङ्घिनमित्यर्थः।

एवं हि पुराणेषु प्रसिद्धम्—'ब्रह्मा स्वदुहितरं संध्यामतिरूपिणीमालोक्य कामवशो भूत्वा तामुपगन्तुमुद्यतः। सा चायं पिता भूत्वा मामुपगच्छतीति लज्जया मृगीरूपा बभूव, ततस्तां तथा दृष्ट्वा ब्रह्मापि मृगरूपं दधार। तच्च दृष्ट्वा त्रिजगन्नियन्त्रा श्रीमहादेवेनायं प्रजानाथो धर्मप्रवर्तको भूत्वाऽप्येतादृशं जुगुप्सितमाचरतीति महतापराधेन दण्डनीयो मयेति पिनाकमाकृष्य शरः प्रक्षिप्तः। ततः स ब्रह्मा व्रीडितः पीडितश्च सन् मृगशिरोनक्षत्ररूपो बभूव। ततः श्रीरुद्रस्य शरोऽप्यार्द्रानक्षत्ररूपो भूत्वा तस्य पश्चाद्भागे स्थितः। तथा चार्द्रामृगशिरसोः सर्वदा संनिहितत्वादद्यापि न त्यजति' इत्युक्तम्।

**हरिपक्षे तु**—हे नाथ, रोहिद्भूतां गतं प्रजानाथं दिवं यातमपि धनुष्पाणेस्तव मृगव्याधरभसोऽद्यापि न त्यजति। रोहितो हरिण्याः सकाशाद्भवतीति रोहिद्भूर्हरिणशावकः तस्य, भावो रोहिद्भूता, तां गतम्। हरिणशावकत्वं प्राप्तमित्यर्थः। प्रजाः प्राणिनो नाथति उपतापयतीति प्रजानाथो राक्षसः, स च प्रकृते मारीचाख्यस्तम्। किमर्थं तस्य मृगरूपधारणमित्यत आह। प्रसभमभिकं रिरमयिषुं प्रकृष्टा शौर्यादियुक्ता सभा यस्य स प्रसभस्तं तादृशम्, अभितः कानि शिरांसि यस्य सोऽभिको दशग्रीवस्तम्। सीतापहरणोपायेन क्रीडयितुमिच्छुम्। तथा स्वां दुहितरमयोनिजां कन्यां सीतां ऋष्यस्य वपुषा विचित्रमृगशरीरेण रिरमयिषुं प्रमोदयितुमिच्छुम्। विचित्रमृगरूपं मां दृष्ट्वा सीता स्त्रीस्वभावादतिमुग्धा मच्चर्मग्रहणार्थं श्रीरामं प्रेरयिष्यति। ततो रामे बहुदूरं मयाऽपसारिते लक्ष्मणे च तदुद्देशार्थं गते एकाकिनीं सीतां रावणः सुखेन हरिष्यतीत्यभिप्रायेण धृतविचित्रमृगशरीरमित्यर्थः। अत एव बाणेन सपत्राकृतत्वाद्दिवं

परलोकं यातम्। मृतमित्यर्थः। अमुं मृतमपि त्रसन्तमद्यापि तव मृगव्याधरभसो न त्यजतीप्युत्प्रेक्षारूपो ध्वनिः। शेषं पूर्ववत् ॥२२॥

## नारायणी

(नाथ !) हे स्वामिन्! नाथतीति अच्प्रत्ययः। (धनुष्पाणेः) पिनाकपाणेर्महाधनुर्द्धरस्य (ते) तव (मृगव्याधरभसः) मृगव्याधयोः रभसो वेगः। अथवा मृगान् विध्यतीति मृगव्याध.–"श्याद्व्यधास्रुः०" (अष्टा० ३।१।१४१) इत्यादिना णः। लुब्धकः। तस्येव रभस उत्साहातिरेक इत्यर्थः। "रभसो वेगहर्षयोः" इति विश्वप्रकाशः। "अत्यविचमियमि" (उणा० ३।११७) इत्यादिना असच्। आखेटोत्साह इति यावत्। मृगानुसरणतत्परव्याधलीलानुकरणहर्षं इत्यभिप्रायः। (अद्यापि) अद्यतनदिवसावधि (प्रजानाथम्) ब्रह्माणम्, "स्रष्टा प्रजापतिर्वेधाः" (अ० को० १।१।१७) इत्यमरः। (न त्यजति) नैव विजहाति। इदानीमपि भवन्तं धनुष्पाणिमेवावलोकयतीति भावः। अन्यत् सर्वं विशेषणमेव। कथं भूतं प्रजानाथमिति सर्वत्र योजनीयम्। (रोहिद्भूतां स्वां दुहितरं ऋश्यस्य वपुषा रिरमयिषुम्) लज्जावशादधर्माचरणभयाद्वा रोहिद्भूतां मृगीभूतां स्वामात्मीयां दुहितरं पुत्रीं ऋश्यस्य मृगस्यैव वपुषा शरीरेण रिरमयिषुं रमयितुमिच्छुम्। इयं मृगी जाता चेद् अहमपि मृगो भूत्वैनां भजिष्यामीति बुद्ध्या मृगरूपेण (प्रसभम्) बलपूर्वकं हठाद्वा, अनिच्छन्तीमपीत्यर्थः। (गतम्) रत्यर्थमेव प्रयातम्। तस्यापि मर्य्यादातिक्रमणे कारणं विशिनष्टि। (अभिकम्) कामुकम्,"अनुकाभिकाभीकः कमिता" (अष्टा० ५।२।७४) इति साधुः। पुनः (दिवं यातमपि) स्वर्गपर्य्यन्तं पलायितमपि अर्थान्मृगशिरोनक्षत्ररूपतां गतमपि (सपत्राकृतम्) सह पत्रेण शरं शरीरे प्रवेश्यातिव्यथितमिवात्मानं मन्यमानम् (अमुम्) प्रत्यक्षरूपेण वर्तमानम्। अतएव (त्रसन्तम्) अत्यन्तभयग्रस्तमित्यर्थः।

अत्र कुपथगामिनो विश्वसृजोऽपि परमनियामको भगवान् विश्वेश्वर एवेति तस्य महिमातिशय एव द्योतितस्तत्र कविनेति ॥ २२ ॥

## संस्कृतपद्यानुवादः

नाथ ! स्वपुत्रीं हरिणीत्वमेतां मृगस्व रूपेण विहर्तुमिच्छुम्।  
बलात्प्रजानाथममुं पुराणं बाणाभिघातव्यथितान्तरालम् ॥  
कामातुरं देव ! दिवं प्रयातं त्रसन्तमद्यापि पिनाकिनस्ते।  
जहाति नैवातिधनुर्धरस्य आखेटकोत्साह उमाविहारिन् ॥२२॥

## भाषाटीका

(नाथ !) हे सर्वनियामक ! (धनुष्पाणेस्ते) पिनाक नामक महाधनुष को हाथ में धारण करनेवाले आपका (मृगव्याधरभसः) मृगों के अहेरी का उत्साह अर्थात् मृगों की मृगया (शिकार) करने में लगे हुए व्याध का उत्साह (हौसिला)। (अद्यापि) आज तक भी (अमुं

प्रजानाथम्) इस वर्तमान समस्त जगत् के सृष्टिकर्ता को (न त्यजति) नहीं छोड़ता है। और सब विशेषण हैं। अर्थात् कैसा है प्रजानाथ कि (रोहिद्भूतां स्वां दुहितरं ऋश्यस्य वपुषा रिरमयिषुम्) लाज में पड़कर अथवा पाप के डर से हरिणी बनी हुई अपनी कन्या के साथ हरिण का शरीर धारणकर रमण करने की इच्छा करने वाला। मृगी जब नहीं चाहती थी तब बलपूर्वक (जबरदस्ती) गमन करने में कारण दिखाते हैं कि (अभिकम्) कामातुर। फिर (दिवं यातमपि सपत्राकृतम्) स्वर्ग पर्य्यन्त भागकर जाने पर भी अपने को बाण से विधा हुआ समझनेवाला, अत एव (त्रसन्तम्) भय से ग्रस्त। ये सब (प्रजानाथम्) के विशेषण हैं। अभिप्राय यह है कि जब प्रजापति भी कामातुर होकर अपनी कन्या के रूप पर मोहित हो गए, तब वह अपने रूप के कारण पिता को कामातुर समझ तुरत मृगी (रोहिणी नक्षत्र) हो गई, जिसमें पशु का रूप देखकर पिता का काम वेग शान्त हो जावे। पर उसके मृगी होते ही प्रजापति भी मृग का शरीर धारणकर बलपूर्वक उसके साथ रमण करने को उद्यत हो गए। यह देखकर भगवान् शंकरजी ने धनुष हाथ में लेकर उनके पीछे धावा किया। जिस पर वह स्वर्ग तक दौड़े। पर आजतक उनका पिण्ड नहीं छूटा। क्योंकि संध्या तो मृगी, अर्थात् रोहिणी नक्षत्र है और उसके पीछे-पीछे चलनेवाला प्रजापति मृगशिरा नक्षत्र है; फिर उसका आखेट करने को प्रतिक्षण उद्यत रहने वाला श्रीमहादेवजी का बाण (रौद्र) आर्द्रानक्षत्र बनकर उसके पीछे लगा रहता है।

भाव यह कि मृगी के लिये जब प्रजापति मृग बने, तब आप भी तुरत मृगयु (शिकारी) बनकर उनके पीछे पड़े। इस भय से वह अपने को तीर से बिंधा हुआ समझकर नक्षत्ररूप में स्वर्ग में भागते फिरते हैं। इस श्लोक की कथा स्कन्दपुराणादिकों में विस्तृतरूप से वर्णित है। इसका भाव यह है कि औरों को कौन कहे, जब स्वयं प्रजापति भी काम के वश में पड़कर कुपथ पर आरूढ़ हो गये, तब आप ही ने उनका भी शासन किया। अतएव आपकी महिमा सर्वथा अतुलनीय और अचिन्तनीय है।

"सुभ अरु असुभ कर्म अनुहारी।
ईश देइ फल हृदय विचारी॥" (तु रा०)॥ २२॥

## भाषापद्यानुवाद

निज तनुजा अभिलाषते, कामुक परजानाथ।
हरिन रूप धरि जात भे, विहरन हरिनी साथ॥
कर लै धनु बेध्यो तिन्हैं, गये स्वर्गलों भाग।
तजत सिकारि अजहुँ नहिं, लच्छ पेखि करि लाग॥ २२॥

## भाषाबिम्ब

अपानी कन्याते रमन करिवेको मृग बने,
प्रजास्वामी कामी सरग तललों दौरत थके।
तवै आपौ व्याधा बनि तिहि लखेद्यो डरत सो,
लिये हाथै चापौ फिरहु अजहूँ नांहि तजतो॥ २२॥

परमवशिनां वरावपि श्रीराममहादेवौ लक्ष्मीपार्वत्यनुकम्पया स्त्रैणमिवात्मानं दर्शयेत इति प्रतिपादयन् स्तौति—

**स्वलावण्याशंसाधृतधनुषमह्नाय तृणव-**
**त्पुरः प्लुष्टं दृष्ट्वा पुरमथनपुष्पायुधमपि ।**
**यदि स्त्रैणं देवी यमनिरत देहार्धघटना-**
**दवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥२३॥**

## मधुसूदनी

**स्वलावण्येति**—हे पुरमथन, हे यमनिरत, यमनियमासनाद्यष्टाङ्गयोगपरायण, एतेन जितेन्द्रियत्वमुक्तम् । पुष्पायुधं कामं त्वया तृणवत्तृणमिव अह्नाय शीघ्रं प्लुष्टं दग्धं पुरः साक्षादेवाव्यवधानेन दृष्ट्वा चाक्षुषज्ञानविषयीकृत्य । कीदृशं पुष्पायुधम् ? स्वलावण्याशंसाधृतधनुषं स्वस्याः पार्वत्याः यल्लावण्यं सौन्दर्यातिशयः, तद्विषया आशंसा परमयोगिनमपि श्रीरुद्रमस्याः सौन्दर्यातिशयेन वशीकरिष्यामीति या प्रत्याशा, तया निमित्तभूतया धृतं धनुर्येनेति तथा तम् । एतेन स्वलावण्यातिशयस्यापि श्रीरुद्रविषयेऽकिञ्चित्करत्वमुक्तम् । तथा चैवं स्वलावण्यवैयर्थ्यं पुष्पायुधस्य तृणवद्दाहं च स्वयं साक्षात्कृत्वापि देवी पार्वती इयं चिरकालं मामुद्दिश्य तपः कृतवती विरहदुःखं मा प्राप्नोत्विति करुणामात्रेण देहार्धघटनात् त्वया स्वशरीरार्धेऽवस्थापनाद्धेतोर्भ्रमबीजाद् यदि त्वां सर्वयोगिनां वरं स्त्रैणं यद्ययं मदधीनो न भवेत्कथं मां स्वशरीरार्धे स्थापयेदिति भ्रान्त्या स्त्रीसक्तं यद्यवैति विशेषादर्शनात्कल्पयति तर्हि तदद्धा युक्तमेव तस्याः । अयुक्तस्यापि युक्तत्वे हेतुमाह । बतेत्यादि । हे वरद, अतिदुर्लभमपि स्वदेहार्धं दत्तमिति वरदेति योग्यं सम्बोधनम् । बत अहो, युवतयस्तरुण्यः मुग्धा अतत्त्वज्ञाः । स्वभावत एवेति शेषः । तथा च सहजानां युवतिविभूषणानां प्रधानं मौग्ध्यमनुकुर्वन्त्याः स्वरूपतश्चितिरूपाया अपि देव्या मिथ्याज्ञानं युक्तमित्यर्थः ।

**हरिपक्षे तु**—हे अर्धघटनादव, घटनाया अर्धमित्यर्धघटना अर्धपिप्पलीवत् । तस्या दवो वनवह्निः, दाहक इति यावत् । सीतारूपाया लक्ष्म्याः रामरूपेणोचितात्संयोगात्स्वेच्छयाऽर्धसंभोगं दत्त्वाऽर्धविप्रलम्भं दत्तवानसीत्यर्थः । सा पूर्वश्लोकोक्ता देवी सीतारूपा लक्ष्मीः । कीदृशी ? यमनिरतदेहा अत्यन्तपतिव्रता । तथा पुरमथनपुष्पा पुरस्य शरीरस्य मथनानि पीडकानि पुष्पाणि यस्याः सा तथा । पुष्पाणामपि[1] स्पर्शासहा । अतिसुकुमाराङ्गीत्यर्थः । त्वां श्रीरामरूपं यदि स्त्रैणमवैत्यवगच्छति[2] तदद्धेत्यादि

---

१. 'स्पर्शात्पीडोत्पत्तेरतिसुकु०' इति पाठः ।   २. 'मैति प्रत्येति' इति पाठः ।

पूर्ववत् । त्वां कीदृशम् ? स्वलावण्याशं स्वकीयं लावण्यमत्र शौर्यादिगुणकृतं सौन्दर्यं तस्मिन्नाशा यस्य स स्वलावण्याशस्तम् । सीताया अनुद्धरणात्स्वस्य शौर्यादिप्रसिद्धिः गंच्छेदिति स्वकीर्तिरक्षार्थिनमित्यर्थः । अत एव धृतधनुषं सज्जीकृतकोदण्डम् । इदमेकं भ्रमबीजमुक्तम् । भ्रमबीजान्तरमाह । अह्नाय तृणवत्पुरः प्लुष्टं दृष्ट्वा शीघ्रमेव तृणस्येव पुरो लङ्कायाः प्लुष्टं दाहम् । भावे क्तः । तथायुधं युद्धमपि दृष्ट्वा । आयुध-शब्दस्य शस्त्रे युद्धे चानुशासनात् । तथा च स्वकीर्तिरक्षार्थमत्यन्तपतिव्रतायाश्च देव्याः कारुण्येन क्लेशविमोचनार्थं सज्जीकृतकोदण्डं त्वामर्धघटनादेवमप्ययं यदि मदधीनो न भवेत्, तदा कथमेतादृशदुष्करकर्माणि मामुद्दिश्य कुर्यादिति भ्रमेण स्त्रीसक्तमिव कल्पयतीत्यर्थः । शेषं पूर्ववत् ॥ २३ ॥

## नारायणी

(पुरमथन !) हे त्रिपुरान्तक ! (स्वलावण्याशंसाधृतधनुषम्) स्वस्याः पार्वत्या एव यल्लावण्यं सौन्दर्यातिशयो रूपशोभाविशेषस्तल्लक्षणं । यथा—

**'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।**
**प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥'**

(इत्युज्ज्वलनीलमणिः)

तस्य आशंसा प्रत्याशा, अर्थाज्जितेन्द्रियमपि शिवमेतस्या लावण्येनैव जेष्याम्येतादृशी धारणा । तथा चोक्तमपि कुमारसम्भवे **'कुर्यां हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्विनोऽन्ये'** (कु० सं० ३।१०) एवं रूपया धारणया निमित्तरूपया धृतं धनुर्येन तम् । 'स्वलावण्याशंसा' इति पदं पृथक्कृतं चेद् देवीपदस्यापि विशेषणत्वं प्रयाति, तत्रात्मसौन्दर्य्यकीर्तनशीला, रूपगर्वितेत्यर्थः । (पुष्पायुधम्) कामं (अह्नाय) झटिति, अव्ययपदमेतत् । (पुरः) अग्रे (तृणवत्) शुष्कतृणसदृशं (प्लुष्टम्) दग्धम्, प्रुषु-प्लुषु-दाहे इत्यस्माद्धातोः क्तप्रत्ययः । तथा च 'यस्य विभाषा' (अष्टा० ७।२।१५) इत्यत इट् न । (दृष्ट्वा अपि) साक्षादवलोक्यापि (देवी) पार्वती (यमनिरतदेहार्द्धघटनात्) यम-नियमासनाद्यष्टाङ्गयोगतत्परशरीरार्द्धयोजनकारणात्, किं वा हेयमनिरतेति सम्बुद्धि-पदम्, तदग्रे स्वशरीरार्द्धेऽवस्थापनादेव (त्वाम्) परमजितेन्द्रियं (यदि) कदाचित् (स्त्रैणम्) स्त्रीसक्तं स्वाधीनं लम्पटमिति वा (अवैति), तर्हि तत् (अद्धा) युक्तमेव—**'तत्त्वे त्वद्धाऽञ्जसा द्वयम्'** (अ० को० ३।४।१२) इत्यमरः । हे (वरद !) देव्या अत्युत्कृष्टतपो वीक्ष्य स्वदेहार्द्धरूपवरदातः ! परमयोग्यमिदं सम्बोधनम्, (बत) अहो ! खेदे वा (युवतयः) तरुण्यः (मुग्धाः) मूढा अतत्त्वज्ञा इत्यर्थः । **'मुग्ध. सुन्दरमूढयोः'** इत्यमरः । भवन्तीति शेषः । अत्राप्यर्थान्तरन्यास एव । अर्द्धनारीश्वररूपवर्णनन्तु स्कन्द-पुराणस्य माहेश्वरखण्डारुणाचलमाहात्म्ये २१ अ० १९ श्लोकादारभ्य २४ पर्य्यन्तं

तथा शिवपुराणस्थवायुसंहितापूर्वभागे १३ अध्याये चार्द्धनारीश्वरस्तोत्रं ब्रह्मणोक्तं प्रेक्षणीयमेवेति विस्तरभयान्नेह लिखितम्। अस्मिन् पद्ये कामदाहको भूत्वाऽपि स्वयमर्द्धनारीश्वररूपधरो योगतत्त्वज्ञो भगवानेवेति परमाद्भुतमहिमप्रकाशनं स्पष्टीकृतमिति ॥ २३ ॥

## संस्कृतपद्यानुवाद:

धनुर्धरं वीक्ष्य पुरः प्रदग्धं पुष्पायुधं तुच्छतृणोपमानम्।
देहार्द्धसंयोजनकारणाच्चेदवैति देवी (गौरी) त्रिपुरान्तक त्वाम्॥

स्त्रीलम्पटं स्वीयवशंवदं वा स्वकीयसौन्दर्यमिवोद्गिरन्ती।
तर्हीश ! मुग्धा बत सम्भवन्ति स्त्रियो विदग्धा अपि निश्चयेन ॥ २३ ॥

## भाषाटीका

पूर्व कथित श्लोक में कामुक प्रजापति के शासन की बात कही गई। इससे एक शंका यह होती है कि महादेवजी ने दूसरे को तो अपराध देखकर दण्ड दिया, पर स्वयं तो पार्वती देवी को अपने आधे अंग में लिए रहते हैं, अतएव वे भी तो कामुक हैं ! इस सन्देह की निवृत्ति इसी श्लोक में करते हैं। (पुरमथन) हे त्रिपुरासुरदाहक ! इस विशेषण का भाव यह है कि अकेले काम को कौन कहे, आपने तो तीन पूरे-पूरे पुरों (नगरों) को ही जलाकर भस्म कर डाला है। यह बहुत ही योग्य विशेषण है। (स्त्रलावण्याशंसाधृतधनुषम्) अपनी लुनाई की आशा से अर्थात् पार्वती देवी की सुन्दरता के भरोसे धारण किया है धनुष जिसने, ऐसे (पुष्पायुधम्) फूल ही हैं आयुध जिसके, अर्थात् कामदेव को (अह्नाय) झट-पट, उसी घड़ी (पुरः) अपने सामने तृणवत्) सूखे हुए तिनकों के समान (प्लुष्टम्) जलकर राख हुआ। (दृष्ट्वा अपि) देखकर भी (देवी) स्वयं भगवती पार्वतीजी (यमनिरतदेहार्द्धघटनात्) यम-नियम-आसन इत्यादि में तत्पर रहने वाले शरीर में आधा मिला लेने से (त्वाम्) आप ऐसे परम जितेन्द्रिय पुरुष को (यदि) जो कि (स्त्रैणम्) स्त्रीभक्त, अथवा स्त्री में आसक्त (अवैति) समझती हैं, तो (अद्धा) ठीक ही है। (वरद) हे पार्वतीजी के बड़े कठोर तप को देखकर अपना आधा शरीर दे देने वाले ! (बत) बड़े खेद की बात है कि (युवतयः) युवती लोग (मुग्धाः) मुख्य तत्त्व को नहीं समझतीं, अतः मूढ़ ही होती हैं।

भाव यह है कि चाहे पार्वती देवी ने त्रिपुरासुर का दाह न देखा हो, पर कामदेव को, जिसने उन्हीं के भरोसे आपको जीत लेने की इच्छा से धनुष उठाया था, अपने ही सामने जल भुनकर राख हुआ देखकर भी अटल समाधि लगानेवाले अपने आधे शरीर के दे डालने से यदि आपको स्त्रीभक्त समझती हैं, तो यह बड़े खेद की बात है। तरुणीलोग मूढ़ रहती हैं। चेतनास्वरूपा भगवती का मायारूपा होने ही से मुग्धा होना सिद्ध है। यथा—

"सत्य कहहिं कवि नारि सुभाऊ, सब विधि अगम अगाध दुराऊ।
निज प्रतिबिंब मुकुर गहि जाई, जानि न जाई नारि गति भाई॥ (तु० रा०)

यों ही पार्वतीजी को आधा शरीर दे डालने की बात भी दूसरे प्रकार से रामायण में कही गई है, जैसे कि—

"हरखे हेतु हेरि हर हीको, किय भूषन तिय-भूषन तीको।" (तु० रा०)

किंवा—

"अजा अनादि शक्ति अविनाशिनि, सदा संभु अरधंगनिवासिनि ॥" (तु० रा०) ॥२३॥

## भाषापद्यानुवाद

जासु लुनाई आस वस, परम धनुर्धर मार।
देखत देवी सामुँहे, तृन-सम भो जरि छार॥
अर्ध देह के घटन (दान) ते, स्त्रीजित समुझहि तोंहि।
अहह ! जोगिवर ! वरद ! ध्रुव, जुबती मुगधा होंहि ॥२३॥

## भाषाबिम्ब

स्वसौंदर्जें भाषी धनुधर पुष्पायुध सज्यो,
भयो छारै देखी तृन-सरिस आगे मदन को।
भवानी जी स्त्रीजित् अरध-तनु पाके समुझती,
प्रभो ! भोली भाली निपट मति होती जुवतिकी ॥२३॥

अथ स्वयममङ्गलशीलतया क्रीडन्नपि भक्तानां मङ्गलमेव ददासि, स्वयमङ्गलशीलानामपि भक्तानां त्वमेव मङ्गलमसीति च वदन् शङ्करनारायणो स्तौति—

**श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा-**
**श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः।**
**अमङ्गल्यं शीलं तव भवतु नामैवमखिलं**
**तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥२४॥**

## मधुसूदनी

श्मशानेति—हे स्मरहर, हे वरद, तवाखिलमपि शीलं सर्वमपि चरितमेवंप्रकारेणामङ्गल्यं मङ्गलविपरीतं भवतु नाम। किं नस्तेन निरूपितेनेत्यर्थः, तथापि

स्वयममङ्गलशीलोऽपि स्मर्तॄणां तव स्मरणकर्तॄणां त्वं परमं मङ्गलमेवासि निरतिशयं कल्याणमेव भवसि, तेनामङ्गलशीलोऽयं रुद्रो न मङ्गलकामैः सेवनीय इति भ्रमं परिहृत्य मनोवाक्कायप्रणिधानैः सर्वदा सर्वैः सेवनीयोऽसीत्यर्थः। एवंपदसूचितम-मङ्गल्यं शीलमेव दर्शयति। श्मशानेष्वित्यादि। श्मशानेषु शवशयनेष्वासमन्तात्केलिः, पिशाचाः प्रेताः सहायाः, चिताभस्म शवदाहरथं भस्माङ्गरागसाधनम्, नृकरोटी मनुष्यशिरोस्थिसमूहः स्रङ्माला। अपि शब्दादन्यदप्यार्द्रचर्मादि।

हरिपक्षे तु—हे वरद, तव स्मर्तॄणामङ्गल्यं शीलं भवतु नाम; तथापि तेषां त्वमेव परमं मङ्गलमसीत्यर्थः।

तथा च गीतासु—

"अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः" (गीता ९।३०) इति।

अथवा तव नामस्मर्तॄणामिति योज्यम्। नाममात्रं स्मरतां परमं मङ्गलमसि त्वां स्मरतां तु किमु वाच्यमित्यर्थः। कीदृशं नाम? अखिलं न खिलं फलरहितमखिलं सर्वदा सर्वत्र सफलमित्यर्थः। अत्यन्तपापित्वेन प्रसिद्धानामजामिलादीनामपि त्वन्नाममात्रस्य पुत्रनामत्वेन मरणव्यथया शिथिलकरणत्वेन च मन्दमुच्चारणेऽपि सर्वपापक्षयद्वारा परमपुरुषार्थप्राप्तिश्रवणात्। अमङ्गल्यं शीलमेव दर्शयति। श्मशाने-ष्वित्यादिरूपकेण। अत्यन्ततिरस्कृतिवाच्यो ध्वनिरयं लक्षणामूलः। शवशयनतुल्येषु सर्वदा रोदनप्रधानगृहेष्वा ईषत् क्रीडा, अल्पकालं वैषयिकतुच्छसुखप्राप्तिरित्यर्थः। तथा च स्मरहरपिशाचाः सहचराः स्मरणं स्मरः शास्त्रीयो विवेकस्तं हरन्तीति स्मरहराः पिशाचतुल्याः, पुत्रभार्यादयः पिशाचाः, स्मरहराश्च ते पिशाचाश्च स्मरहर-पिशाचाः। यथा पिशाचाः स्वावेशेन ज्ञानलोपं कृत्वा पुरुषमनर्थे योजयन्ति, तथा पुत्रभार्यादयोऽपि। तादृशाश्च वस्तुगत्या वैरिणोऽपि सहैव चरन्ति, न क्षणमपि त्यजन्तीति सहचराः। तथा चिताभस्मतुल्य आलेपः। देहस्य विण्मूत्रपूयादिपूर्णत्वे-नातिजुगुप्सितत्वात्तदालेपनस्याप्यतिजुगुप्सितत्वम्। तथा मनुष्यशिरोस्थिसमूहतुल्या माला पिशाचतुल्यं भार्यादिविनोदहेतुत्वात्। अपिशब्दादन्यदपि सर्वं चरित्रं विषय-सङ्गिनाममङ्गलमेव। एतादृशा अपि चेत्त्वां त्वन्नाम वा स्मरन्ति, तदा त्वमेव तेषां मङ्गल्यरूपेणाविर्भवसीत्यहोऽतिभक्तवात्सल्यमित्यर्थः। हरपक्षेप्येवं योजनीयम् ॥२४॥

## नारायणी

(स्मरहर!) हे कामनाशक! (श्मशानेषु) शवदहनस्थलेषु (आ क्रीडा) समन्ताद्विहरणम्, तथा (पिशाचाः) भूतवेतालदयः (सहचराः) सहचारिणः सहाया वा, (चिताभस्म) मृतदेहदाहार्थनिचितदग्धकाष्ठक्षारं 'चितं छन्ने त्रिषु चिता चित्यायां संहतौ

स्त्रियाम् ।' (आलेपः) समन्ताद्विलेपनमङ्गराग इत्यर्थः । अथ च (नृकरोटीपरिकरः) नृणां मनुष्याणां करोट्यः शिरोऽस्थीनि—"शिरोऽस्थीनि करोटिः स्त्री" इत्यमरः । गौरादित्वान् ङीष् । तासां परिकरः समूहः, "भवेत्परिकरो व्राते" इति विश्वप्रकाशः । अर्थान्नरकपालवृन्दम् (अपि स्रक्) माला (एवम्) अनेन प्रकारेण (तव) भवतः (अखिलम्) समस्तं (शीलम्) स्वभावः "शीलं स्वभावे सद्वृत्ते" (अ० को० ३।३।२०१) इत्यमरः । (अमङ्गल्यम्) कल्याणरहितम् अभव्यमिति यावत् । "तत्र साधुः" (अष्टा० ४।४।९८) इति यत् प्रत्ययः । (भवतु) तिष्ठतु; (तथापि) हेतुनिर्देशसूचनम् । हे (वरद !) ईप्सितकामना-पूरक ! (नाम) तवाभिधानमपि अथवा नामेति सम्बुद्धिसूचकं (स्मर्तॄणाम्) चिन्तकानां (परमम्) सर्वोत्कृष्टं (मङ्गलम्) मङ्गलस्वरूपं भद्रं वा (असि) भवसि । अत्र स्वयममङ्गल-मयस्वरूपेण विहरन्नपि स्वचिन्तकेभ्यो भवान् परमं मङ्गलं ददातीति महद्भक्तवात्सल्यं विशदीकृत्य श्मशानाद्युपकरणवर्णनया च महामहिमा प्रदर्शित इति ।

यथा चोक्तं शिवपुराणस्य ज्ञानसंहितायाश्चतुर्दशाध्याये—

"यद्यप्यमङ्गलानीह सेवते शङ्करः सदा ।
तथापि मङ्गलं तस्य स्मरणादेव जायते ॥५६॥

शिवेति मङ्गलं नाम मुखे यस्य निरन्तरम् ।
तस्यैव दर्शनादन्ये पवित्राः सन्ति नित्यशः ॥५७॥" ॥२४॥

## संस्कृतपद्यानुवादः

प्रभो श्मशानेषु सदा निवासः प्रेतैः पिशाचैश्च समं विहारः ।
तथा चिताभस्मविलेपनं ते विभूषणं मानवमुण्डमाला ॥
एवंविधो भवतु यद्यपि ते स्वभावो नित्यं समस्तशुभकर्मविवर्जितो वा ।
शम्भो तथापि नितरां निजचिन्तकानामुत्कृष्टमङ्गलमयोऽसि शिवस्वरूपः ॥२४॥

## भाषाटीका

(स्मरहर !) हे कामनाशक ! (इससे पूर्वश्लोक में कामदेव के दहन की चर्चा होने से यहाँ पर यह सम्बोधन ही उचित रीति से प्रयोग किया गया है) (श्मशानेषु आक्रीडा) मरघट वा मसानों पर चारों ओर खेलवाड़ करना, तथा (पिशाचाः सहचराः) भूत-पिशाचों को अपना सहचर (साथी) बनाना । एवं (चिताभस्मालेपः) चिता की राख को अपने शरीर में लेपन करना । और फिर (अपि नृकरोटी स्रक्) मनुष्यों के मुंड (खोपड़ी) की ही माला भी पहिनना-(परिकरः) आपकी यही पूँजी अथवा शृंगार की सामग्री है । (एवं, इस प्रकार से (तव) आपका (अखिलं शीलम्) समूचा स्वभाव (सारा बाना) (अमङ्गल्यम्) मंगल से रहित भवतु) भले ही हो (तथापि) तो भी (नामस्मर्तॄणाम्) केवल नाम का ही स्मरण करनेवालों के लिये (परमम्) बहुत भारी (मङ्गलमसि) मङ्गलस्वरूप आप होते हैं ।

भाव यह कि आप मरघटों पर विहार, भूत प्रेतों का संग, चिता की राख का अंगराग और मनुष्यों के मुंड की माला इत्यादि समस्त अशुभ पदार्थों से ही सजे रहते हैं। पर जो लोग केवल आपका नाम स्मरण करते हैं, उनको मंगल ही देते हैं। आपकी यह अद्‌भुत महिमा है। यहाँ पर आप स्मरहर हैं और आपका अमंगल शील है, यह कहकर फिर स्मरण करनेवालों के आप ही परम मंगलदाता हैं, ऐसी उक्ति के कारण विरोधालंकार के सहित विचित्रालंकार भी अर्थान्तरन्यास में मिला हुआ है। नाम के स्मरण का फल समस्त पुराणादिकों में सविस्तर वर्णित है और तुलसीकृत रामायण में भी नाममहिमा का एक प्रकरण ही है। अतएव उसे वहीं देख लेना चाहिए।

एक अन्य ग्रंथ भी "नामायन" नाम का छपा है, जिसमें केवल नामही की महिमा का सङ्ग्रह किया गया है। फिर भी इतना कह देना आवश्यक है कि—

"भव अंग भूति मसान की, सुमिरत सुहावनि पावनी।" (तु रा०)

और भी—

"भाय कुभाय अनख आलसहू, नाम जपत मंगल दिसि दसहू।" (तु० रा०) ॥२४॥

### भाषापद्यानुवाद

खेलहु आप मसान पै, साथी भूत पिसाच।
लेपि चिता राखी धरहु मुंडमाल करि नाच॥
जदपि अमंगल सील तुम, पै सुमिरै जो कोय।
ताहि सुमंगल गंजत (देत) हौ, वरदायक शिव होय॥२४॥

### भाषाबिम्ब

मसानों पै लीला सहचर पिसाचै संग करो,
चिता-राखी लेपो नर-सिरनि माला पहिरतो।
विहारे कर्मों (सीलों) में जदपि नहि एको सुभ अहै,
तबौ नामै लेके सुमिरत जनै मंगल लहैं॥२४॥

●

अतीतः पन्थानमित्यत्र हि पदार्थत्रयमुपन्यस्तम्, कतिविधगुण इत्यनेन सगुणमैश्वर्यम्, कस्य विषय इत्यनेनाद्वितीयं ब्रह्मस्वरूपम्, पदे त्वर्वाचीन इत्यनेन लीलाविग्रहविहारादि। तत्र अजन्मानो लोका इत्यत्र सामान्यतः परमेश्वरसद्भावं दृढीकृत्य, तवैश्वर्यं यत्नाद्यदुपरीत्यादिना सगुणमैश्वर्यं लीलाविग्रहविहारादिकं च वर्णितम्। सम्प्रत्यद्वितीयं ब्रह्मस्वरूपं वक्तव्यमवशिष्यते। तदनभिधाने पूर्वोक्तस्य सर्वस्यापि तुषकण्डनवत्त्वप्रसङ्गान्निर्गुणब्रह्मस्वरूपस्यैव सर्वश्रुतिस्मृतितात्पर्यविषयत्वेन सत्यत्वात्, सर्वस्यापि प्रपञ्चस्य स्वप्नवन्मिथ्यात्वात्। तस्मान्निर्गुणब्रह्मनिरूपणायोत्तर-

ग्रन्थारम्भः। तत्र पूर्वश्लोके त्वं परमं मङ्गलमसीत्युक्तम्। तत्रैवमाशङ्क्यते। मङ्गलं हि सुखम्। न चेश्वरस्य सुखस्वरूपत्वं सम्भवति, सुखस्य जन्यत्वाद्गुणत्वाच्च, ईश्वरस्य नित्यत्वादद्रव्यत्वाच्च। नित्यज्ञानेच्छाप्रयत्नवानीश्वरो न सुखरूपो नापि सुखाश्रय इति तार्किकाः। क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरश्चितिरूपो न सुखरूप इति पातञ्जलाः। तदेवं नाद्वितीय ईश्वरो नापि सुखस्वरूप इत्याशङ्क्य तस्याद्वितीय-परमानन्दरूपत्वे विद्वदनुभवरूपं प्रत्यक्षं प्रमाणं वदन् स्तौति—

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं ह्रद इव निमज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान्॥२५॥

## मधुसूदनी

मन इति। हे वरद, यत्किमपि तत्त्वं इदन्तया वक्तुमशक्यं सत्यज्ञानानन्तानन्दात्मकं वस्त्वालोक्य वेदान्तवाक्यजन्ययाऽखण्डाकारवृत्त्याऽपरोक्षीकृत्य यमिनः शमादिसाधनसंपन्नाः परमहंसा अन्तराह्लादं बाह्यसुखविलक्षणं निरतिशयसुखं दधति, पूर्वं विद्यमानमेव धारयन्ति, न तूत्पादयन्ति, नित्यत्वात्, तत्तत्त्वं किल भवानिति। किलेति प्रसिद्धौ। सत्यज्ञानानन्तानन्दात्मकत्वेनैव श्रुतिषु प्रसिद्धो भवान्, न तार्किकाद्युक्तप्रकारः। अतस्त्वं कथं परमं मंगलं न भवसि इति वाक्यशेषः। तत्राह्लादस्य निरतिशयत्वं दर्शयितुं दृष्टान्तमाह। अमृतमये ह्रदे निमज्ज्येव यस्य खलु लेशमात्रमपि स्पृष्ट्वा सकलसंतापोपशमेन सुखिनो भवन्ति, किमुत वक्तव्यं तस्य निमज्जनरूपसर्वाङ्गसंयोगेनेति कारणातिशयात्कार्यस्याप्यतिशयः सूचितः। यद्यपि ब्रह्मानन्दस्य सर्वातिशयिनो न कोऽपि दृष्टान्तोऽस्ति, तथापीषत्साम्येनापि लोकानां बुद्धिदार्ढ्यायैवमुक्तम्।

एतादृशब्रह्मानन्दानुभवस्यासाधारणं कारणमाह मन इत्यादिना। चित्ते—हृदयाम्बुजे मनः संकल्पविकल्पात्मकमवधाय निरुध्य। वृत्तिशून्यं कृत्वेत्यर्थः। कीदृशं मनः? प्रत्यक् चक्षुरादीन्द्रियद्वारा बहिर्विषयप्रवृत्तिप्रतिकूलतया अन्तर्मुखतयैवाञ्चतीति प्रत्यक्। कीदृशा यमिनः? सविधं सप्रकारं यथा स्यात्तथा आत्तमरुतः, शास्त्रोपदिष्टमार्गेणैव कृतप्रणायामा इत्यर्थः। अत्र सविधमित्यनेन यमनियमादिसाधनानि सूच्यन्ते। आत्तमरुत इत्यनेन चतुर्थः कुम्भकः। विषयेभ्य इन्द्रियाणां निवर्तनरूपः प्रत्याहारः प्रत्यक्पदेन सूचितः। चित्त इत्यनेन हृदयाम्बुजाख्यदेशसम्बन्धात्समूहावलम्बनाख्या[1] धारणोक्ता। अवधायेत्यनेन ध्यानसमाधी।

---

१. 'सम्बन्धद्वारेण धारणोक्ता' इति पाठः।

तदुक्तं भगवता पतञ्जलिना—'देशबन्धश्चित्तस्य धारणा' (यो० सू० ३।१), 'तत्र प्रत्ययैकतानता ध्यानम्' (यो० सू० ३।२), 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (यो० सू० ३।३) इति। चित्तस्य वशीकरणार्थं मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धयाज्ञाख्यचक्राणामन्यतमेदेशेऽवस्थापनं धारणेत्युच्यते। प्रत्ययस्य एकतानता (एकविषयप्रवणता)[1]। विषयः प्रवाहः। स च द्विविधः। विच्छिद्य विच्छिद्य जायमानः संततश्चेति। तावुभौ क्रमेण ध्यानसमाधी भवतः। एतेनाष्टाङ्गयोगपरिपाको ब्रह्मसाक्षात्कारहेतुर्निदिध्यासनरूपत्वेनोक्तः।

एवं ब्रह्मानन्दानुभवस्य कारणमुक्त्वा कार्यमाह। प्रहृष्यद्रोमाणः प्रकर्षेण पुलकिताङ्गाः। तथा प्रमदसलिलोत्सङ्गितदृशः हर्षाश्रुपूर्णनेत्राः। न तदुभयं च यमिनामानन्दानुभवानुमाने लिङ्गमुक्तम्। अत्र प्रशब्देनोत्सङ्गितशब्देन च लौकिकसुखापेक्षया अतिशयविशेषो व्यज्यते। यस्य च तत्त्वस्यालोकनमात्रेणाप्यन्ये परमाह्लादं बिभ्रति। तत्स्वयं परमाह्लादरूपं भवतीति किमु वक्तव्यमित्युक्तम्। "विज्ञानमानन्दं ब्रह्म" (बृ० उ० ३।९।२८), "आनन्दो ब्रह्मेति व्यजानात्" (तै० उ० ३।६।१), "एष एव परम आनन्दः" (उक्तमुपनिषदि), "यो वै भूमा तत्सुखम्" ( छा० उ० ७।२३।१ ), "को ह्येवान्यत् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" (तै० उ० ७।१) इत्याद्याः श्रुतयश्चास्मिन्नर्थे प्रमाणत्वेन द्रष्टव्याः।

हरिपक्षेऽप्येवम् ॥ २५ ॥

## नारायणी

हे प्रभो ! (प्रत्यक्) चक्षुश्श्रोत्रादीन्द्रियद्वारा प्रत्यञ्चतीति प्रत्यक्, (मनः) सङ्कल्पविकल्पात्मकं प्रधानेन्द्रियम्, (चित्ते) हृदयाकाशे, (सविधम्) सप्रकारं यथा स्यात्तथा, (अवधाय) संस्थाप्य, निरुद्ध्येति यावत्। (आत्तमरुतः) गृहीतवायवः, योगशास्त्रोक्तविधिना कृतप्राणायामा इत्यर्थः। अत एव (प्रहृष्यद्रोमाणः) प्रकर्षेण पुलकिततनूरुहाः। तथा च (प्रमदसलिलोत्सङ्गितदृशः) हर्षाश्रुपूरितलोचनाः, अर्थात् एतादृशीं दशामापन्नाः, (यमिनः) यम-नियम-शम-दमान्विता योगिनः, (यत्) इयत्तया वक्तुमशक्यं सच्चिदानन्दमयं (किमपि) अविज्ञातविषयं वस्तु, (अन्तः) अन्तःकरणमध्ये, स्वीयान्तरात्मनि इति वा, (आलोक्य) ज्ञानचक्षुषा समीक्ष्य, (अमृतमये) परानन्दपूर्णे, अथवा जलप्रपूरिते—"पयः कीलालममृतम्" (अ० को० १।१०।३) इत्यमरः। (ह्रदे) अगाधजलाशये, (निमज्ज्येव) अवगाहनं कृत्वेव, (आह्लादम्) अनिर्वचनीयं सुखम्, (दधति) धारयन्ति, (तत्) तदेव प्रसिद्धम्, (तत्त्वं) परमात्मा—"तत्त्वं परात्मनि। वाद्यभेदे स्वरूपे च" इति हेमचन्द्रः। (भवान्) त्वमेव, (किल) इति निश्चयेन। अस्तीति

---

१. 'एकतानतैकविषयः' इति पाठः।

शेषः । अत्र ध्यानधारणासमाधिनिष्ठैर्योगिभिर्यत्तत्त्वं हृदयाकाशेऽवलोक्यते, तत्स्वरूप एव भवानिति परमात्मरूपवर्णनपूर्णं परममहिमानं विशदीकुर्वता कविना स्वस्यापि योगाचार्यत्वं स्फुटीकृतमिति ज्ञेयम् ॥ २५ ॥

## संस्कृतपद्यानुवादः

यत्नान्निवृत्ते विषयेभ्य आत्मनि
चित्तं समाधाय विधानपूर्वकम् ।
रोमाञ्चिता एव गृहीतवायवो
हर्षाश्रुसम्पूरितमीलितेक्षणाः ॥
यद्योगिनो वीक्ष्य सुधामये ह्रदे
सुखं निमज्ज्येव भवन्ति मोदिताः ।
तत्सच्चिदानन्दघनस्वरूपकं
तत्त्वं किमप्यस्ति भवान् किल प्रभो ! ॥२५॥

## भाषाटीका

हे प्रभो ! (प्रत्यक् मनः) नेत्रादिक इन्द्रियों से, बाह्यविषयों की प्रवृत्ति की प्रतिकूलता से भीतर की ओर खींचने वाला, संकल्प-विकल्पात्मक इन्द्रियों में प्रधान मन को (चित्ते) हृदयाकाश में (सविधम्) विधिपूर्वक (अवधाय) लगाकर अथवा रोककर (आत्तमरुतः) योग-शास्त्र की रीति से श्वास को रोक रखने वाले, अर्थात् कुम्भक नामक प्राणायाम की विधि से श्वास को रोके रहने वाले, (प्रहृष्यद्रोमाणः) इसी कारण से विशेष रोमाञ्चित हुए और (प्रमदसलिलोत्सङ्गितदृशः) बड़े हर्ष के मारे अश्रुजल से परिपूर्ण हैं नेत्र जिनके ऐसे (यमिनः) यम-नियम-शम-दम-इत्यादि से युक्त योगी लोग, (यत्) जिस, अर्थात् इतना ही भर कहने को अशक्य सच्चिदानन्दमय (किमपि) कोई भी अविज्ञातविषय वस्तु, (अन्तः) अपने अन्तःकरण में अथवा अपने अन्तरात्मा में (आलोक्य) ज्ञानचक्षु से देखकर, (अमृतमये) परमानन्द से पूर्ण, किंवा अमृतरूपी जलसे भरे हुए (ह्रदे) अगाध जलाशय में, (निमज्य इव) मानों गोता लकाकर, डूबकर, (आह्लादम्) अनिर्वाच्य सुख को, (दधति) धारण करते अथवा प्राप्त होते हैं, (तत् तत्त्वं) वह प्रसिद्ध तत्त्व अर्थात् परमात्मा (भवान्) आप ही हैं, (किल) निश्चय करके ।

अभिप्राय यह है कि बाह्यविषयों से मन को मोड़कर और विधिपूर्वक अपने हृदय-रूपी आकाश में बैठाकर योगी लोग जिस अकथनीय वस्तु को देखकर प्राणायाम के द्वारा श्वासवायु को रोके हुए परमानन्द से नेत्रों में हर्षाश्रु को भरे पुलकित होते हैं, जैसे कोई उष्णता से तापित होकर निर्मल जल से परिपूर्ण अगाध सरोवर में गोते लगाकर बड़ा आह्लादित होता है, वही परमतत्त्व आप हैं । अर्थात् योगी लोग जो अटल समाधि लगाकर परमानन्द का अनुभव करते हैं, वह आपही हैं । इस कथन से यह सिद्ध होता है कि आपको कोई भी किसी प्रकार से बता नहीं सकता; क्योंकि आप ज्ञानगम्य हैं, अतएव वाणी द्वारा आपका प्रतिपादन करना सर्वथा असम्भव है, जैसा कि "अतीतः पन्थानं (२)" में कह आए हैं ।

इस श्लोक में तीन बातें कही गई हैं। अर्थात् "कतिविधगुणः" इस वाक्य से सगुण ऐश्वर्य जनाया है। "कस्य विषयः" इस पद से अद्वितीय ब्रह्मस्वरूप का प्रतिपादन किया है और "पदे त्ववर्चीने" इस कथन से लीलाविग्रह तथा विहारादिक का बोधन किया है। इनमें पहले "अजन्मानो लोकाः" (६)—यहाँ पर सामान्यरूप से परमेश्वर की सत्ता को दृढ़ करके "महोक्षः खट्वाङ्गम्" (८) तथा "तवैश्वर्यं यत्नाद्यदुपरि" (१०) इत्यादि पद्यों से सगुणरूप की महिमा और लीलाशरीर विहारादिकों का वर्णन किया है। अब अद्वितीय ब्रह्मस्वरूप का वर्णन करना अवशिष्ट (बाकी) रह जाता है, अतएव यहाँ पर मुख्य रूप से योगशास्त्रानुसारी निर्गुण ब्रह्म का निरूपण आरम्भ करते हैं। क्योंकि निर्गुण ब्रह्म का निरूपण किए बिना पहले का कहा हुआ सब कुछ भूसी कूटने के समान व्यर्थ ही हुआ जाता है।

कारण यह कि समस्त वेद और शास्त्रों का तात्पर्य एकमात्र निर्गुण ब्रह्मस्वरूप के ही निरूपण करने में सत्य विषय होता है। क्योंकि जितने प्रपञ्च हैं, वे सब स्वप्न के समान मिथ्या हैं। इसीलिये यहाँ पर निर्गुण ब्रह्म का निरूपण कर देना आवश्यक समझकर ग्रंथकार उत्तरग्रंथ का आरम्भ करते हैं। यहाँ पर यह शंका होती है कि पूर्वश्लोक में वह आए हैं कि आप ही परम मंगलस्वरूप हैं। मंगल का अर्थ सुख है। इसलिये ईश्वर सुख का स्वरूप नहीं हो सकता। क्योंकि सुख तो जन्यवस्तु है, अर्थात् उत्पन्न होता है और नष्ट होता है, फिर सुख में गुणत्व भी वर्तमान रहता है, और ईश्वर नित्य है, फिर वह कोई द्रव्य भी नहीं। नित्यज्ञान-इच्छा और प्रयत्नवाला ईश्वर सुखस्वरूप नहीं हैं और न सुखों का आश्रय ही है। यह तार्किक लोगों का मत है।

"क्लेश-कर्म-विपाक-आशय इत्यादि से दूर रहने वाला चैतन्यमय पुरुषविशेष ही ईश्वर है, जो कि सुखरूप नहीं हो सकता"—यह पातञ्जल मत है। अतएव अद्वैत ईश्वर कदापि सुखमय नहीं हो सकता। इसी शंका का समाधान करते हुए ईश्वर के अद्वितीयपरमानन्दरूपता में विद्वानों के अनुभव-सिद्ध प्रत्यक्ष प्रमाण को दिखलाया है।

भाव यह कि यदि योगी लोगों को कोई आनन्द ही नहीं मिलता तो, इतनी बड़ी-बड़ी समाधि लगाकर वे लोग कैसे पड़े रहते? क्योंकि आनन्द का लक्षण नेत्रों में अश्रु का भर जाना तथा शरीर का पुलकित होना स्पष्ट है। इससे उन योगियों को जो परम आनन्द प्राप्त होता है, वही आप हैं। अतः ब्रह्म का सत् चित्-आनन्दमय होना प्रत्यक्ष सिद्ध है। जैसा कि 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादि श्रुतिवाक्यों से प्रमाणित है। अतएव निर्गुण ब्रह्म ही आनन्दमय है, यह बात सर्वथा सिद्ध है। क्योंकि जिसके लिए प्रत्यक्ष प्रमाण मिल रहा है, उस पर किसी प्रकार का तर्क नहीं चल सकता।

रामायण में भी नारद मुनि के व्यामोह प्रकरण में यों कहा गया है -

सुमिरत हरिहि स्वांस गति बाँधी,
सहज विमल मन लागि समाधी।

और योगियों को तत्त्व दिखलाई पड़ता है, उसका भी आभास सीता स्वयंवर में झलकाया है। यथा—

जोगिन परम तत्त्वमय भासा,
सान्त सुद्ध मन सहज प्रकासा। (तु० रा०) ॥ २५ ॥

### भाषापद्यानुवाद

हृदय-कमल गँह राखि मन, प्रान वायु को खींचि।
पुलकित तनु हरषाश्रु ते, नयन-कमल युग सींचि॥
बूड़ि अमृतमय ताल में, पावहिं जिमि सुखरासि।
लहहिं जोगिगन तत्त्व जो, सो तुम अन्तस-भासि॥ २५॥

### भाषाबिम्ब

लगा के आत्मा में सविध मनको रोकि पवनै,
भरे रोमांचों से हरष-जल पूरे नयन हैं।
लखैं योगी जाको अमृत सरमें स्नान करिधौं,
लहैं जो आनन्दै अकथ शिव! सो तत्त्व तुम हौ॥ २५॥

एवमद्वितीये ब्रह्मणि परमानन्दरूपे सर्वात्मके विद्वदनुभवरूपं प्रत्यक्षं प्रमाणमुक्तम्। अधुना तस्यैवाद्वितीयत्वं तर्केणापि साधयन् स्तौति—

**त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-**
**स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।**
**परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं**
**न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि॥२६॥**

### मधुसूदनी

**त्वमर्क** इति—हे वरद, परिणताः परिपक्वबुद्धयस्त्वयि विषये एवं परिच्छिन्नामेवंप्रकारेण परिच्छिन्नत्वेन, त्वां प्रतिपादयन्तीं गिरं वाचं बिभ्रतु धारयन्तु नाम। केन रूपेण परिच्छिन्नामित्यत आह—त्वमर्क इत्यादिना। अत्र सर्वत्र त्वंशब्दो वाक्यालङ्कारार्थः। उशब्दोऽवधारणे त्वमित्यनेन सम्बध्यते। चशब्दः समुच्चये। इतिशब्दः समाप्तौ। अर्कादयः प्रसिद्धाः। आत्मा क्षेत्रज्ञो यजमानरूपः। एते चाष्टौ श्रीरुद्रमूर्तित्वेनागमप्रसिद्धा वक्ष्यमाणभवादिनामाष्टकसहिताश्चतुर्थ्यन्ता नमोऽन्ता अष्टौ मन्त्रा भवन्ति, ते गुरूपदेशेन ज्ञातव्याः।

एतदष्टमूर्तित्वं चान्यत्राप्युक्तम्—'क्षितिहुतवहक्षेत्रज्ञाम्भः प्रभञ्जनचन्द्रमस्तपनवियदादित्याष्टौ मूर्तीनमो भवबिभ्रते' इति। तेन सर्वात्मकमपि त्वामर्काद्यष्टमात्रमूर्तिं वदन्तीत्यर्थः। अत्रापरिणता इत्यस्मिन्नर्थे परिणता इति सोपहासं बिभ्रत्विति लोटाननुमतावप्यनुमतिप्रकाशनात्। तेन सर्वथानुचितमेवैतदित्यर्थः। तर्हि किमुचितं ज्ञात्वा त्वयेदमनुचितमुच्यत इत्यत आह—नेत्यादिना। हि यस्माद् इह जगति तत्तत्त्वं

वस्तु वय न जानीमः, यद्वस्तु त्वं न भवसि । त्वद्भिन्नमिति यावत् । अत्र स्वस्य प्रमाण-कौशलेनोत्कर्षं ख्यापयितुं विद्म इति बहुवचनम् । वयं तु त्वदभिन्नत्वेनैव युक्त्या सर्वं जानीम इत्यर्थः । एवं च तव सर्वात्मकत्वादर्कादिविशेषरूपाभिधानं व्यर्थमेव ।

तथा च श्रुतिः—'**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः**' (ऋ० सं० १।१६४।४६), '**एष उ ह्येव सर्वे देवाः**' (बृ० उ० १।४।६) इति च सर्वदेवभेदं वारयति । नहि सदतिरिक्तं किञ्चिदुपलभ्यते सद्रूपश्चात्मा त्वमेवेति तर्केणापि सिद्धमद्वैतम् । न च सर्वस्य ब्रह्मरूपत्वे घटादिज्ञानस्यापि ब्रह्मज्ञानस्वरूपत्वात्ततोऽपि मोक्षप्रसङ्ग इति वाच्यम्, अन्यानुपरक्त-चैतन्यभावस्यैव मोक्षहेतुत्वात् । घटाद्याकारज्ञानस्य चाविद्यापरिकल्पितान्यापरक्त-चैतन्यविषयत्वात् । अन्योपरक्तचैतन्यस्य च सद्रूपेण चक्षुरादिविषत्वेऽप्यन्यानुपरक्त-स्यैतस्य न वेदान्तवाक्यमात्रविषयत्वव्याघातः ।

ननु सर्वस्य सन्मात्रत्वेऽपि नाद्वैतसिद्धिः, भिन्नानामपि सत्ताजातियोगेन सदाकारबुद्धिविषयत्वसम्भवात्, अन्यथा द्रव्यगुणकर्मादिभेदव्यवहारोऽपि न स्यादिति चेत्, न, द्रव्यं सद्गुणः, सन्नित्यादिप्रतोतेर्द्रव्यत्वादिधर्मविशिष्टैकसन्मात्रविषयत्वमेव, न तु द्रव्यादिधर्मिषु भिन्नेषु सत्ताख्यधर्मविषयत्वम्, धर्मिकल्पनातो धर्मकल्पनाया लघु-त्वात् । एकस्मिन्नसति च सर्वाभिन्ने मायिकनानात्वप्रतीत्युपपत्तेः । द्वौ चन्द्रावित्यत्रेव न पारमार्थिकभेदकल्पनावकाशः ।

तथा चायं प्रयोगः । अयं द्रव्यगुणादिभेदव्यवहारः सर्वभेदानुगतजात्यात्म-कैकवस्तुमात्रावलम्बनः । भेदव्यवहारत्वाद्द्विचन्द्रभेदव्यवहारवदिति । तस्मान्नाचेतनं सचेतनं वा किञ्चिदपि परमात्मनो भिन्नमुपपद्यते । "**स एष इह प्रविष्टः**" (तै० उ० ६।३), "**अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि**" (छा० उ० ६।३।२) इत्यादि श्रुत्या प्रवेष्टुरविकृतस्यैव जीवरूपेण प्रवेशप्रतिपादनात् । तथा "**इदं सर्वं यदयमात्मा**" (बृ० उ० २।५।१) इत्यादिश्रुत्या ब्रह्मैकोद्भवत्वब्रह्मसामान्यब्रह्मैकप्रलय-त्वादिहेतुभिरूर्णनाभ्यादिदृष्टान्तेनाकाशादिप्रपञ्चस्य ब्रह्मात्मकत्वप्रतिपादनात् "**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्**" (बृ० उ० १।४।१७) इति च कण्ठत एवाद्वितीय-त्वोक्तेः । एवं च सदाकारप्रत्यक्षमभेदव्यवहारत्वलिङ्गं सार्वात्म्यश्रुत्यन्यथानुपपत्तिश्चेति प्रमाणत्रयमुक्तम् । विस्तरेण चात्र युक्तयो वेदान्तकल्पलतिकायामनुसन्धेयाः । तस्मान्न विद्म इत्यादिना साध्वेवोक्तमद्वितीयत्वम् ।

**हरिपक्षे तु**—अर्कादिशब्देन तत्तदवच्छिन्ना देवतात्मान उच्यन्ते । "**य एवासावा-दित्ये पुरुष एतदेवाहं ब्रह्मोपासे**" (बृ० उ० ३।९।१२) इत्यादिनाऽजातशत्रवे दृप्तबाला-किनोपदिष्टा बृहदारण्यके कौषीतकिब्राह्मणे च प्रसिद्धाः । परिच्छिन्नत्वादिदोषेणाब्रह्मत्वं चैषां तत्रैवाजातशत्रुणा प्रतिपादितम् । "**स होवाचाजातशत्रुरेतावन्नू३न इत्येतावद्-वृत्तिनैतावता तावद्विदितं भवति**" (बृह० उ०) इत्यादिना । अन्यत्सर्वं समानम् ॥२६॥

## नारायणी

हे विभो ! (त्वम् अर्कः) भवानेव सूर्यः, (त्वं सोमः) त्वमेव चन्द्रोऽसि, (त्वमसि पवनः) त्वमेव वायुरसि, (त्वं हुतवहः) त्वमेव अग्निरप्यसि, (त्वम् आपः) भवानेवजलम् (त्वं व्योम) आकाशमपि भवानेव, (त्वं उ धरणिः) उ—इति वितर्के, त्वमेव पृथिव्यसि, (आत्मा त्वं) त्वमेव परमात्मा, क्षेत्रज्ञो, यजमानरूपो वासि। (इति च) इतिपदं समाप्तौ, चकारः समुच्चये। (परिणताः) परिपक्वबुद्धयः, (त्वयि) भवतो विषये। एवं अनेन प्रकारेण (परिच्छिनाम्) इयत्ताकलितां (गिरम्) वाचं (बिभ्रतु) धारयन्तु, वदन्त्वित्यर्थः। अननुमतावपि—अनुमतिप्रकाशने लोट्। क्वचित् लट्लकारस्यापि प्रयोगो लभ्यते, तत्रापि न काचित्क्षतिरिति। वस्तुतस्तु सर्वथैतदनुचितमेवेति भावः। तर्हि त्वं किमुचितं वेत्सीत्याशङ्क्याह—(वयम्) अस्मत्समानबुद्धयोऽन्येऽपीतिबहुवचनम्। (तु) इति हेत्ववधारणे, (इह) विश्वस्मिन् (तत्) त्वद्भिन्नमन्यत् (तत्त्वम्) किञ्चिदपि वस्तु (न विद्मः) नैव जानीमः, (यत्) तत्त्वं (त्वम्) भवान् (न भवसि) नासि। परिपक्वबुद्धिमन्तस्तु त्वामष्टमूर्तिरूपेणैव स्तुवन्तु, परं वयं भवन्तं सर्वात्मकरूपेणैव विद्मः। अस्माकं मते त्वद्भिन्नमन्यत्किञ्चिदपि नास्तीति भावः स्पष्ट एव।

अष्टमूर्त्युल्लेखनञ्च रघुवंशटीकायां कृतं मल्लिनाथसूरिणा—"अवेहि मां किङ्करमष्टमूर्तेः" (र० वं० २।३५) इत्यत्र, तद्यथा—

"पृथिवी सलिलं तेजो वायुराकाशमेव च।
सूर्याचन्द्रमसौ सोम-याजी चेत्यष्टमूर्त्तयः॥" (इति यादवः)

अत्राष्टमूर्त्तिवर्णनप्रसङ्गेन भगवतः सर्वस्वरूपत्व-सर्वात्मकत्वादिविशिष्टगुणानां वर्णनयैव तत्तद्रूपगतमहामहिमसूचनयापि विशिष्टाद्वैतरूपतामापादितवन्त आचार्य्या इति। एवमेव स्कन्दपुराणे माहेश्वरखण्डारुणाचलमाहात्म्येऽप्युक्तं २४ अध्याये। यथा—

"खं वायुरनलो वारि भूः सूर्यशशिनौ पुमान्।
इति मन्मूर्त्तिभिर्विश्वं भासते सचराचरम्"॥

### संस्कृतपद्यानुवादः

त्वमेव सूर्य्योऽसि शशी त्वमेव त्वमेव वायुर्हुतभुक् त्वमेव।
त्वमेव पानीयमथासि भूमिरात्मा त्वमेवासि न कोऽपि चान्यः॥
एतामियत्ताकलितां गिरं त्वयि वदन्तु सर्वे परिपक्वबुद्धयः।
परन्न विद्मो वयमस्ति तत्क्वचित्तत्त्वं भवेत्त्वद्व्यतिरिक्तमत्र यत्॥२६॥

### भाषाटीका

हे भगवन्! (त्वम् अर्कः) आप ही सूर्य हैं, (त्वं सोमः) आप ही चन्द्रमा हैं, (त्वमसि पवनः) आपही वायु हैं, (त्वं हुतवहः) आपही अग्नि हैं, (त्वमापः) आपही जल हैं, (त्वं व्योम)

आप ही आकाश हैं. (त्वम् उ धरणिः) आप ही पृथिवी हैं (च त्वं आत्मा) और आप ही आत्मा अर्थात् क्षेत्रज्ञ, परमात्मा अथवा यजमानरूप हैं। (इति) यह अव्यय पद समाप्तिसूचक है, अर्थात् इतना ही मर। (परिणताः) पक्की बुद्धि वाले (त्वयि) आपके विषय में (एवम्) इस प्रकार (परिच्छिन्नाम्) संकुचित अथवा ढँपी हुई (गिरम्) वाणी को (बिभ्रतु) धारण करें, अर्थात् कहा करें। परन्तु (वयं तु) हम लोग तो (इह) इस चराचर संसार में (तत् तत्त्वम्) उस तत्त्व को (न विद्मः) नहीं जानते हैं (यत् त्वं न भवसि) जो तत्त्व आप नहीं हैं। भाव यह है कि जिनकी बुद्धि बड़ी पक्की है, वे लोग आपको अष्टमूर्ति रूप से कहते हैं। पर हम लोगों के ऐसे कच्ची बुद्धिवालों की समझ में तो आप से भिन्न कुछ दूसरा दीखता ही नहीं है। सब कुछ आप ही हैं, जैसा कि दुर्गासप्तशती में भी कहा है कि—

यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे सदा॥

अर्थात् कहीं पर भी जो कुछ सच्ची अथवा झूठी वस्तु है, उन सबकी शक्ति तुम्हीं हो, अत एव तुम्हारी स्तुति कैसे की जा सकती है? यही अभिप्राय यहाँ पर भी है कि हम लोगों की समझ में तो सब कुछ आप ही हैं, आपसे भिन्न तो कुछ हुई नहीं है।

करि विचार देखहु मन मांही. तुमते विलग कतहुँ कछु नांही॥

पूर्व श्लोक में विद्वानों के अनुभवसिद्ध प्रत्यक्ष प्रमाण से ब्रह्म की अद्वैतसिद्धि और परमानन्दरूपता प्रतिपादित की गई है। अत एव इस श्लोक में तर्क द्वारा भी उसी ब्रह्म की सर्वपरमानन्दरूपता प्रतिपादित की गई है। अत एव इस श्लोक में तर्क द्वारा भी उसी ब्रह्म की सर्वात्मकता और अद्वैतता सिद्ध की है। यहाँ पर यह शंका होती है कि यदि "सर्वं खल्विदं ब्रह्म" यह वेदवाक्य सही है तो फिर घड़ा-लोटा-छाता-कपड़ा-इत्यादि के ज्ञान हो जाने से भी ब्रह्मज्ञान हो जायगा और इस ब्रह्मज्ञान के हो जाने पर मुक्ति का भी पाना सिद्ध होना चाहिए। पर उसका समाधान यह है कि जब तक इन सब अचेतन अथवा सचेतन में तुमको भेद दीखता रहेगा, तब तक तुम निर्वाण पद के अधिकारी नहीं हो सकते। हाँ जब तुम्हारे हृदय से भेदबुद्धि निकल जायगी और तुमको—"सर्वं ब्रह्ममयं जगत्" दिखलाने लगेगा तो तुम घड़ा-कपड़ा उसे नहीं कहोगे, वरन् ब्रह्म ही समझने लगोगे। तब तुम केवल मुक्ति के अधिकारी ही नहीं, तुम जीवन्मुक्त हो जाओगे, बस॥२६॥

## भाषापद्यानुवाद

रवि ससि वायू अगिनि जल, धरनि आतमा व्योम।
अष्ट मूर्ति धरि तुमहि हो, व्यापक जग प्रति रोम॥
बुद्धिमन्त इमि कहत हैं, तुमको सबहि बुझाय।
मो जानत (हम जनै) अस तत्त्व नहिं, जो तुमसो विलगाय॥२६॥

## भाषाबिम्ब

तुम्ही सूर्जै सोमो पवन तुम ही आगि (अग्नि) तुम हो,
तुम्ही पानी भूमी गगन तुम आत्मा तुमहि हो।
यही भाषैं पक्के चतुरमतिवाले तुमहि को,
हमारे जाने में अस कछु नहीं जो तुम न हो॥२६॥

एवं प्रत्यक्षानुमानार्थापत्तिभिरद्वितीयत्वं परमेश्वरस्य सर्वात्मकत्वेन प्रसाध्य तदेवागमेनापि साधयन् स्तौति—अथवा क्रमेण पूर्वश्लोकद्वये त्वंपदार्थं तत्पदार्थं च परिशोध्यानेन श्लोकेनाखण्डं वाक्यार्थं वदन् स्तौति—

**त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-**
**नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।**
**तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः**
**समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२७॥**

## मधुसूदनी

त्रयीमिति—हे शरणद, आर्तभयप्रद, ओमितिपदं त्वां सर्वात्मानमद्वितीयं गृणाति अवयवशक्त्या समुदायशक्त्या च प्रतिपादयति। अत एव ओंकारस्यावयवशक्त्या वाक्यत्वेऽपि समुदायशक्त्या पङ्कजादेरिव पदत्वमुपपन्नं योगरूढिस्वीकारात्। तदस्वीकारेऽपि 'सुप्तिङन्तं पदम्' (अष्टा० १।४।१४) इति वैयाकरणपरिभाषया पदत्वं 'कृत्तद्धितसमासाश्च' (अष्टा० १।२।४६) इत्यनेन समासस्यापि प्रातिपदिकसंज्ञाविधानात्सुबन्तत्वमुपपन्नमेव। कीदृशमोमितिपदम्? समस्तं अकारोकारमकाराख्यपदत्रयकर्मधारयसमासनिष्पन्नम्। एतेन समुदायशक्तिरुक्ता। तथा व्यस्तं भिन्नम्। अकार-उकार-मकाराख्यस्वतन्त्रपदत्रयात्मकमित्यर्थः। एतेनावयवशक्तिरुक्ता। इदं च पदद्वयमभिधेयेऽपि योज्यम्। त्वां कीदृशम्? समस्तं सर्वात्मकम्, तथा व्यस्तमध्यात्माधिदेवादिभेदेन भिन्नतया प्रतीयमानम्। तथा च व्यस्तमोमितिपदं व्यस्तं त्वां गृणाति, समस्तमोमिति पदं समस्तं त्वां गृणातीत्युक्तं भवति। एतदेव दर्शयति—त्रयीमित्यादिना।

त्रयीं वेदत्रयम्, तिस्रो वृत्तयो जाग्रत्स्वप्नसुषुप्त्याख्या अन्तःकरणस्यावस्थाः। एतच्च विश्वतैजसप्राज्ञानामप्युपलक्षणम्। त्रिभुवनं भूर्भुवः स्वः। एतदपि विराड्हिरण्यगर्भाव्याकृतानामुपलक्षणम्। त्रयः सुरा ब्रह्मविष्णुमहेश्वराः। एतच्च सृष्टिस्थितिप्रलयानामप्युपलक्षणम्। एतच्च सर्वमकाराद्यैस्त्रिभिर्वर्णैरभिदधद्भिधावृत्त्या प्रतिपादयद्व्यस्तमित्यर्थः।

एवमत्र प्रकारः। ऋग्वेदो जाग्रदवस्था भूर्लोको ब्रह्मा चेति चतुष्टयमकारार्थः। तथा यजुर्वेदः स्वप्नावस्था भुवर्लोको विष्णुश्चेति चतुष्टयमुकारार्थः। तथा सामवेदः सुषुप्त्यवस्था स्वर्लोको महेश्वरश्चेति चतुष्टय मकारार्थः। इदं माण्डूक्यनृसिंहतापनीयाथर्वशिखादावन्यदप्युक्तं गुरूपदेशाज्ज्ञातव्यम्। अतिरहस्यत्वान्नेह सविशेषमुच्यते। तस्मादध्यात्माधिदैवाधिवदाधियज्ञादियावदन्यत्रोक्तमस्ति, तत्सर्वमत्रोपसंहर्तव्यं न्यूनता-

परिहाराय। तथा च सर्वप्रपञ्चाकारेण व्यस्तं त्वां अकारोकारमकारैर्व्यस्तमोमिति पदमभिदधत्त्वां गृणातीति सम्बन्धः। तथा तीर्णविकृति सर्वविकारातीतं तुरीयं अवस्थात्रयाभिमानिविलक्षणं तव धाम स्वरूपं अखण्डचैतन्यात्मकम्।

तवेति राहोः शिर इतिवद् भेदोपचारेण षष्ठी। अणुभिर्ध्वनिभिरवरुन्धानं स्वतं उच्चारयितुमशक्यैरर्धमात्रायाः प्लुतोच्चारणवशेन निष्पाद्यमानैः सूक्ष्मशब्दैरवबोधं कुर्वत्प्रापयत्। समुदायशक्त्या बोधयदिति यावत्। अर्धमात्राया एकत्वेऽपि ध्वनिभिरिति बहुवचनं प्लुतोच्चारणे चिरकालमनुवृत्तायास्तस्या अनेकध्वनिरूपत्वान्न विरुद्धम्। ध्वनीनां चाणुत्वाणुतरत्वाणुतमत्वादिकं गुरूपदेशादधिगन्तव्यम्। तथा चार्धमात्रारूपेण समस्तमोमिति पदं समुदायशक्त्या सर्वविकारातीतं तुरीयं स्वरूपमभिदधत् समस्तं त्वां गृणातीति सम्बन्धः।

एवं च पदार्थाभिधानमुखेनाखण्डवाक्यार्थसिद्धिरर्थादुक्ता। तथाहि स्थूलप्रपञ्चोपहितचैतन्यमकारार्थः। तत्र स्थूलप्रपञ्चांशत्यागेन केवलचैतन्यमकारेण लक्ष्यते। तथा सूक्ष्मप्रपञ्चोपहितचैतन्यमुकारार्थः, तत्र सूक्ष्मप्रपञ्चांशत्यागेनोकारेणोपलक्ष्यते। तथा स्थूलसूक्ष्मप्रपञ्चद्वयकारणीभूतमायोपहितचैतन्यं मकारार्थः। तादृशमायांशपरित्यागेन मकारेण चैतन्यमात्रं लक्ष्यते। एवं तुरीयत्वसर्वानुगतत्वोपहितचैतन्यमर्धमात्रार्थः, तदुपाधिपरित्यागेनार्धमात्रया चैतन्यमात्रं लक्ष्यते। एवं चतुर्णां सामानाधिकरण्यादभेदबोधे परिपूर्णमद्वितीयचैतन्यमात्रमेव सर्वद्वैतोपमर्देन सिद्धं भवति।

लक्षणया परित्यक्तानां चोपाधीनां मायातत्कार्यत्वेन मिथ्यात्वात्, स्वरूपबोधेन च स्वरूपाज्ञानात्मकमायातत्कार्यनिवृत्तेर्न पृथगवस्थानप्रसङ्गः। नह्यधिष्ठानसाक्षात्कारानन्तरमापतदध्यस्तमुपलभ्यते त्र्यादीनां वाक्यार्थबोधानुपयोगेऽप्युपासनायामुपयोगात्पृथगभिधानं द्रष्टव्यम्। तस्मात्सर्वं द्वितीयशून्यं प्रत्यगभिन्नं ब्रह्म प्रणववाक्यार्थं इति सिद्धम्। एतच्च सर्वेषां तत्त्वमस्यादिमहावाक्यानामुपलक्षणम्। तेषामपि प्रत्यगभिन्नपरिपूर्णाद्वितीयब्रह्मप्रतिपादकत्वात्। यथा च शब्दादपरोक्षनिर्विकल्पकबोधोत्पत्तिस्तथा प्रपञ्चितमस्माभिर्वेदान्तकल्पलतिकायामित्युपरम्यते।

हरिपक्षेऽप्येवम् ॥ २७ ॥

## नारायणी

(तीर्णविकृति) सर्वविधविकारातीतम्, निर्विकारमिति यावत्। (तुरीयम्) अवस्थात्रितयपरं चतुर्थम् (तव धाम) भवतोऽखण्डचेतन्यात्मकं ज्योतिःस्वरूपम्। भेदोपचारेणात्र षष्ठी। (अणुभिः परमसूक्ष्मैः (ध्वनिभिः) शब्दैः (अवरुन्धानम्) व्याप्नुवत्। अर्थात् स्वत उच्चारयितुमशक्यतया अर्द्धमात्रायाः प्लुतोच्चारणतां गतैः सूक्ष्मध्वनिभिरवबोधं कुर्वत्। (समस्तम्) सर्वात्मकतया समुदायशक्त्या वा प्रतीयमानं (ओमिति-

पदम्) ओङ्कारः प्रणवो वा (त्वाम्) भवन्तमेव। अत्रापि समस्तं व्यस्तञ्चेति योजनीयम्। (गृणाति) कथयति, प्रतिपादयतीत्यर्थः। अत्र सर्ववेदादितत्त्वस्य ओंङ्कारस्यापि वाच्यो भवानेवेति महिमसूचनं प्रकटितमिति। माण्डूक्योपनिषदि च ओंकारमाहात्म्यं द्रष्टव्यमिति। शिवपुराणस्य वायवीयसंहितोत्तरभागस्थसप्तमाध्याये २३-३१ श्लोकेषु स्पष्टमुक्तम् ॥ २७ ॥

## संस्कृतपद्यानुवादः

वेदत्रयीं त्रिभुवनं त्रितयं सुराणां
वृत्तीरुदात्तशयनप्रमुखाश्च तिस्रः।
वर्णैस्त्रिभिः-अ-उ-म रूपधरैः सुवाच्यैः
कर्णप्रियैरभिदधन्मृड! निर्विकारम् ॥

अत्यन्तसूक्ष्मैः ध्वनिभिः समस्तैर्यद्व्याप्नुवद्धाम तुरीयसंज्ञम्।
तद्व्यापकं सर्वत एव खण्डरूपेण यद्व्याप्यमपि प्रसिद्धम् ॥
आद्यन्तहीनं (शून्यम् ?) स्वयमेव जातमशेषवाग्जालविधानसूत्रम्।
तदेतदोङ्कारपदं भवन्तं स्तौतीश! नित्यं प्रणतार्तिहारिन् ॥ २७॥

## भाषाटीका

(शरणद!) हे आर्त्तलोगों को अभय देने वाले! (अकाराद्यैः) अकार, उकार, मकार नामक (त्रिभिः) तीन (वर्णैः) अक्षरों से (त्रयीं) तीनों वेद अर्थात् ऋग्वेद, यजुर्वेद और सामवेद को, तथा (तिस्रोवृत्तीः) जाग्रदवस्था, स्वप्नावस्था और सुषुप्ति अवस्थाओं को अथवा उदात्त, अनुदात्त और स्वरितों को एवं (त्रिभुवन) तीनों लोक—भूलोक, भुवर्लोक और स्वर्लोक, अथवा स्वर्ग-मर्त्य और पाताल को (अथो) तदनन्तर (त्रीन् सुरान् अपि) तीनों देवों को, अर्थात् ब्रह्मा, विष्णु और महेश्वर को (अभिदधत्) कहता हुआ, (तीर्णविकृति) सब प्रकार के विकारों से रहित, अर्थात् निर्विकार (तुरीये) तीनों अवस्थाओं से परे रहने वाला चौथा (तव धाम) आपका अखण्ड तेज (अणुभिः) अत्यन्त छोटी (ध्वनिभिः) ध्वनियों से (अवरुन्धाम्) व्याप्त हुआ, (समस्तम्) सर्वात्मक होने से थोड़ा छोटा तथा (व्यस्तम्) भिन्न-भिन्न होने से विस्तारयुक्त अथवा बड़ा (ओं इति पदम्) ओंकार (त्वम्) आप ही को (गृणाति) कहता है, अर्थात् प्रतिपादन करता है। अभिप्राय यह कि ओंकार में अकार, उकार और मकार—तीन अक्षर मिले हैं। ये ही तीनों अक्षर संसार की समस्त तीन वस्तुओं के कारण हैं। यथा—

तीन गुण—सत्त्व, रज, तम।
तीन देव—ब्रह्मा, विष्णु, महेश।
तीन शक्ति—सरस्वती, लक्ष्मी, काली।
तीन लोक—स्वर्ग, मर्त्य, पाताल।
तीन वेद—ऋक, यजुर, साम।

तीन द्विज—ब्राह्मण, क्षत्रिय, वैश्य ।
तीन अवस्था—जाग्रत्, स्वप्न, सुषुप्ति ।
तीन वयःक्रम—बाल्य, यौवन, वार्धक्य ।
तीन श्रेणी उत्तम, मध्यम, अधम ।
तीन परमात्मा—विराट्, हिरण्यगर्भ, अव्याकृत } वेदान्त शास्त्र ।
तीन जीवात्मा—विश्व, तैजस्, प्राज्ञ ।
तीन प्रकरण—सुबन्त, तिङन्त, कृदन्त (व्याकरण में) ।
तीन वैदिकस्वर—उदात्त, अनुदात्त, स्वरित ।
तीन वायु—शीतल, मंद, सुगन्ध ।
तीन ऋतुकाल—शीत, उष्ण, वर्षा ।
तीन वैदिककाण्ड—ज्ञान, कर्म, उपासना ।
तीन पुण्यनदी—गंगा, यमुना, सरस्वती ।
तीन ऋण—देवऋण, ऋषिऋण, पितृऋण ।
तीन ताप—आध्यात्मिक, आधिदैविक, आधिभौतिक ।
तीन वर्ग धर्म, अर्थ, काम ।
तीन राजशक्ति—प्रभाव, उत्साह, मंत्र (नीतिशास्त्र) ।
तीन ब्रह्मरूप—सत्, चित्, आनन्द ।
तीन नाड़ी इडा, पिंगला, सुषुम्णा (योगशास्त्र) ।
तीन धातु—कफ, वात, पित्त (वैद्यकशास्त्र) ।
तीन तौर्य नृत्य, गान, वाद्य (गान्धर्ववेदशास्त्र) ।
तीन नायिका—स्वकीया, परकीया, सामान्या (साहित्यशास्त्र) ।
तीन बृहत्काव्य नैषधचरित, शिशुपालवध, किरातार्जुनीय ।
तीन लघुकाव्य—मेघदूत, कुमारसंभव, रघुवंश ।
तीन लोकदशा—सृष्टि, स्थिति, विनाश ।
तीन प्रधानतीर्थ—काशी, प्रयाग, गया ।
तीन प्राणायाम—कुम्भक, पूरक, रेचक ।
तीन समय—दिन, रात्रि, सन्ध्या ।
तीन जीववर्ग—स्त्री, पुरुष, नपुंसक ।
तीन कर्म—कायिक, वाचिक, मानसिक ।
तीन मुक्तिसाधन—भक्ति, ज्ञान, वैराग्य ।
तीन मोक्षप्राप्ति—ब्रह्मज्ञान, योगाभ्यास, काशी ।
तीन प्रकाशक—सूर्य, चन्द्र, अग्नि ।

तीन वर्ण—स्वर, व्यञ्जन, संयुक्त ।
तीन उच्चारण—ह्रस्व, दीर्घ, प्लुत ।
तीन काल—भूत, भविष्य, वर्तमान ।
तीन वचन—एकवचन, द्विवचन, बहुवचन
तीन पुरुष—प्रथमपुरुष, मध्यमपुरुष उत्तमपुरुष
} (व्याकरण शास्त्र)

तीन प्रस्थान—सभाष्यगीता, पञ्चदशी, ब्रह्मसूत्र
दशोपनिषद्, ब्रह्मसूत्र, भगवद्गीता } (वेदान्तशास्त्र) ।

**सर्वादिसिद्धशब्द—**

तीन—ओम्, तत्, सत्— इति निर्देशो ब्रह्मणस्त्रिविधो मतः (गीता) ।
स्कन्दपुराणनागरखण्ड-हाटकेश्वरमाहात्म्य—अ० १९९ ।
तीन क्षेत्र—कुरुक्षेत्र, हाटकेश्वर, प्रभास ।
तीन अरण्य—पुष्करारण्य, नैमिषारण्य, धर्मारण्य ।
तीन पुरी—वाराणसी, द्वारका, अवन्ती (उज्जैन) ।
तीन वन—वृन्दावन, खाण्डववन, द्वैतवन ।
तीन ग्राम कल्पग्राम, शालिग्राम, नंदिग्राम ।
तीन तीर्थ—अग्नितीर्थ, शुक्लतीर्थ, पितृतीर्थ ।
तीन पर्वत श्रीशैल, अर्बुद (आबू), रैवतक ।
तीन नदी—गंगा, नर्मदा, सरस्वती (प्लक्षोद्भूया) ।
तीन त्रिफला—आँवला, हर्रा, बहेरा ।
तीन त्रिकटुक—मिर्च, सोंठ, पीपल ।
तीन उपवेद—धनुर्वेद, गान्धर्ववेद, आयुर्वेद ।
तीन प्रधान मत—हिन्दू, मुसलमान, कृस्तान ।
तीन दीवानी के वहदे—सदराला, जज, हाईकोर्ट के जज ।
तीन फौजदारी के वहदे—मजिस्ट्रेट, जज्ज, हाईकोर्ट ।
तीन माल के वहदे—कलेक्टर, कमिश्नर, बोर्ड ।
तीन प्रधानाभाषा—हिन्दी, पारसी, अंगरेजी ।
तीन परमपूज्य—माता, पिता, गुरु ।
तीन तर्पणीय—पिता, पितामह, प्रपितामह ।
माता, पितामही, प्रपितामही ।
मातामह, प्रमातामह, वृद्धप्रमातामह ।
तीन मौसम—गर्मी, जाड़ा, बरसात ।
तीन परीक्षा—प्रथम, मध्यम, आचार्य ।
तीन परीक्षा—इन्ट्रेन्स, इन्टर (ए० फे०), व्याचुलर (बी० ए०) ।
तीन प्रेमास्पद—पुत्र, मित्र, कलत्र ।
तीन महावीर—हनुमान्, भीष्म, अर्जुन ।
तीन अग्नि गार्हपत्य, आहवनीय, दक्षिण ।

तीन देह—स्थूल, सूक्ष्म, कारण।

तीन मुनित्रय—पाणिनि, कात्यायन, पतञ्जलि (व्याकरणाचार्य)।

तीन वाक्ययोजक—कर्ता, कर्म, क्रिया।

तीन वृत्ति—अभिधा, लक्षणा, व्यञ्जना (साहित्यशास्त्र)।

तीन वंश कर्ता - सूर्य, चन्द्र, अग्नि (क्षत्रियवंशकारक)।

तीन राम—परशुराम, रामचन्द्र, बलराम।

तीन प्रबलसुरारि—हिरण्यकशिपु, रावण, शिशुपाल।

तीन चमत्कार—सूर्य, अग्नि, बिजुली।

तीन जप—मानसिक, उपांशु, शाब्दिक।

तीन दानपात्र—दीन (दरिद्र), अनाथ, विद्यार्थी।

तीन महादान—अन्न, जल, विद्या।

तीन महावाक्य के शब्द—अहं, ब्रह्म, अस्मि।

तीन अथवा—तत्, त्वम्, असि।

तीन अवश्यकर्तव्य—यज्ञ, दान, तप।

तीन कर्मफल—इष्ट, अनिष्ट, मिश्र।

तीन समस्तविषय—ज्ञान, ज्ञेय, ज्ञाता।

,,    ,,    —कर्म, करण, कर्ता।

,,    ,,    —प्रमाण, प्रमेय, प्रमाता।

,,    ,,    —दर्शन, दृश्य, द्रष्टा (इत्यादि)।

तीन मनुष्यभेद—परमार्थी, स्वार्थी, राक्षस (व्यर्थी)।

तीन उपदेश—नाम, लक्षण, परीक्षा (न्यायशास्त्र)।

तीन प्रधान आश्रम--ब्रह्मचर्य, गृहस्थ, संन्यास।

तीन प्राणिव्यवस्था—जलचर, स्थलचर, नभश्चर।

तीन अग्नि के गुण—रूप, स्पर्श, शब्द।

तीन शास्त्रार्थ—वाद, जल्प, वितण्डा।

तीन प्रधान पूज्य - ऋत्विक्, पुरोहित, आचार्य।

तीन प्रचलित पूज्य—जल, अग्नि, पृथिवी (मृत्तिका)।

तीन हिन्दू धर्म चिह्न-- शिखा, सूत्र, तिलक।

तीन प्रधान संग्राम - देवासुर, राम-रावण, महाभारत।

तीन वैद्यक—निघण्टु, निदान, चिकित्सा।

इसी भाँति यदि विचारपूर्वक देखा जाय तो सब कुछ त्रयान्तर्गत ही सिद्ध होता है। अतएव समग्र तीन—अकार, उकार, मकारात्मक एक ओंकार के ही रूप दृष्टिगोचर होते हैं। इन समस्त तीनों से परे तुरीय (चौथा) धाम ही परमेश्वर का है। सृष्टि के आदि में जब परमज्योति प्रकट हुई, तो उसी की महाध्वनि का नाम ओंकार पड़ा है। यह कथा काशीखण्ड के ७३-७४वें अध्यायों में ओंकारेश्वर के वर्णन में विस्तारपूर्वक पाई जाती है। भाव यह

है कि ओंकार पद के वाच्य आप ही हैं, क्योंकि वही ओंकार समासयुक्त होकर आपको समस्त कहता है और व्यासयुक्त होने पर आप ही को व्यस्त बतलाता है। अतएव आपकी सर्वात्मकता और अद्वितीयता प्रत्यक्ष, अनुमान और अर्थापत्ति इत्यादि से सिद्ध रहने पर भी आगम द्वारा प्रकट है ॥ २७ ॥

### भावापद्यानुवाद

तीन वेद अरु वृत्तित्रय, त्रिभुवन तीनहु देव।
अकारादि अच्छर कहत, तुहिं विकार नहिं सेव॥
अणु ध्वनिते अवरुद्ध है, चौथा धाम तुम्हार।
भाषत व्यस्त समस्त नित, सरनद तुहिं ओंकार॥ २७॥

### भाषाबिम्ब

त्रिवेदों के गाये त्रिभुवन परे तीन सुरसो।
अकारादी बर्नै कहत विकृती हीन जिहि को॥
अहै चौथा धामै रहत अति सूच्छ्मै (क्ष्मै) ध्वनि भरो।
सदा गावै तोरी स्तुति गिरिश! ओंकार पद सो॥ २७॥

●

एवं तावदद्वितीयब्रह्मवाचकत्वेन प्रणव उपन्यस्तः, एतस्य चार्थानुसन्धानं जपश्च समाधिसाधनत्वेन पतञ्जलिना सूत्रितः **"समाधिसिद्धिरीश्वरप्रणिधानात्"** (यो० सू० २।४५) इति। **"ईश्वरप्रणिधानाद्वा"** ( यो० सू० १।२३ ) इति सूत्रान्तरं **"तस्य वाचकः प्रणवः"** (यो० सू० १।२७)- **"तज्जपस्तदर्थभावनम्"** (यो० सू० १।२८) इति सूत्राभ्यां प्रणवजपस्य प्रणिधानशब्दार्थत्वेन व्याख्यानात्। श्रुतौ च **"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत्"** इत्यादिना तस्य सर्वपुमर्थहेतुत्वमुक्तम्। एतस्य चातिदुरूहार्थत्वेन स्त्रीशूद्राद्यनर्हत्वेन चासाधारणत्वात्सर्वसाधारणानि प्रसिद्धानि भगवद्वाचकानि पदानि जपार्थत्वेन वदन् स्तौति—

**भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां-**
**स्तथा भीमेशानाविति यदभिधानाष्टकमिदम्।**
**अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि**
**प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते॥२८॥**

### मधुसूदनी

**भव इत्यादि**—हे शरणद, हे देव, इदं यदभिधानाष्टकं अमुष्मिन्नभिधानाष्टके विषये प्रत्येकमेकैकशः। प्रतिनामेति यावत्। श्रुतिर्वेदः प्रविचरति प्रकर्षेण बोधकतया

विचरिति, वर्तत इत्यर्थं। अपिशब्दात्स्मृतिपुराणागमादिकमपि। अथवा प्रणव इवामुष्मिन्नपि श्रुतिः प्रविचरतीति योज्यम्। यद्यप्यष्टाध्यायार्थकाण्डे वह्निनामत्वेनैतानि समाम्नातानि; तथापि वह्नेर्भगवद्विभूतित्वात्तन्नामत्वेऽपि न भगवन्नामत्वव्याघातः। यद्वा अमुष्मिन्नामाष्टके देवानां ब्रह्मादीनामपि श्रुतिः श्रवणेन्द्रियं प्रविचरति सावधानतया वर्तते। देवा अपि त्वन्नामश्रवणोत्सुकाः किं पुनरन्य इत्यर्थः। किं तन्नामाष्टकमित्यत आह—भव इत्यादि। महता महच्छब्देन सह वर्तत इति सहमहान्महादेवः तथैवागमप्रसिद्धः। इतिशब्दः समाप्त्यर्थः। यस्य च नाममात्रमपि सर्वपुरुषार्थप्रदः, स पुनः स्वयं कीदृश इति भवत्युद्रेकेण प्रणमति। प्रियायेत्यादिना। अस्मै स्वप्रकाशचैतन्यरूपत्वेन सर्वदा परोक्षाय भवते महेश्वराय। कीदृशाय ? धाम्ने सर्वेषां शरणभूताय विद्रूपःयेति वा। योग्यमुपचारं किमपि कर्तुमशक्नुवन्नहं केवलं प्रविहितनमस्योऽस्मि प्रकर्षेण वाङ्मनःकायव्यापारातिशयेन विहिता नमस्या नमस्क्रिया येन स तथा (केवलं तुभ्यं कृतनमस्कारो भवामीत्यर्थः)। प्रणिहितेति पाठेऽप्येवमेवार्थः।

हरिपक्षेऽप्येवम्—भवादीनां च हरिनामत्वं योगवृत्त्या सम्भवत्येव सहस्रनामस्तुतिपठितत्वाच्चेति द्रष्टव्यम्। अथवा यदिदमभिधानाष्टकं अमुष्मिन्प्रत्येकं देवश्रुतिरपि देवशब्दोऽपि प्रविचरति संबद्धो भवति। तथा च भवदेव इत्यादिरूपं तव रहस्यनामाष्टकमित्यर्थः। तथा च भवस्य रुद्रस्यापि देव आराध्य इत्यर्थः। एवमन्येष्वपि नामसु द्रष्टव्यम् ॥२८॥

## नारायणी

(देव!) दीव्यतीति देवः 'पचाद्यच्' (अष्टा० ३।१।१३४) हे लीलाविग्रहधारिन्! (भवः) भवतीति भवः। भवते वा सर्वम्, भू–प्राप्तौ (चु० आ० से०) अत्रापि 'पचाद्यच्' (शर्वः) शृणातीति शर्वः (क्र्या० प० से०) 'कृगृशॄदृभ्यो वः' (उणा०१।११५) (रुद्रः) रोदयतीति रुद्रः। 'रोदेर्णिलुक्च' (उ० २।११) इति रक्प्रत्ययः णेश्च लोपः। (पशुपतिः) पशूनां स्थावरजङ्गमानां पतिः, अथवा—'ब्रह्माद्याः पशवः प्रोक्तास्तेषां पतिरसौ स्मृतः।' (अथ) ततः परं (उग्रः) उच्यति क्रुधा सम्बध्यते इति उग्रः। उच-समवाये (दि० प० से०) 'ऋज्रः०' (अष्टा० २।२८।३०) इत्यादिना रन् गश्चान्तादेशः! (सहमहान्) महता शब्देन सह वर्तते इति सहमहान्, अर्थान्महादेवः। महान्देवो नटनादिकं खेलनं यस्य स महादेवः। अथवा शिवपुराणोक्तैवास्य व्युत्पत्तिः कार्या, यथा—

'पूज्यते यत्सुरैस्सर्वैर्महांश्चैव प्रमाणतः।
धातुर्महेति पूजायां महादेवस्ततः स्मृतः॥

देवशब्दस्तु सम्बुद्धिपद एव व्याख्यातः। (तथा) तद्वत् (भीमेशानौ) बिभेत्यस्माद् भीमः—'भीमादयोऽपादाने' (अष्टा० ३।४।७४), पुनः—'भियः षुक्वा' (उणा० १।१४८)

इति षुक्। 'भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे' इति च कोशः। एवं इष्टे—इति ईशानः—'ताच्छील्यवयोवचनशक्तिषु चानश्' (अष्टा० ३।२।१२९) इति चानश् प्रत्ययः। (इति)—समाप्तिसूचनायां (इदम्) कथ्यमानं (यत्) प्रसिद्धं (अभिधानाष्टकम्) नामाष्टकम्, अष्टौ नामानि सन्तीति वा। (अमुष्मिन्) अभिधानाष्टके (श्रुतिरपि) वेदपुरुषोऽपि (प्रत्येकम्) एकं एकं नाम प्रति (प्रविचरति) प्रकर्षेण बोधकतया विचरति, वर्तते इत्यर्थः। अत एव (प्रियाय) स्वमनोनुकूलाय (अस्मै) पूर्वोक्तप्रणवप्रतिपाद्याय तुरीयतेजसे (धाम्ने) ज्योतीरूपाय (भवते) तुभ्यम् (प्रणिहित-नमस्यः) उचितोपचारं कर्तुमशक्नुवन्नहं विहितनमस्कारः (अस्मि) भवामि। क्वचित् प्रणिहितेत्यत्र प्रविहितेति पाठोऽपि दृश्यते, तत्राप्यर्थः स्पष्ट एव।

अत्रोक्तश्लोकस्त्रितयान्तर्गतप्रकारविशेषो द्रष्टव्यः—क्षितिमूर्तिः शर्वः १, जलमूर्तिर्भवः २, अग्निमूर्ती रुद्रः ३, वायुमूर्तिरुग्रः ४, आकाशमूर्तिर्भीमः ५, यजमानमूर्तिः पशुपतिः ६, चन्द्रमूर्तिर्महादेवः ७, सूर्यमूर्तिरीशानः ८। एवं प्रणवाद्या नमोन्ता अष्टौ मूर्तयो मन्त्ररूपेण जप्या इति विज्ञापितं 'त्वमर्क—त्रयी'ति पूर्वोक्तपद्यद्वयेन सदामुना श्लोकेनेति सुधीभिरवधेयम्। अत्र यस्य नाममात्रमपि परमपुरुषार्थप्रदं वेदप्रतिपादितं च वरीवर्ति, स स्वयं कीदृक्? इति महामहिमाऽवबोधितः, एतच्च स्पष्टमुक्तं शिवपुराणे वायवीयसंहितोत्तरार्द्धे चतुर्थध्याये श्रीकृष्णं प्रत्युपमन्युमहर्षिणेति ॥२८॥

## संस्कृतपद्यानुवादः

शर्वो भवः पशुपतिः पुनरुग्ररूप ईशानभीमयुतरुद्रमहादिदेवा।
नामाष्टकं प्रथितमेतदतीव शम्भो देवाष्टमूर्तिधर शङ्कर दीनबन्धो॥
प्रत्येकमस्मिन् तव नाम विस्तराद् भक्त्या परिस्तौत्यपि वेदपूरुष।
धाम्नेऽथ तस्मै भवते भवोद्भव नित्यं नमस्याः शतशो हि मत्कृताः॥२८॥

## भाषाटीका

(देव !) हे देवाधिदेव ! (भवः शर्वः रुद्रः पशुपतिः अथो उग्रः सहमहान् तथा भीमे-शानौ (इति) भव, शर्व, रुद्र, पशुपति, उग्र, महादेव, भीम और ईशान—(यत् इदम् अभिधानाष्टकम्) यह जो आपके आठ नाम हैं, (अमुष्मिन्) इन आठो नामों में (प्रत्येकम्) प्रत्येक नामको (श्रुतिः अपि) स्वयं वेद भी, यहाँ पर "अपि" कहने से यह बोध होता है कि जब वेद ही कहता है, तो इतिहास-पुराण इत्यादि की कौन गिनती है ? (प्रविचरति) बहुत बड़ी बोधकता से चलता है, अर्थात् विशेष प्रचार करता है। (अस्मै प्रियाय धाम्ने भवते प्रणिहितनमस्यः अस्मि) अत एव इस अपने परम इष्ट तेजोरूप आपको केवल प्रणाम करने वाला हूँ।

अभिप्राय यही है कि ऊपर जो आठ नाम कहे गए हैं, इनमें प्रत्येक नाम को लेकर वेदपुरुष भी आपका स्तुतिगान करता है, अर्थात् ये आठों नाम वेद प्रतिपादित हैं और आप

हमारे इष्टदेव ज्योतिरूप हैं, अतएव आठों नामों के मन्त्र द्वारा मैं केवल आपको प्रणाम करता हूँ; क्योंकि और कोई पूजा अथवा सेवा मुझसे नहीं हो सकती है।

विशेष द्रष्टव्य यह है कि इसके पूर्व श्लोक में ओंकार का निरूपण किया है और उसके भी पूर्व "त्वमर्कः" (२६) इत्यादि श्लोक में भगवान् की अष्टमूर्तियों का निरूपण हुआ है, अर्थात् पहिले अष्टमूर्ति का वर्णन करके तब ओंकार पद के वाच्य वाचकरूप को दर्शाया है। तदनन्तर परमेश्वर के नामाष्टक को कीर्तन करके प्रणाम किया। है इससे यह बात पाई जाती है कि अष्टमूर्ति के कथित एक-एक रूप के साथ ओंकार के सहित आठों नामों के एक-एक नामों में चतुर्थ्यन्त नमः प्रयोग करने से आठ मन्त्र बन जाते हैं, उन लोगों को केवल इस श्लोक के कहे हुए आठों नामों के मन्त्रों को, जो जिसके अनुकूल हो, गुरु के उपदेशानुसार जप करना चाहिए। अत्यन्त रहस्य विषय होने से मन्त्रों का प्रकार जना दिया गया है। विज्ञ भावुक लोग स्वयं उनका उद्धार बना सकते हैं। ये ही आठों नाम मन्त्र कहलाते हैं ॥२८॥

## भाषापद्यानुवाद

सर्व रुद्र भव पसुपती, महादेव ईसान।
उग्र भीम-ये विदित हैं, तुव आठहु अभिधान ॥
इनमें नित प्रति एकको, बरनत वेद महान्।
परम ज्योति चैतन्य तुहि, करहुँ प्रनाम बखान ॥२८॥

## भाषाबिम्ब

भवो भीमो रुद्रो पसुपति महादेव सरवो,
इसानो उग्रो हैं कहत सब नामाष्टक यहो।
यही में प्रत्येकै स्तुति करत वेदो तुमहिं को,
नमस्या है मोरी नित परम-ज्योती तनु लगी ॥२८॥

•

एवं जातभक्त्युद्रेको नमस्कारमेवानुवर्तयन्दुरूहमहिमत्वेन भगवन्तं स्तौति—

**नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो**
**नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः।**
**नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो**
**नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः ॥२९॥**

## मधुसूदनी

नम इति—हे प्रियदव, अभीष्टनिर्जनवनविहार, ते तुभ्यं नेदिष्ठायात्यन्तनिकट-वर्तिने, दविष्ठायात्यन्तदूरवर्तिने च नमोनमः। हे स्मरहर, कामान्तक, क्षोदिष्ठाय

क्षुद्रतराय, महिष्ठाय महत्तराय च तुभ्यं नमोनमः। तथा हे त्रिनयन, त्रिनेत्र, वर्षिष्ठाय अतिवृद्धाय, वृद्धतरायेति वा, यविष्ठाय युवतमाय च तुभ्यं नमोनमः। एवमत्यन्त-विरुद्धस्वभावस्याल्पबुद्धिभिः कथमपि स्वरूपनिर्णयासम्भवात्सर्वदा नमस्कार एव करणीय इति प्रदर्शनाय नमस्कारशब्दावृत्तिः। तथा च श्रुतिः—**"दूरात्सुदूरे तदिहान्तिके च', 'अणोरणीयान्महतो महीयान्', 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी**। त्वं जीर्णो दण्डेनाञ्चसि त्वं जातो भवसि विश्वतोमुखः' इत्यादि। तथा किं बहुना, सर्वस्मै सर्वरूपाय तुभ्यं नमः। 'इदं सर्वं यदयमात्मा' (बृ० उ० २।५।१) इति श्रुतेः।

ननु तर्हि सर्वविकाराभिन्नत्वाद्विनाशित्वप्रसङ्ग इत्याशङ्क्य, सर्वस्याध्यस्तत्वेन वास्तवभेदाभावात्सर्वबाधाधिष्ठानत्वेन च श्रुतिषु सामानाधिकरण्येन व्यपदेशादद्वितीयस्य ब्रह्मणो न विकारगन्धोऽपि सम्भाव्यत इत्यभिप्रायेण नमस्कुर्वन्नाह—तदिदमिति-सर्वाय च नम इति। तत्परोक्षमिदमपरोक्षमित्यनेन प्रकारेणानिर्वाच्यं सर्वं यत्र स तदिदमितिसर्वस्तस्मै। बहुव्रीहावन्यपदार्थप्रधानत्वान्न सर्वनामता। तेन सर्वाधिष्ठान-भूताय तुभ्यं नम इत्यर्थः॥

हरिपक्षेऽप्येयम्—केवलं सम्बोधनत्रयमन्यथा व्याख्येयम्। प्रियाणि वैषयिक-सुखानि वैराग्योद्बोधेन दुनोति नाशयतीति प्रियदवः। तथाच स्मरो वासना, तं हरतीति स्वभक्त्युद्रेकेणेति स्मरहरः। तथा त्रयाणां लोकानां नयनवत्सर्वार्थविभासक-स्त्रिनयन इति प्रागपि व्याख्यातम्॥ २९॥

## नारायणी

(प्रियदव !) हे निर्जनवनविहारिन् ! (नेदिष्ठाय) अतिशयेनान्तिकः नेदिष्ठः। **अतिशायने तमबिष्ठनौ'** (अष्टा० ५।३।५५) इत्यत इष्ठन्प्रत्ययः, सर्वत्रैवामुष्मिन्पद्ये बोध्य। अत्र तु—**'अन्तिकबाढयोर्नेदसाधौ'** (अष्टा० ५।३।६३) इति नेदादेशो विशेषः। अत्यन्तनिकटवर्तिन इत्यर्थः। (ते) तुभ्यं (नमः)। (तथैव दविष्ठाय) अतिशयदूरवर्तिने (च) ते (नमः)। हे (स्मरहर !) कामान्तक !—**'हरः स्मरहरो भर्गः'** (अ० को० १।१।३३)। (क्षोदिष्ठाय) क्षुद्रतराय—**'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः'** (अष्टा० ६।४।१५६) इत्यत एवोभयत्रापि यणादिलोपगुणौ। ते (नमः)। एवं (महिष्ठाय च नमः) महत्तराय च भवते नमः। (त्रिनयन !) हे त्रिलोचन ? (वर्षिष्ठाय) अतीव वृद्धाय। अत्र—**'प्रिय स्थिर०'** (अष्टा० ६।४।१५१) इत्यादिना वृद्धस्थाने वर्षादेश एव विशेषः। ते (नमः)। अथ (यविष्ठाय च नमः) अतिशयेन युवा इति यविष्ठस्तस्मै, अत्रापि पूर्वोक्त—**'स्थूलदूर०'** इत्यादिनैव यणादिलोपगुणौ। (सर्वस्मै ते नमः), किं बहुना सर्वस्वरूपाय सर्वात्मकाय वा भवते नमः। (इति) अनेन प्रकारेण (तत्) मत्कृतं (इदम्) क्रियमाणं सर्वं (नमः) नमस्कारः (सर्वाय) शिवाय भवत्विति शेषः।

क्वचिद्दन्त्यादिरपि लभ्यते, यथा सर्वायेति, तत्र 'षर्व गतौ' अथवा 'षर्व हिंसायाम्' (भ्वा० प० से०) इत्येताभ्यां धातुभ्यां ब-वयोरभेदात् 'पचाद्यचि' (अष्टा० ३।१।१३४) इत्यतः सर्वोऽपि भवति। तथा चात्र शिवपर्य्यायत्वान्न सर्वनामता। यथा चोक्तमपि नामनिधानकोशे—'सर्वस्तु शर्वो भगवान् शम्भुः कालञ्जरः शिवः' इति। क्वचिद् अतिसर्वायेत्यपि पाठः; परन्तु तत् परोक्षमिदमपरोक्षमिति। अनेन प्रकारेण अनिर्वाच्यं सर्वं यत्र सः, तदिदमिति सर्वः, तस्मै तदिदमितिसर्वायेत्येकं पदम्। अत्र बहुव्रीहावन्यपदार्थप्रधानत्वान्न सर्वनामतेति सर्वं विवेचनीयं विचक्षणैरेवमेवोक्तं भगवद्गीतायामपि—

'नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽपि सर्वः॥

(गीता—४।११)

अमुत्र—'अणोरणीयान् महतो महीयान्' (क० उ० २।२०) इत्यादिरूपां श्रुतिमवलम्ब्यैव भगवतः सर्वात्मकत्वं सर्वाधिष्ठानभूतत्वादि च सम्यक् प्रतिपाद्य सर्वविधमहिमशालिनेऽष्टमूर्तयेऽष्टधा नमः प्रयोगोऽतिशयभक्तिमत्तामेव द्रढयति कवेरिति॥ २९॥

## संस्कृतपद्यानुवादः

नमो निकटवर्तिने प्रियवनाय तुभ्यं नमो
नमः परमदुस्तराय च शिवाय देवाय ते।
नमो लघुतराय ते मदनमानध्वंसिने
महामहिमशालिने महिततेजसे ते नमः॥

नमोऽस्तु ते वृद्धतराय शम्भवे युवस्वरूपाय च बालकाय वा।
सर्वाय सर्वातिशयाय सर्वतः सर्वस्वरूपाय भवेन्नमो नमः॥ २९॥

## भाषाटीका

(प्रियदव !) हे आनन्दकाननविहारिन् ! (नेदिष्ठाय नमः) अत्यन्त निकट में रहने वाले आपको नमस्कार है तथा (दविष्ठाय च नमः) सर्वतः दूरवर्ती आपको नमस्कार है। (स्मरहर) हे कामनाशक ! अथवा स्मरण करने मात्र से दुःखों के हरण करने वाले ! (क्षोदिष्ठाय नमः) अत्यन्त लघुतम रूप आपको नमस्कार है। (मंहिष्ठाय च नमः) और सबसे बड़े रूप वाले आपको नमस्कार है। (त्रिनयन !) हे त्रिलोचन ! अर्थात् चन्द्र-सूर्य-अग्नि हैं नेत्र जिसके, जैसा कि कहा भी है—"वन्दे वह्निशशाङ्कसूर्यनयनम्"—अथवा तीनों ही लोकों में है नयन

(नीति) जिसका, (वर्षिष्ठाय नमः) अतिशय वृद्ध आपको नमस्कार है तथा च (यविष्ठाय च नमः) परम तरुण आपको नमस्कार है। एवं च (सर्वस्मै ते नमः) सर्वस्वरूप आपको नमस्कार है। (तत् इदं नमः शर्वाय च इति) यह सब मेरा किया हुआ नमस्कार शर्वस्वरूप आपको निवेदित है, अथवा सब किसी के अतिक्रमण करने वाले शर्व भगवान् को नमस्कार है।

अभिप्राय स्पष्ट है कि आप ही सब कुछ हैं और आप ही सब किसी के रूप हैं, अतएव आप ही को मैं प्रणाम करता हूँ; कारण यह है कि आप अत्यन्त विरुद्ध-स्वभाव होने से कदापि निर्णीत नहीं हो सकते, अर्थात् हम लोग जैसे क्षुद्रबुद्धि वालों का किया हुआ यह निर्णय नहीं हो सकता कि आप क्या हैं? किंवा कैसे हैं? तब और क्या कर सकते हैं? केवल बारंबार प्रणामभर करते हैं। यहाँ विशेषता यह है कि पूर्व में अष्टमूर्ति और अष्टनामों को कहकर इन श्लोकों में आठ बार नमस्कार करने से साष्टांग दण्डवत्प्रणाम लिखने की पूर्ण विधि दिखलाई गयी है। इसमें आठ बार "नमः" पद के प्रयोग होने से महापुनरुक्ति दोष आ पड़ने की आशंका नहीं करनी चाहिए; क्योंकि परमेश्वर की दुरूह महिमा को सोचकर कवि ने अपनी परमभक्ति के उद्रेक को प्रकट किया है। अतः यह दोष नहीं है, वरन् बहुत भारी गुण अथवा अलंकार हो गया है। ईश्वर सर्वशक्तिमान् होने से उसके विरुद्ध स्वभाव को रामायण में भी इस प्रकार से कहा है—

"आदि अन्त कोउ जासु न पावा, मति अनुमान निगम अस गावा।
पद-बिनु चलै सुनै बिनु काना, कर बिनु कर्म करै बिधिनाना।
आनन रहित सकल रस भोगी, बिनु बाणी वक्ता बड़ जोगी।
तनु बिनु परस नयन बिनु देखा, गहै घ्रान बिनु बास असेषा।
अस सब भांति अलौकिक करनी, महिमा जासु जाइ नहि बरनी।" (तु० रा०) ॥२९॥

## भाषापद्यानुवाद

नमो नगीची देव जो, दूरवर्ति पुनि होय।
नमो कामरिपु! छुद्र ह्वै, रहत (बनत) बहुत बड़ जोय॥
नमो बूढ़ते बूढ़ जो, त्रिनयन! महाजुआन।
नमो सर्ब-मय सर्बते, ऊपर सर्व महान्॥ २९॥

## भाषाबिम्ब

नमो पासै-वासी प्रियवन! महादूर बसहू,
नमो छोटेरूपी बहुत-बड़ भारी तुमहिं को।
नमो बूढ़े बाबा जुवक-तनु-धारी गिरिशजू,
सबै रूपै धारैं तिनहि प्रभु सर्बै नमत हौं॥ २९॥

अधुना पूर्वोक्तसर्वार्थसंक्षेपेण नमस्कुर्वन् स्तुतिमुपसंहरति—

**बहलरजसे विश्वोत्पत्तौ भवाय नमोनमः**
**प्रबलतमसे तत्संहारे हराय नमोनमः ।**
**जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमोनमः**
**प्रमहसिपदे निस्त्रैगुण्ये शिवाय नमोनमः ॥३०॥**

## मधुसूदनी

बहलेति—विश्वोत्पत्तौ विश्वोत्पत्तिनिमित्तं बहलं तमःसत्त्वाभ्यामधिकं रजो यस्य, तस्मै उद्रिक्तरजसे भवत्यस्माज्जगदिति भवो ब्रह्ममूर्तिस्तस्मै तुभ्यं नमोनमः । तथा तत्संहारे तस्य विश्वस्य संहारनिमित्तं प्रबलं सत्त्वरजोभ्यामनभिभूतमुद्रिक्तं तमो यस्य, तस्मै, हरतीति हरो रुद्रमूर्तिस्तस्मै नमोनमः । तथा जनानां सुखकृते सुखनिमित्तम् । कृतशब्दोऽव्ययो निमित्तवाची । सत्त्वस्योद्रिक्तावुद्रेके रजस्तमोभ्यामाधिक्ये स्थितायेत्यर्थाल्लभ्यते । 'सत्त्वोद्रेके' इति वा पाठः । अथवा सत्त्वोद्रिक्तौ सत्यां जनानां सुखं करोतीति जनसुखकृत्, तस्मै । यद्वा सुखस्य कृतं करणम् । भावे क्तः । तस्मिन् तन्निमित्तम् । एवं व्याख्याने प्रक्रमभङ्गदोषो न भवति पूर्वपर्यायद्वये उत्तरपर्याये च सप्तम्यन्तनिमित्तनिर्देशात् । मृडयति सुखयति मृडो विष्णुः, तस्मै । पालनस्यैवोद्देश्यत्वात् क्रमभङ्गेण पश्चान्निर्देशः । एवं गुणत्रयोपाधीनत्वान्निर्गुणं प्रणमति । प्रमहसिपदे निस्त्रैगुण्ये शिवाय नमोनम इति निर्गतं त्रैगुण्यं यस्मात्तन्निस्त्रैगुण्यम्, तस्मिन्पदे पदनीये तत्पदप्राप्तिनिमित्तम् । कीदृशे ? प्रमहसि प्रकृष्टं माययानभिभूतं महो ज्योतिर्यस्मिंस्तत्तथा । सर्वोतमप्रकाशरूपत्रिगुणशून्यमोक्षनिमित्तमित्यर्थं । शिवाय निस्त्रैगुण्यमङ्गलस्वरूपाय **'शिवमद्वैतं चतुर्थं मन्यते'** इति श्रुतेः । प्रमहसि पदे स्थितायेति वा ।

हरिपक्षेऽप्येवम् ॥ ३० ॥

## नारायणी

हे भगवन् ! (विश्वोत्पत्तौ) संसारसृजनकर्मणि (बहलरजसे) अतिशयरजोगुणपूर्णाय (भवाय) भवमूर्तये, विश्वसृड्रूपाय (नमोनमः) वीप्सायां द्वित्वम्, (तत्संहारे) सर्वेषां भुवनानां प्रलयकाले (प्रबलतमसे) प्रकृष्टतरतमोगुणालङ्कृताय (हराय) हरतीति हरः । —**"पचाद्यच्"** (अष्टा० ३।१।१३४), **"हरो नाशकरुद्रयोः"** इति मेदिनी । रुद्ररूपायेत्यर्थः । (नमोनमः) बहुशो नमस्कृतयः । (सत्त्वोत्पत्तौ) सत्त्वगुणे जायमाने सति (जनसुखकृते) समस्तप्राणिसुखकर्त्रे, यद्वा जनसुखस्य कृतं करणं तस्मिन्, भावे क्तः । अर्थाज्जनसुखकरणनिमित्तमिति । अथवा कृते सति तादर्थ्येऽव्ययम्, तेन जनसुखार्थमित्यर्थः स्पष्टः । (मृडाय) मडतीति मडः, मृड सुखने (तु० प० से०) **"इगुपधज्ञाप्री-**

किर." (अष्टा० ३।१।१३६) इत्यतः कप्रत्ययः। तस्मै सुखप्रदाय सर्वजगत्परिपालकाय विश्वम्भरमूर्तये (नमोनमः) नमस्काराः सन्तु। (निस्त्रैगुण्ये) निर्गतं त्रैगुण्यं यस्मात्, तत् निस्त्रैगुण्यम्, गुणत्रयातीतम्, तस्मिन्। (प्रमहसि) प्रकृष्टं माययाऽनभिभूतं महः तेजो यस्मिन् तत्तथा, अत्युज्ज्वलज्ज्योतिर्मये इत्यर्थः। (पदे) परमपदे। वर्तमानायेति योजनीयम्। (शिवाय) परमानन्दस्वरूपाय मङ्गलमूर्तये वा (नमोनमः)। अत्राप्यष्टधा नमःप्रयोगप्रमाणादष्टाङ्गप्रणामविधिर्दर्शितः, यतः स्तुत्युपसंहारोऽत्र विवक्षित इति। क्वचित्—'सत्त्वोत्पत्तौ' इत्यत्र उत्पत्तिशब्दस्य पुनरुक्तिदोषत्वात् सत्वोद्रिक्तौ, अथवा सत्वोद्रेके इत्यादिरूपः पाठोऽपि लभ्यते। एवं च केचित् तृतीयपदस्य द्वितीयपदत्वम-पोच्छन्ति; परन्तु भव-लययोः स्वल्पकालिकत्वात् स्थितेश्च तदपेक्षयातिस्थिरत्वाद्य-थोक्तमेव समीचीनमाभाति। तद्वद्विपर्ययोऽपि न साम्प्रदायिक इति विवेचनीयम्। ग्रन्थसमाप्तौ छन्दःपरिवर्तनस्याचारत्वादेवात्र हरिणीवृत्तम्। तल्लक्षणं च वृत्तरत्नाकरे एवमुक्तम्—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति ॥ ३० ॥

## संस्कृतपद्यानुवादः

विश्वोत्पत्तौ बहुलरजसे स्यान्नमो मे भवाय
तत्संहारे प्रबलतमसे श्रीहराय प्रणामः।
सत्वोद्रिक्तौ जनसुखकृते तन्नमस्ते मृडाय
निस्त्रैगुण्ये प्रमहसि पदे श्रीशिवायोन्नमोऽस्तु ॥ ३० ॥

## भाषाटीका

हे देव! (विश्वोत्पत्तौ) संसार की सृष्टि में (बहलरजसे) बहुत विशेष रजोगुणी, (भवाय) भवस्वरूप आपको (नमोनमः) बार-बार नमस्कार है। (तत्संहारे) फिर उसी संसार के प्रलय के समय (प्रबलतमसे) विशेषतर तमोगुणी (हराय) हर स्वरूप आपको (नमोनमः) अनेक प्रणाम हैं। (सत्त्वोत्पत्तौ) सत्त्वगुण के प्रकट होने पर (जनसुखकृते) लोगों के सुखकारी (मृडाय) मृडस्वरूप आपको नमोनमः) पुनः पुनः नमस्कार है। एवं (निस्त्रैगुण्ये प्रमहसिपदे) तीनों गुणों से परे स्वयंप्रकाशरूप परमपद वर्तमान रहने वाले (शिवाय नमोमनः) शिव स्वरूप आपको विशेषरूप से प्रणाम है। अभिप्राय यह कि सृष्टि करने के लिए आप ही रजोमूर्ति (ब्रह्मा) होते हैं और प्रलय के निमित्त तामस (रुद्र) बनते हैं एवं संसार के पालनार्थ आप ही सात्त्विक विश्वम्भर (विष्णु) हो जाते हैं। अतएव इन तीनों गुणों के धारण करने वाले होने पर भी इन तीनों गुणों के परे स्वयंप्रकाशरूप से स्थित रहने वाले शिवमूर्ति आपको बारम्बार प्रणाम है। इसी भाव से कुछ-कुछ मिलता हुआ बाणभट्टकृत कादम्बरी का प्रथम मङ्गला-चरण इस प्रकार से है, यथा—

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।
अजाय सर्ग-स्थिति-नाश-हेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ (का०द० १।१)।

इस मूल श्लोक में भी आठ बार 'नमः' पद के प्रयोग से अष्टाङ्ग प्रणाम की विधि दिखलाई गई है। यहाँ पर यह शंका होती है कि जो सगुण हो गया, वह निर्गुण कैसे रह सकता है ? इसका उत्तर रामायण की चौपाई देती है—

जो गुन रहित सगुन सो कैसे,
जल हिम-उपल बिलग नहि जैसे।

यों ही ईश्वर के स्वयंप्रकाश होने की वार्ता भी उसी ग्रन्थ में मिलती है।

सहज प्रकाश रूप भगवाना,
नहि तहँ पुनि विज्ञान विहाना।

### भाषापद्यानुवाद

जगत सृष्टि लगि बहुत रज, धरत नमो भव जोय।
तिहि सँहारत नमहु अति तमोगुनी हर सोय (होय)॥
जग पालन हित सत्त्व गुन, लहत नमहु मृडरूप।
परम ज्योति त्रय गुन परे, प्रनवहुँ सिवहि अनूप॥ ३०॥

### भाषाबिम्ब

नमहु भव को सृष्टी कर्तें रजोगुन रूपतैं,
प्रनवहु मृडै रच्छा लागी सतो गुन ह्वै रहैं।
नमतहु हरैं संहारै जो तमो गुनते मरैं,
त्रयगुन परे तेजो रूपैं शिवाय नमो नमै॥ ३०॥



एवमस्तुत्यरूपेणैव भगवन्तं स्तुत्वा स्वस्यौद्धत्यपरिहारं 'मम त्वेतां वाणीम्' इत्यत्रोपक्रान्तमुपसंहरन्नाह—

**कृशपरिणतिचेतः क्लेशवश्यं क्व चेदं**
**क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः।**
**इति चकितममन्दीकृत्य मां भक्तिराधा-**
**द्वरद चरणयोस्ते वाक्यपुष्पोपहारम्॥३१॥**

### मधुसूदनी

हे वरद—सर्वाभीष्टदेत्युपसंहारे योग्यं सम्बोधनम्। तव पायोर्मद्वाक्यपुष्पोपहार भक्तिराधात् त्वद्विषया रतिरर्पितवती। यथा पुष्पाणि मधुकरेभ्यः स्वमकरन्दं प्रयच्छन्त्यन्येषामपि दूराद् गन्धमात्रेण प्रमोदमादधाति, तथैतानि स्तुतिरूपाणि

वाक्यानि भक्तिरसिकेभ्यो भगवन्माहात्म्यवर्णनामृतरसं प्रयच्छन्त्यन्येषामपि श्रवण-मात्रेणापि वस्तुस्वाभाव्यात्सुखविशेषमादधातीति ध्वनयितुं ज्ञापयितुं वाक्यपुष्पत्वेन निरूपितम्। तथा च वाक्यान्येव पुष्पाणि, तैरुपहारः पूजार्थमञ्जलिस्तमित्यर्थः। किं कृत्वा आधादित्यनेन हेतुना चकितं भीतं स्तुतेर्निवर्तमानं माममन्दीकृत्य न मन्दममन्दं कृत्वा। बलात्स्तुतौ प्रवर्त्यैत्यर्थः। तथा चान्यमत्या प्रवृत्तस्य मम स्खलितेऽपि क्षन्तव्य-मित्यभिप्रायः। इति शब्देन सूचितं भयकारणमाह—कृशेत्यादिना। कृशा अल्पा परिणतिः परिपाको यस्य तत्तथा। अल्पविषयमित्यर्थः। तादृशं मम चेतश्चित्तं ज्ञानं वा। तथा क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां वश्यमायत्तम्। सर्वदा रागद्वेषादिदोषसहस्रकलुषितमित्यर्थः। गुणानां सीमासंख्यापरिमाणयोरियत्ता तामुल्ल-ङ्घयितुं शीलं यस्याः सा गुणसीमोल्लङ्घिनी शश्वदृद्धिः नित्या विभूतिः। तेनैतादृश-दुर्वासनासहस्रकलुषितमित्यल्पविषयं मम मनः क्व, अनन्ता नित्या तव परमा विभूतिर्वा क्व, इत्यत्यन्तासम्भावना मम भयहेतुरित्यर्थः। एतदवधारणे च तव भक्तिरेव कारण-मिति भक्तेरत्यन्तासम्भावितफलदानेऽपि सामर्थ्यं दर्शयति। यस्मादेवम् तस्मात्सर्वापरा-धानविगणय्य परमकारुणिकेन त्वया त्वद्विषया भक्तिरेव ममोद्दीपनीयेति वाक्यतात्प-र्यार्थः ॥३१॥

## नारायणी

( वरद ! ) हे वरदायक ! (कृशपरिणति) अत्यल्पपरिपाकशीलं (क्लेशवश्यम्) दुःखाधीनम्, अथवा पातञ्जलदर्शनोक्ताः पञ्चक्लेशाः। यथा—**'अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः'** (यो० सू० २।३)। तत्र अविद्या—विद्याविरोधिनी, विपरीत-ज्ञानमिति यावत्। अस्मिता—कर्ताहम्, भोक्ताहमित्याद्यभिमानः। रागः साधनेषु तृष्णारूप इच्छाविशेषः। द्वेषः—दुःखसाधनेषु निन्दात्मकः क्रोधो वैरभाव इत्यर्थः। अभिनिवेशः—अनुभवसिद्धैरपि मरणादिभिर्भयसञ्चारः। तथा चोक्तमपि कूर्मपुराणे ब्राह्मीसंहिताया उत्तरभागे सप्तमेऽध्याये यथा—

**अविद्यामस्मितां रागं द्वेषञ्चाभिनिवेशनम्।**
**क्लेशाख्यांस्तान् स्वयं प्राह पाशानात्मनिबन्धनात्। इति ॥२९॥**

एतेषां पञ्चक्लेशानामायत्तं (इदम्) मदीयं (चेतः) अन्तःकरणं (च क्व) पुनः कुत्राऽस्ति, अतिक्षीणविषयमित्यर्थः। एवं च (गुणसीमोल्लङ्घिनी) गुणमर्यादापारगामिनी (शश्वत्) अविनाशिनी नित्येति वा, (तव) भवतः (ऋद्धिः) विभूतिर्महिमा वा (क्व च) तथा च कुत्रास्ति। अर्थाद् भगवन्महिमा तु नित्यत्वानन्तत्वादिगुणावच्छिन्नः, मदन्तः-करणञ्च बहुविधदुर्वासनादिकलुषितं क्लेशवशीभूतमिति कथमुभयोस्तारतम्यं भवेत्? (इति) अनेनैव हेतुना (चकितम्) अतीव भ्रान्तम्, भीतमित्यर्थः। (माम्, अमन्दीकृत्य)

न मन्दममन्दं कृत्वा, त्रासविहीनं विधाय, बलादेव स्तवनकर्मणि नियोज्येत्यभिप्रायः। (ते चरणयोः) भवतः पादयोः (भक्तिः) सेवा। यथोक्तं गरुडपुराणस्य २३१ अध्याये—

'भज इत्येष वै धातुः सेवायां परिकीर्तितः।
तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी'॥

एवञ्च पूज्येषु अनुरागातिशय एव भक्तिरर्थात्—'नहीष्टदेवात्परमस्ति किञ्चिद्' इति बुद्धिव्याप्ता चित्तवृत्तिरेव पराभक्तिः। यथोक्तमस्मद्गोत्रप्रवर्त्तकैस्तत्रभवद्भिर्महर्षिशाण्डिल्याचार्य्यैः भक्तिसूत्राख्ये ग्रन्थ आदावेव—'अथातो भक्तिजिज्ञासा १। सा परानुरक्तिरीश्वरे २' इति। भक्तिमाहात्म्यवर्णनादिकं श्रीमद्भगवद्गीता—भागवतादिषु तथान्येष्वपि पुराणादिषु सर्वत्रैव यथावदूहनीयं विस्तरभयान्नेहोल्लिख्यते। सा भक्तिरेव (वाक्यपुष्पोपहारम्) वाक्यान्येव कथितस्तुतिपद्यान्येव पुष्पाणि तेषामुपहारः पूजोपायनम्, तम् (आधात्) प्रत्यर्पयदित्यर्थः। तेनैतदवधारणे भवतो भक्तिरेव कारणमित्याख्यातम्।

अत्र भक्तिमहिम्नेव स्तोतृत्वमुररीकृत्य भक्तेरेव सर्वथाऽसम्भावितफलदातृत्व सामर्थ्यमस्तीति प्रकटितम्। तथा च मदीयापराधपुञ्जमविगणय्य स्वीयपादभक्तिरेव मदर्थमुद्दीपनायेति च ध्वनयति वाक्यतात्पर्यार्थः। तस्मात्—

'या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु'॥
(वि० पु० १।२०।१८)।

इति रूपा भक्तिः प्रार्थना च स्फुटीकृता स्तोत्रोपसंहार इति। मालिनीवृत्तमेवेत्यतः श्लोकचतुष्टयपर्य्यन्तम्। तल्लक्षणन्तु—'न-न-म-य-य-युतेयं मालिनी भोगिलोकैः' इति वृत्तरत्नाकरोक्तमेवेति॥ ३१॥

## संस्कृतपद्यानुवादः

क्व मे चेतः शम्भो! कृशपरिणति क्लेशवशगं
समृद्धिस्ते नित्या क्वचन गुणसीमान्तकरणी।
इतीश त्रस्तं मां तव चरणयोर्भक्तिरकरो—
दमन्दीकृत्यैवं वचनकुसुमाभ्यर्चनविधिम्॥ ३१॥

### भाषाटीका

(वरद!) हे वरदायक! (क्लेशवश्यम्) नाना प्रकार के क्लेशों के अधीन (च) और (कृशपरिणति) अतिक्षीण परिणाम वाला अर्थात् स्वल्पविषयक (इदम्) यह मेरा, (चेतः क्व) चित्त कहाँ? और (गुणसीमोल्लङ्घिनी) गुणों के सिवानों को लाँघ जाने वाली (शश्वत्) सदा

वर्तमान रहने वाली अर्थात् अविनाशिनी (तव ऋद्धिः च क्व) आपकी महिमा किंवा विभूति कहाँ ? (इति) इसी कारण से (चकितम्) घबराये हुए अथवा डरते हुए (माम्) मुझको (अमन्दीकृत्य) ढीठ बनाकर (ते चरणयोः भक्तिः) आपके चरणों की भक्ति ने (वाक्यपुष्पोपहारम्) वचनरूपी पुष्पों से पूजन का उपहार (आधात्) रखा व समर्पण कराया।

अभिप्राय यह है कि आपकी अतुलनीय महिमा को देखता हुआ अनेक प्रकार की दुर्वासनाओं से कलुषित और दुःखमय मेरा चित्त आपके गुणगान करने में बहुत डरता था, पर आपके ही चरणों की भक्ति ने ढाँढ़स देकर यह वाक्यरूपी पुष्पों का उपहार (नजर) आपके चरणों पर रखवाया है, अर्थात् केवल आपकी भक्ति के भरोसे यह महिम्नस्तोत्र रचा गया है। वास्तव में इस स्तोत्र के प्रत्येक पद में भक्तिरस की धारा बह रही है, क्योंकि जैसे फूल भवरों को अपना रस चखाते और दूसरे लोगों को भी दूर से ही अपने सुगन्ध से आनन्दित करते हैं, वैसे ही इस स्तोत्र के वाक्य भी भक्तिरसिक भक्तजनों को तो भगवान् की महिमा के वर्णनरूप अमृत रस को पिलाते ही हैं, पर दूसरे भी सुनने वाले लोगों को कविता के प्रसाद-माधुर्यादि गुणों तथा अर्थों की गम्भीरता और विशेषतः श्रुतिमधुरता से परम आह्लादित कर देते हैं। अथवा अञ्जलि में लेने से जैसे फूल दोनों हाथों को एक समान सुगन्धित कर देता है, जैसा कि कहा है —'अञ्जलि गत सुभ सुमन जिमि सम सुगन्ध कर दाय' (तु० रा०), वैसे इस स्तोत्र के वाक्य भी पाठ करने वाले के मुख और हृदय को शुद्ध कर देते हैं। यहाँ रूपकालंकार है।

भाव यह कि भक्ति ने ही आपके चरणों पर वाक्य पुष्पोपहार चढ़ाया है और आप वरदायक हैं, अतएव वर देकर उस भक्ति को ही अचला बना दीजिए। भक्ति के विषय में प्रधान ग्रन्थ भगवान् शांडिल्याचार्य का बनाया हुआ 'भक्तिसूत्र' है, इसके अतिरिक्त भगवद्गीता, भागवत, रामायण अथवा अठारहों पुराण और उपपुराणादिकों में केवल भक्ति की ही महिमा भरी हुई है। अधिक उदाहरण इस छोटी सी पुस्तिका में नहीं लिखे जा सकते; क्योंकि विस्तार (बढ़ जाने) का भय है, तथापि दिग्दर्शन मात्र करा दिया जाता है। यथा —

जाते वेगि द्रवों मैं भाई, सो मम भक्ति भक्त सुखदाई।
सो स्वतन्त्र अवलम्ब न आना, जेहि आधीन ज्ञान विज्ञाना॥

इसके नवों भेद भी स्वयं रामचन्द्र ने शबरी से कहे हैं। यथा —

नवधा भक्ति कहौ तोहि पांही, सावधान सुनु धरु मन मांही।
प्रथम भक्ति संतन कर संगा, दूसरि इति मम कथा प्रसंगा।
गुरुपद पंकज सेवा, तीसरि भक्ति अमान।
चौथि भक्ति मम गुनकथन, करै कपट तजि गान।
मन्त्र जाप मन दृढ़ विश्वासा, पंचम भजन सो वेद प्रकासा।
षट दम सील विरत बहु कर्मा, निरत निरन्तर सज्जन धर्मा।
सतईं सब मुंहि मय जग देखै, मोते संत अधिक करि लेखै।
अठइं यथा लाभ संतोषा, सपनेहु नहि देखै पर दोषा।

नवम सरल सबसो छलहीना, मम भरोस हिय हरख न दीना।
नव महँ एकहु जिन्हके होई, नारि पुरुष सचराचर कोई।
सोइ अतिसय प्रिय भामिनि मोरे, सकल प्रकार भक्ति दृढ़ तोरे ॥ ३१ ॥

—(तुलसी रामायण)

## भाषापद्यानुवाद

अल्प विषय यह चित्त कहँ, महा क्लेस आधीन।
कहँ गुन सीमा लाँघती, तुव महिमा अति पीन ॥
इमि सोचत लखि (अति) चकित मुहिं, करि प्रवृत्त तुव भक्ति।
वाक्यपुष्प उपहार दिय, चरन चढ़ावन सक्ति ॥ ३१ ॥

## भाषाबिम्ब

दुरबल परिनामा है कहाँ चित्त दुःखी,
कहँ तुव गुन सीमा लाँघती है समृद्धी।
इहि विधि डर खाते भक्ति दीन्ही सहारा,
धरहुँ चरन तोरे बैन फूलों कि माला ॥ ३१ ॥

•

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥३२॥

## नारायणी

(ईश !) हे सर्वसमर्थं ! भवतो गुणलिखनार्थं (सिन्धुपात्रे) समुद्ररूपायां मसिधान्याम्, (असितगिरिसमम्) नीलाचलतुल्यम्, (कज्जलम्) मसी (स्यात्) भवेत्। तथा च (सुरतरुवरशाखा) कल्पवृक्षस्य महती शाखा, (लेखनी) कलमः स्यात्, लिख् धातोर्ल्युट्, ततश्च ङीष्। एवं (उर्वी) पृथिवी (पत्रम्) लेख्यपत्रं भवेत्। एतदुक्तरूपं सर्वमुपकरणं (गृहीत्वा) धृत्वा सुसज्जीकृत्येत्यर्थः। (शारदा) सरस्वती देवी—अस्या व्युत्पत्तिस्तु तिथ्यादितत्त्वोक्तैव ज्ञेया। यथा—

"शरत्काले पुरा यस्मान्नवम्यां बोधिता सुरैः।
शारदा सा समाख्याता लोके वेदे च नामतः॥" इति॥

(यदि) चेत् (सर्वकालम्) अनुक्षणम्, (लिखति)—"लोडर्थलक्षणे च" (अष्टा० ३।३।८) इत्यतो लट्। (तदपि) तथापि (तव) भवतः (गुणानाम्) गुणगणगणनानाम्, (पारम्) अन्तं सीमानमिति यावत्। नैव गच्छतीति। अत्र सिन्धुरूपमसिधान्यां नील-गिरिं कज्जलं कृत्वा कल्पवृक्षशाखया लेखन्या समस्तभूमण्डलरूपे पत्रे स्वयं भगवती वाग्देवी यदि प्रतिक्षणमपि भवतो गुणगणनालेखनप्रसङ्गे समुद्युक्ताप्यसमर्थैव भवति चेत्, तर्हि का कथास्मादृशां पामरपुङ्गवानामिति स्तोत्रपूर्तिरुपदिष्टा। एतावदेव महिम्नस्तोत्रमेतदग्रे च स्तोत्रस्य कर्तृनाम—फलादिकं निगद्यते। वृत्तवार्ता तु पूर्वोक्तैवेति ॥ ३२ ॥

## संस्कृतपद्यानुवादः

शम्भो! भवेदर्णव एव पात्रं मसी भवेन्नीलगिरिः समस्तः।
स्याल्लेखनी कल्पतरोश्च शाखा पत्रं प्रकीर्णा पृथिवी समन्तात्॥
विहाय वीणारटनादिकृत्यमनुक्षणं स्याल्लिखने प्रवृत्ता।
श्रीशारदा नैति तथापि पारं भवद्गुणानां करुणाम्बुराशे॥ ३२॥

## भाषाटीका

(ईश!) हे सर्वसमर्थ! (आपके गुणों के लिखने के लिए), (सिन्धुपात्रे) समुद्ररूप मसिदानी [दावात] में, (असितगिरिसमं कज्जलं स्यात्) नीलगिरि के समान कालिख (रोशनाई) हो और (सुरतरुवरशाखा) कल्पवृक्ष की भारी डार (लेखनी) कलम हो, यों ही (उर्वी पत्रम्) पृथिवीमण्डल पत्र (कागद) हो, (यदि) जो (अगरचे) इन सबको (गृहीत्वा) लेकर (शारदा) स्वयं सरस्वती देवी (सर्वकालम्) हर घड़ी, (लिखति) लिखती रहें, (तदपि) तो भी (तव गुणानाम्) आपके गुणों के (महिमा के) (पारं न याति) पार नहीं पा सकतीं।

भाव स्पष्ट है कि समुद्र को मसीदानी बनाकर उसमें नीलपर्वत को कज्जल बनावे और कल्पवृक्ष की शाखा को कलम बनाकर इस भूमण्डलरूप पत्र पर स्वयं शारदा देवी प्रतिक्षण आपके गुणों की गणना लिखें, तब भी पार नहीं पा सकतीं। तब हम ऐसे क्षुद्रलोगों के साधारण सामाग्री लेकर लिखने से आपकी महिमा का अन्त लगा देना कैसे साध्य हो सकता है?

ये ही बत्तीसों (दंत संख्यक) श्लोक पुष्पदन्ताचार्य के बनाये हुए हैं। इन्हीं को पूर्व पद्य में "वाक्यपुष्पोपहारः" कह आये है। इनके आगे वाले आठ श्लोक फलस्तुति कहलाते हैं। यहाँ पर शारदा का नाम इसलिये कह दिया है कि उन्हीं की कृपा से मैं इतना भी लिख सका हूँ। यही बात रामायण में इस भाँति से कही गई है। यथा—

"भक्त हेतु विधि भवन बिहाई, सुमिरत सारद आवत धाई।
कीन्हे प्राकृत जन गुन गाना, सिर धुनि गिरा लगति पछिताना॥
हृदय सिंधु मति सीप समाना, स्वाती सारद कहहिं सुजाना।
जौ बरषै बर बारि बिचारू, होहिं कबित मुकतामनि चारू॥" (तु० रा०) ॥३२॥

### भाषापद्यानुवाद

मसिदानी अर्नव बनै, मसी नील-गिरि होय।
कल्पवृच्छ की साखकै, बनै लेखनी जोय॥
लिखै भूमितल पत्र पै, तुमरो गुन दिन रात।
पावति पार न सारदा, ईश! अंत रहि जात॥३२॥

### भाषाबिम्ब

जलनिधि मसिदानी नील सैलै मसी हो,
कलप दुरुम (विरिछ) साखा लेखनी पत्र भूमी।
लिखहि जदपि लैकै सारदा नित्य तासों,
तदपि तुव गुनों के नाथ! पारे न जाती॥३२॥

●

असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौले-
ग्रंथितगुणमहिम्नो निर्गुणस्येश्वरस्य।
सकलगणवरिष्ठः पुष्पदन्ताभिधानो
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार॥३३॥

### नारायणी

(असुरसुरमुनीन्द्रैः) दानवदेवमुनिश्रेष्ठैः पातालस्वर्गमर्त्यलोकनिवासिभिस्सर्वैरेवेत्यर्थः (अर्चितस्य) पूजितस्य। भगवतः (इन्दुमौलेः) चन्द्रशेखरदेवस्य (ग्रथितगुणमहिम्नः) ग्रथिता गुम्फिता गुणानामैश्वर्यादीनां महिमानो यस्य स ग्रथितगुणमहिमा तस्य। (निर्गुणस्य) निर्गुणस्वरूपस्यैव (ईश्वरस्य) विश्वेश्वरदेवस्य (एतत्) कथ्यमानं कथितं वा परममनोहरं रम्यं वा (स्तोत्रम्) नाम्ना महिम्नस्तोत्रं (सकलगुणवरिष्ठः) अशेषगुणकलाभिः श्रेष्ठतां गतः। क्वचित् सकलगुणवरिष्ठ इत्यपि पाठो दृश्यते। (पुष्पदन्ताभिधानः) पुष्पदन्तनामा कविः (अलघुवृत्तैः) अनल्पाक्षरैः शिखरिणी-हरिणी-मालिनीछन्दोभिः (चकार) अकार्षीदिति। अत्रादौ स्तुत्यनामोल्लेखनपुरस्सरं स्तोत्रनामादि लेखनं शिष्टाचारानुमतं सर्वप्रसिद्धमेव। इत आरभ्य स्तोत्रसमाप्ति-पर्य्यन्तं शिवरहस्योक्ता फलश्रुतिरेवेति विज्ञेयम्॥ ३३॥

### संस्कृतपद्यानुवादः

समस्तदेवासुरयोगिवृन्दैरभ्यर्चितस्येन्दुकलाधरस्य।
महामहिम्ना गुणगुम्फितस्य गुणैर्विहीनस्य महेश्वरस्य॥
एतत्कृतं स्तोत्रमनल्पवृत्तैर्मनोहरं पुण्यवचः प्रवृत्तैः (युक्तैः)।
गुणप्रकृष्टैर्बहुशस्स्तुतेन श्रीपुष्पदन्ताभिधकोविदेन॥ ३३॥

## भाषाटीका

(असुरसुरमुनीन्द्रैः अर्चितस्य) असुर—दैत्यराक्षसादि, जैसे बाणासुर, रावण प्रभृति, सुर—ब्रह्मा-विष्णु इत्यादि, एवं मुनीन्द्र—शिवतत्त्व के ज्ञाता दधीचि-वसिष्ठ इत्यादिक महर्षियों से पूजित (इन्दुमौलेः) भगवान् चन्द्रमौलि (ग्रथितगुणमहिम्नः) गुथी गई हैं गुणों की महिमा जिसकी, ऐसे (निर्गुणस्य ईश्वरस्य) निर्गुणस्वरूप परमेश्वर का (एतद् रुचिरं स्तोत्रम्) यह बहुत ही सुन्दर वा मनोहर स्तोत्र, (सकलगुणवरिष्ठः) समस्तगुणों से [गुणों में] श्रेष्ठ (पुष्पदन्ताभिधानः) पुष्पदन्त नामक कवि ने, (अलघुवृत्तैः) बड़े-बड़े छन्दों द्वारा, (चकार) निर्माण किया।

इस श्लोक में पहिले ही असुर शब्द के रखने से यह सूचित किया कि सुर लोगों की अपेक्षा असुरगण विशेषरूप से महादेव के सेवक हुए हैं, क्योंकि विचारपूर्वक देखने से विभीषणादि दो एक को छोड़कर सभी दैत्य राक्षसादि कट्टर शैव जान पड़ते हैं। इसमें असुर-सुर-मुनीन्द्र इन तीनों पदों से पाताल, स्वर्ग और मर्त्यलोक के रहने वालों का अभिप्राय प्रकट है, अर्थात् त्रैलोक्य मात्र में भगवान् चन्द्रशेखर पूजित हैं, इसी से लिङ्गपुराण में यह भी कहा है कि पाताल में चरण, मर्त्यलोक में लिङ्ग और स्वर्गलोक में श्रीशिवजी का मस्तक ही पूजा जाता है, इसीलिए मेरे पूज्य पूर्वपुरुष पण्डित रामानन्द त्रिपाठी जी ने एक स्थल पर लिखा है कि—

"न चक्राङ्का न पद्माङ्का न वज्राङ्का यतः प्रजा।
लिङ्गाङ्का च भगाङ्का च तस्मान् माहेश्वरी प्रजा॥

अर्थात् इस सृष्टि में चक्र, पद्म अथवा वज्र का कोई चिह्न नहीं पाया जाता, अतएव विष्णु, ब्रह्मा किंवा इन्द्र की यह सृष्टि नहीं है, इसमें लिङ्ग और भग ही के चिन्ह विद्यमान होने से यह माहेश्वरी सृष्टि है। इससे यह सिद्ध है कि सृष्टिमात्र के कारण होने से भगवान् विश्वेश्वर सभी लोकवासियों से पूजित हैं, उसमें भी मर्त्यलोक निवासियों के तो एकमात्र आराध्य देव हैं। श्लोक का और सब भाव अत्यन्त स्पष्ट है।

## भाषापद्यानुवाद

देव असुर मुनि-पूज्य पद, चन्द्रमौलि विस्वेस।
गुन महिमाते ग्रथित पै, निर्गुन ईश्वर बेस॥
स्रेष्ठ सकल गुन में भयो, पुष्पदन्त अस नाम।
अलघु छन्द से रुचिर यह, विरच्यो स्तोत्र ललाम॥३३॥

## भाषाबिम्ब

असुर-सुर-मुनी के पूज्य जो (हैं) चन्द्रमौली,
गुथि गुन महिमा को निर्गुनै ईश्वरै की।
सब-गुन-गन-पूरो पुष्पदन्तै कहातो,
रुचिर अलघु छन्दों में स्तुती को बनायो॥३३॥

अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्-
पठति परमभक्त्या शुद्धचित्तः पुमान्यः ।
स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र
प्रचुरतरधनायुः पुत्रवान् कीर्तिमांश्च ॥३४॥

## नारायणी

(यः) कश्चित् (पुमान्) नरः । तेन नारीणामनधिकारो महिम्नस्तोत्रपाठे लोकप्रसिद्धः, (शुद्धचित्तः) सन् एकाग्रमानसो भूत्वा (एतत्) पुष्पदन्तकथितम्, (अनवद्यम्) उत्तमम्, निर्दोषमित्यर्थः । (धूर्जटेः) महादेवस्य, धूर्भारभूता जटिर्जटा यस्य, तस्य । जट् झट् संघाते (भ्वा०–प० से०) 'सर्वधातुभ्यः' (उणा० ४।११८) इतीन्प्रत्ययः । 'धूर्जटिर्नीललोहितः' (अ० को० १।१।३३) इत्यमरः । (स्तोत्रम्) स्तुतिम् (अहरहः) प्रतिदिनं नित्यनियमानुसारमित्यर्थः । (पठति) पाठं करोति, (सः) पाठकर्ता (सदात्मा) सत्यात्मा, महात्मेति यावत् । सदिति उपलक्षणमेतत्, तेन सच्चिदानन्दमयत्वमूहनीयम् (शिवलोके) रुद्रावासे, (रुद्रतुल्यः) शिवैकगणसमानः (भवति) तथात्र इत्येष पाठ एव प्राक्तनैः स्वीकृतः सदात्मेत्यत्र । तद्वदस्मिंल्लोकेऽपि । (प्रचुरतरधनायुः) अत्यन्तधनशाली एवं परमायुष्मान् तथा (पुत्रवान् कीर्तिमांश्च) वंशकर्ता, दृढकीर्तिश्च जायते, अर्थादिह सांसारिकमखिलं धनायुःपुत्रकीर्त्यादिसुखमनुभूयन्ते, रुद्ररूपेण शिवलोके निवसतोति स्तोत्रपाठस्य फलमेत्र याथार्थ्येन स्पष्टीकृतमिति । वृत्तमुक्तमेव ॥ ३४ ॥

## संस्कृतपद्यानुवादः

पठेत्परमभक्तिमान् य इह शुद्धचित्तः पुमान्
महेशगुणगुम्फितं स्तवनमुत्तमं प्रत्यहम् ।
भवेत्स शिवपत्तने (सन्निधौ) प्रमथरुद्रतुल्यस्तथा
यशोधनसुतायुषां प्रचुरतां लभेतावनौ ॥ ३४ ॥

## भाषाटीका

(यः शुद्धचित्तः पुमान्) जो कोई मनुष्य शुद्ध हृदय होकर (एतत्) इस (अनवद्यम्) दोषरहित (धूर्जटेः स्तोत्रम्) महादेव के स्तोत्र को (परम भक्त्या अहरहः पठति) बड़ी भक्ति के साथ प्रतिदिन पढ़ता है, (स सदात्मा) वह महात्मा, (शिवलोके) महादेव के लोक में अथवा कैलाश पर (रुद्रतुल्यः) रुद्र नामक मुख्य गणों के समान (भवति) होता है, तथा च इस लोक में (प्रचुरतरधनायुः पुत्रवान् कीर्तिमान् च) बड़ा धनी, चिरंजोवी एवं पुत्रवान् तथा कीर्तिशाली होता है । इस श्लोक का भाव प्रकट है । इसमें स्तोत्रपाठ का जो फल लिखा है, अनुभव करने

से बहुत ठीक उतरता है। उसमें भी वंश चलने के लिए इस स्तोत्र का पाठ विशेष फल-दायक समझा जाता है। इस श्लोक में 'सदात्मा' के स्थान पर 'तथात्र' पद का पाठ प्राचीन है॥ ३४॥

**भाषापद्यानुवाद**

प्रतिदिन पढ़त महेश को, जो असतोत्र अनूप।
शुद्धचित्त ह्वै भक्तिजुत, सो न परत भव-कूप॥
होत संभुके लोक में, सो नर रुद्र समान।
लहत विपुल धन आयु जस, पुत्रादिक सुखमान॥ ३४॥

**भाषाबिम्ब**

प्रतिदिन नर जोई धूर्जटी स्तोत्र ही (या) को,
पढ़त धरि सुभक्ती सुद्ध अन्तःकरन-सो।
वह शिवपुर मांही रुद्र के तुल्य होवै,
जग बहु धन आयू पुत्र कीर्त्यादि पावै॥ ३४॥

●

**महेशान्नापरो देवो महिम्नो नापरा स्तुतिः।**
**अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम्॥३५॥**

**नारायणी**

(महेशात्) महादेवात् (अपरः) भिन्नः कश्चित् (देवः) सुरः (न) नास्ति। तथा च (महिम्नोऽपरा) महिम्नस्तोत्रभिन्ना अन्या (स्तुतिः) अपि (न) नास्ति। एवं (अघोरात्) अघोरमार्गात्, यथा चोक्तमपि वेदे रुद्राष्टाध्याय्याम्-(५।२)—**"या ते रुद्रशिवातनूरघोरापापकाशिनी"** इति। तथा चाघोरपूजाप्युक्ता क्वचित्स्मृत्यादिषु, यथा—

"भाद्रे मास्यसिते पक्षे अघोराख्या चतुर्दशी।
तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम्॥"

अघोरमन्त्रस्तु—**"ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्य सर्वशर्वेभ्यो नमस्तेऽस्तुरुद्ररूपेभ्यः।"** (रुद्राष्टाध्याय्याः स्वस्तिपाठात्मके अन्तिमे परिशिष्टाध्याये, मन्त्रः (७)। अस्य मन्त्रस्य माहात्म्यं विशेषरूपेण लिङ्गमहापुराणे द्रष्टव्यमिति। (अपरः) पृथक् अन्यो वा (मन्त्रः) जपात्क्षिप्रसिद्धिप्रदः (न)। एवमेव (गुरोः परं) श्रीगुरोर्भिन्नम् अन्यत् किञ्चित् (तत्त्वं नास्ति)। तथा चोक्तम्—

"गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥"

स्पष्टोऽत्र सर्वाशय इति॥३५॥

## संस्कृतपद्यानुवादः

महेश्वरान्नास्त्यपरो हि देवः
स्तुतिर्महिम्नोऽन्यपरा न काचित्।
अघोरकल्पा-(मन्त्रा)-दपरो न मन्त्रो (मनुर्नो)
गुरोः परं तत्त्वमिहास्ति नान्यत् ॥३५॥

## भाषाटीका

(महेशात् अपरः देवः न) महादेव से भिन्न कोई दूसरा देवता नहीं है, अर्थात् सभी उनके अंशरूप हैं, अतः उनसे बढ़कर दूसरा कोई नहीं है। (महिम्नः अपरा स्तुतिः न) महिम्न से बढ़ी-चढ़ी दूसरी कोई स्तुति भी नहीं है। (अघोरात् अपरः मन्त्रः न) अघोरमंत्र से बड़ा कोई मन्त्र नहीं है। इसी अघोर मत में शाबरमन्त्र भी है। यथा—

कलि बिलोकि जग हित हर गिरिजा,
सावर मन्त्र जाल जिन सिरिजा।
अनमिल आखर अरथ न जापू,
प्रगट प्रभाव महेस प्रतापू ॥ (तु० रा०)

(गुरोः परं तत्त्वं न अस्ति) गुरु से परे कोई तत्त्व नहीं है। तुलसीदास ने रामायण कीं पहली ही चौपाई से गुरु वन्दना प्रारम्भ की है और उत्तरकाण्ड में गुरु का माहात्म्य वर्णन किया है और सभी पुराणादिकों में पाया जाता है ॥ ३५ ॥

## भाषापद्यानुवाद

सिवसम अपर न देव कहुँ, महिमन सी स्तुति नाँहि।
नहि अघोरसों मन्त्र जग, तत्त्व न गुरु पर जाँहि ॥ ३५ ॥

## भाषाबिम्ब

महादेव सो देवता, नहिं महिम्न सो स्तोत्र।
ना अघोरसो मन्त्र है, गुरु तत्त्व सम कोऽत्र ॥ ३५ ॥

०

**दीक्षा दानं तपस्तीर्थं होमयागादिकाः क्रियाः।**
**महिम्नस्तवपाठस्य कलां नार्हन्ति षोडशीम् ॥३६॥**

## मधुसूदनी

इमे (३२–३६) श्लोकाः स्तोत्रान्तर्गताः सुगमाश्चेति सर्वं भद्रम् ॥

हरिशङ्करयोरभेदबोधो भवतु क्षुद्रधियामपीति यत्नात्।
उभयार्थतया मयेदमुक्तं सुधियः साधुतयैव शोधयन्तु ॥ १ ॥

यत्नतो वक्रया रीत्या कर्तुं शक्यं विधान्तरम् ।
यद्यपीह तथाप्येष ऋजुरध्वा प्रदर्शितः ॥ २ ॥
श्लोकानुपात्तमिह न प्रसङ्गात्किञ्चिदीरितम् ।
श्लोकोपात्तमपि स्तोकैरक्षरैः प्रतिपादितम् ॥ ३ ॥
महिम्नाख्यस्तुतेर्व्याख्या प्रतिवाक्यं मनोहरा ।
इयं श्रीमद्गुरोः पादपद्मयोरर्पिता मया ॥ ४ ॥
टीकान्तरं कश्चन मन्दधीरितः सारं समुद्धृत्य करोति चेत्तदा ।
शिवस्य विष्णोर्द्विजगोसुपर्वणामपि द्विषद्भावमसौ प्रपद्यते ॥ ५ ॥
भूतिभूषितदेहाय द्विजराजेन राजते ।
एकात्मने नमो नित्यं हरये च हराय च ॥ ६ ॥

॥ इति श्रीमत्परमहंसश्रीमद्विश्वेश्वरसरस्वतीचरणारविन्दमधुपश्रीमधुसूदन-
सरस्वतीविरचिता महिम्नस्तुतिव्याख्या सम्पूर्णा ॥

## नारायणी

**दीक्षा**—गुरुमुखादेव स्वेष्टदेवतामन्त्रग्रहणम् । यथोक्तं योगिनीतन्त्रे—

'दीयते ज्ञानमत्यन्तं क्षीयते पापसञ्चयः ।
तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः' ॥ इति ॥

**दानम्**—स्वस्वत्वपरित्यागपूर्वकं परस्मै वितरणं दानम् । तदुक्तं शुद्धितत्त्वे, यथा-

'अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते' ॥ इति ॥

श्रीमद्भगवद्गीतायां तु सात्त्विक-राजस-तामसभेदात्त्रिविधं दानमभिहितम् ।
तद्यथा—सप्तदशेऽध्याये—

**सात्त्विकं यथा**—

'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्' ॥ २० ॥
(गीता–१७।२०)

**राजसं यथा**—

'यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥
(गीता–१७।२१)

**तामसं यथा**—

'अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्' ॥ २२ ॥
(गीता–१७।२२)

एवमेव—'कूर्मपुराणे' तु चतुर्विधं दानं कथितम् तदपि स्मर्तव्यम्—

'नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते।
चतुर्थं विमलं प्रोक्तं सर्व्वदानोत्तमोत्तमम्॥ इति
(उत्तरार्धम्—२६।४)

एतेषां लक्षणानि तत्रैव द्रष्टव्यानि विस्तरतो नेह लिख्यन्ते। दानधर्मविषये—दानकमलाकरः, दानचन्द्रिकादयो ग्रन्था द्रष्टव्या इति।

तपः—शास्त्रोक्तविधिपूर्वकक्लेशजनकं कर्म तप इति कथ्यते। तपो माहात्म्यं सर्वत्रैव पुराणादिषु दृश्यते, विशेषतस्तु मत्स्यपुराणोक्तं ज्ञेयम्। यथा—

'तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः।
दुर्भगत्वं वृथा लोको वहते सति साधने'॥ इति॥

एवमेव श्रीमद्भगवद्गीतायामपि शारीर-वाचिक-मानसिकभेदात्त्रिविधं तपः कथितम्। तद्यथा सप्तदशेऽध्याये दर्शनीयम्।

**शारीरं यथा—**

'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते'॥ १४॥
(गीता–१७।१४)

**वाचिकं यथा—**

'अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते'॥ १५॥
(गीता–१७।१५)

**मानसं यथा—**

'मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥ १६॥
(गीता–१७।१६)

तदपि सात्त्विक-राजस-तामसभेदात्त्रिविधमेतदग्र एव स्पष्टीकृतमत्र त्यज्यते। अतस्तत्रैव द्रष्टव्यमिति च प्रार्थ्यते।

तीर्थम्—तरति पापादिकं यस्मात्तत्तीर्थम्, तॄ-प्लवनतरणयोः '**पातॄतुदिवचिरिचिसिचिभ्यस्थक्**' (उणा० २।६) इति थक् प्रत्ययः। पुण्यस्थानादिकम्।

'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु।
अवतारर्षिजुष्टाम्भः स्त्रीरजःसु च विश्रुतम्॥'

एवञ्च तीर्थमाहात्म्यं सर्वपुराणप्रसिद्धमपि काशीखण्डस्य षष्ठाध्याये विशेषरूपेण द्रष्टव्यम्, तथा च तत्रत्यमेवेदं पद्यम् यथा—

'प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा।
परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता'॥ ४४॥ इति।

**ज्ञानयागादिकाः**—तत्रादौ ज्ञानम्—"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्प-शास्त्रयोः" इत्यमरः। श्रीमद्भगवद्गीतायां त्वेवमुक्तम्—

"अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवम्।
आचार्य्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥"११॥
(गीता–१३।७–११)

योगशास्त्रेषु मोक्षधर्मे एवं निरूपितम्, तद्यथा—

"एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्वशः।
आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम्"। इति।

**ततो यागः**—यज्ञः, यथाहामरः—'**यज्ञः सवोऽध्वरो यागः**' (अ० को० २।७।१३) इति। स यागो बहुविधो भवति, तत्र श्रौताग्निकृत्यहविर्यज्ञा अग्न्याधानादयः सप्त, स्मार्ताग्निकृत्यपाकयज्ञा औपासनादयः सप्त, श्रौताग्निसप्तसंस्थाः सोमयागादयः, एवमुत्तर-क्रतवस्तु महाव्रतसर्वतोमुख-राजसूय-पौण्डरीक-अभिजित्-विश्वजित्-अश्वमेधादयो बहवः श्रौतसूत्रादिभिर्ज्ञातव्याः। एवञ्च श्रीभगवद्गीतायाश्च चतुर्थेऽध्यायेऽपि बहुशो यज्ञविधिवर्णनम्। तथा च सप्तदशेऽध्याये सात्त्विकादिभेदत्रयं द्रष्टव्यम्। पञ्चयज्ञाश्च भगवता मनुना प्रोक्ता एव, तद्यथा—

"ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्" ॥ (मनु० ४।२१) ॥

एवमेव शिवपुराणे वायुसंहितायामुत्तरभागे (अ० १६ श्लो० ८९)—

"कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः।
ध्यानयज्ञो ज्ञानयज्ञः पञ्चयज्ञाः प्रकीर्तिताः" ॥

यज्ञवर्णनादिकं च मत्स्यपुराणस्य ११८।११९ अध्याययोः। पद्मपुराणस्य सृष्टिखण्डे ३१ अध्याये, तथा च कालिकापुराणस्यापि ३० अध्याये विस्तरशो द्रष्टव्यमिति यज्ञस्यावश्यकत्वन्तु मनुस्मृति-भगवद्गीताभ्यां सम्मतं सुप्रसिद्धमेव, यथा—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति।

ज्ञानञ्च यागश्च आदिर्यासाम् ता ज्ञानयागादिकाः, अत्रादिशब्देन अन्यान्यपि वेदाध्ययनपरोपकारदेवमन्दिरनिर्माणसेतुबन्धौषधालयस्थापनादीनि धर्माचरणान्यूह्यानि। ताः क्रियाः कर्माणि (महिम्नः स्तवपाठस्य षोडशीं कलां नार्हन्ति) अर्थात् महिम्नस्तोत्रस्य पाठेन यत्फलं लभ्यते, तस्य षोडशांशत्वमपि पूर्वोक्तदीक्षादानादिकर्मभिर्नैव प्राप्यत इति ॥३६॥

## संस्कृतपद्यानुवादः

सुमन्त्रदीक्षा बहुशस्तु दानं तपः कठोरं शुचितीर्थसेवा।
ज्ञानार्ज्जनं विश्रुतयज्ञकर्म प्रभृत्यशेषं विहितं विधानम् ॥
शम्भोर्महिम्नःस्तवपाठभू-(जा) तां न षोडशीं याति कलां कदाचित्।
अतो महिम्नः स्तवपाठ एव कार्य्यः प्रयत्नादखिलेशभक्तैः ॥३६॥

## भाषाटीका

१. दीक्षा—गुरुमुख से अपने इष्ट देव का मंत्रोपदेश ग्रहण करना दीक्षा कहलाती है, यथा—

"संभुमंत्र द्विजर मोहि दीन्हा,
सुभ उपदेश विविध विधि कीन्हा।" (तु० रा०)

२. दान—अपना स्वत्व उठाकर देना दान कहा जाता है, यथा—

"प्रकट चारि पद धर्म के, कलि महँ एक प्रधान।
येन केन विधि दीन्हे, दान करै कल्यान॥" (तु० रा०)

३. तप—शास्त्र के कथनानुसार क्लेशजनक कर्म तप कहे जाते हैं, यथा—

"करहिं अहार साक-फल कंदा, सुमिरहिं ब्रह्म सच्चिदानन्दा।
पुनि हरि हेतु करन तप लागे, वारि अहार मूल फल त्यागे॥
इहि विधि बीते वर्ष षट्, सहस वार आहार।
संवत् सप्त सहस्र पुनि, रहे समीर अधार॥
वर्ष सहस दश त्यागेउ सोऊ, ठाढ़े रहे एक पद दोऊ।"

तप के क्लेशजनक होने से उसका फल भी क्लेशमय होगा, ऐसी शंका नहीं करनी चाहिए; क्योंकि क्लेश उठाने का फल सुख मिलना प्रत्यक्ष सिद्ध है और समस्त तपों का फल मनोऽभिलषित वस्तु का लाभ ही कहा गया है, यथा—

"दुराध्याय पै अहहिं महेसू, आसुतोष पुनि किये कलेसू।
जौ तप करहि तुम्हारि कुमारी, माविहु मेंटि सकै त्रिपुरारी ॥" (तु० रा०)

तप का माहात्म्य और फल भी यों कहा गया है—

"जनि आश्चर्य करहु मन मांही, सुत ! तपते कछु दुर्लभ नाहीं।
तपबलते स्रग सृजै विधाता, तप बल विष्णु सकल जग त्राता।
तपबल संभु करहिं संहारा, तपबल सेष धरहिं महि भारा।
तप अधार सब सृष्टि भुआरा, तपते अगम न कछु संसारा।" (तु० रा०)

४. तीर्थ—तीर्थ स्थान प्रसिद्ध हैं। काशी-प्रयाग इत्यादि तीर्थों का माहात्म्य बहुत विस्तृतरूप से पुराणादिकों में पाया जाता है। अतएव इस विषय को ढूंढ लेना चाहिए। ग्रन्थ के विस्तार भय से विशेष नहीं लिखा जा रहा है।

'तीरथ वर नैमिष विख्याता, अति पुनीत साधक सिधि दाता।" (तु० रा०)

५. ज्ञान—ईश्वर के समझ लेने ही का नाम ज्ञान है। इस ज्ञानोत्पादन के लिए वेदान्त, योग इत्यादि समस्त शास्त्रजाल हैं। गीता में ज्ञान का निरूपण उत्तम रीति से किया गया है।

"कहहिं संत मुनि वेद पुराना, नहि कछु दुर्लभ ज्ञान समाना।" (तु० रा०)

६. यागादिक क्रिया—यज्ञ इत्यादि पवित्र कर्म, यथा—

"प्रात कहा मुनिसन रघुराई, निर्भय यज्ञ करहु तुम जाई।
होम करन लागे मुनि झारी, आपु रहे मख की रखवारी।" (तु० रा०)

(महिम्नः पाठस्य षोडशीं कलां न अर्हन्ति) ये सब पूर्वोक्त कर्म महिम्नस्तोत्र के पाठ की सोलहवीं कला की भी योग्यता नहीं रखते। भाव यह कि इस महिम्नस्तोत्र के पाठ से जो फल मिलता है, इन पूर्वोक्त दीक्षा इत्यादि से उसका सोलहवाँ भाग भी फल नहीं मिल सकता, अर्थात् रूपये में एक आना भी नहीं हो सकता ॥ ३६ ॥

### भाषापद्यानुवाद

दीच्छा दान सतीर्थ तप, ज्ञान मखादिक कर्म।
लहहिं न महिमन पाठ की, कला सोलही मर्म ॥ ३६ ॥

### भाषाबिम्ब

दीच्छा दान तपो तीर्थं, ज्ञान जज्ञादि कर्म भी।
महिम्न पाठ के आगे, कला है सोलहीं नहीं ॥ ३६ ॥

कुसुमदशननामा[1] सर्वगन्धर्वराजः
शशिधरवरमौलेर्देवदेवस्य दासः ।
स गुरुनिजमहिम्नो भ्रष्ट एवास्य रोषा-
त्स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥३७॥

## नारायणी

(शशिधरवरमौलेः) चन्द्रमौलेः, क्वचिच्छिशुशशिधरमौलेरित्यपि पाठः, स्पष्टार्थं एव। (देवदेवस्य) महादेवस्य, (दासः) सेवकः, "भृत्ये दासेयदासेरदासगोप्यक-चेटकाः" (अ० का० २।१०।१७) इत्यमरः। (सर्वगन्धर्वराजः) सर्वेषां गन्धर्वाणां राजा, "राजाहः सखिभ्यष्टच्" (अष्टा० ५।४।९१) इति टच् प्रत्ययः। गन्धर्वस्तु देवयोनि-विशेषो देवेषु गायको वा "विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" (अ० को० १।१।११) इत्यत्राप्यमर एव। (कुसुमदशननामा) नामोपलक्षणमेतत्, तेन पुष्पदन्ताचार्य्यं इत्येवाभिप्रायः। (अस्यैव) महादेवस्य, एव इत्यनेन नान्यस्येत्यर्थः, (रोषात्) कोपात्, (निजमहिम्नः) स्वमहत्त्वात्। अपादाने पञ्चमी। (भ्रष्टः) पतितः सन्, (दिव्यदिव्यम्) दिवि भवा दिव्यास्तेष्वपि दिव्यं परमोत्तमम्, (इदम्) पूर्वाभिहितं (महिम्नः स्तवनम्) महिम्नः स्तोत्रम् (सः) उक्ताचार्य्यः (अकार्षीत्) विरचितवान्। (खलु) इति निश्चयेन। अत्र महेश्वररोषादेव परिभ्रष्टेन पुष्पदन्ता-चार्य्येण शिवतोषार्थमेवेदं महिम्नस्तोत्रं व्यधायीति स्पष्टोऽर्थो भावश्चेति ॥३७॥

## संस्कृतपद्यानुवादः

गन्धर्वराजः स हि (कवि-) पुष्पदन्तः
श्रीचन्द्रमौल्यङ्घ्रिसरोजभृङ्गः (दासः)।
भ्रष्टोऽस्य शापात्स्वमहत्त्वतो यः (त्स्वमहिम्न एव)
स्तोत्रं महिम्नो विधिवद्व्यधत्त ॥३७॥

## भाषाटीका

(शशिधरवरमौलेः) चन्द्रकला को मस्तक में धारण करने वाले, (देवदेवस्य) भगवान् महादेव का, (दासः) सेवक, एवं (सर्वगन्धर्वराजः) समस्त गन्धर्वों के राजा, (कुसुमदशननामा)

---

१. महिम्नस्तुतेरेकत्रिंशच्छ्लोका एव श्रीमधुसूदनसरस्वत्याख्ययतिवरैर्व्याख्याताः। ततो द्वात्रिंश-दादि षट्त्रिंशत्पर्यन्तं श्लोकान् संगृह्याग्रे व्याख्योपसंहारे "इमे श्लोकाः स्तोत्रान्तर्गताः नाग्रेतनानि पद्यानि, तथापि, लोकपाठमनु-सुगमाश्चेति सर्वं भद्रम्" इति लिखितमस्ति सृत्यास्माभिरत्र इमानि पद्यानि संगृहीतानीति शम्।

पुष्पदन्त नामक कवि ने (अस्यैव रोषात्) इन्हीं महादेव जी के कोप से (निजमहिम्नः भ्रष्टः) अपने महत्त्व से पतित होकर, (इदं दिव्यदिव्यं महिम्नः स्तवनम्) इस परमोत्तम महिम्नस्तोत्र को, (सः अकार्षीत् खलु) निश्चय करके बनाया ॥ ३७ ॥

### भाषापद्यानुवाद

राजा सब गन्धर्व के पुष्पदन्त विख्यात ।
बालचन्द्रधर-मौलिके, जो सेवक कहि जात ॥
महादेव के रोषते, निज महिमा बिनसाय ।
सिव महिमा की स्तुति रची, अतिसय दिव्य बनाय ॥ ३७ ॥

### भाषाबिम्ब

कुसुमदसननामा सर्व-गन्धर्व-राजा,
ससिधर-प्रभुकेरा, भक्ति-संयुक्त चेरा ।
निज-पद महिमाते भ्रष्ट ह्वै रोष घाते,
स्तुति शिव-महिमा की दिव्य दिव्यै रची है (यहै की) (बनायी) ॥३७॥

●

**सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं**
**पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः ।**
**व्रजति शिवसमीपं किन्नरैः स्तूयमानः**
**स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥३८॥**

### नारायणी

(यदि) कदाचित् (प्राञ्जलिः) प्रबद्धकरणसम्पुटः, (नान्यचेताः) अनन्यमनस्कः, (मनुष्यः) सामान्यमुपलक्षणमेतत्, (इदम्) पूर्वविहितम्, (सुरवरमुनिपूज्यम्) सुरवरा इन्द्रादयो देवाः, मुनयो वशिष्ठादयस्तैः पूजनीयम्, अर्थादिदं स्तोत्रं न केवलैर्मनुष्यैरेव पूजितमस्ति, अपि तु देवा मुनयश्चैतेन स्तुवन्तीति भावः । अत एव (स्वर्गमोक्षैकहेतुम्) स्वर्गापवर्गयोरेकमात्रं साधनभूतम्, (पुष्पदन्तप्रणीतम्) पुष्पदन्ताभिधानकविना विरचितम् (अमोघम्) अव्यर्थम्, सर्वदैव फलदानोन्मुखम्, तेनास्य पाठस्तु कदाचिदपि व्यर्थतां न प्रयाति, सर्वथैव यथोक्तमखिलमपि फलमवश्यमेव ददातीति सूचितम् । (स्तवनम्) महिम्नः स्तोत्रम् (पठति) अध्येति, पाठमात्रं करोतीति वा, तर्हि (किन्नरैः) देवविशेषैः (स्तूयमानः) स्तुत्यः सन् (शिवसमीपम्) विभोः पार्श्वम् (व्रजति) गच्छति, अर्थादादौ गणत्वमवाप्यान्ते सामीप्याख्यं निर्वाणपदं प्राप्नोतीति भावः । पूर्वपद्येऽत्रापि च मालिनीवृत्तमेव ॥३८॥

## संस्कृतपद्यानुवादः

सुरर्षिवृन्दवन्दितं स्वरादिमोक्षसाधनं (दायकं)
पठत्यमुं स्तवं नरः प्रबद्धहस्तसम्पुटः।
अनन्यमानसो यदि प्रयाति शम्भुसन्निधिं
समस्तकिन्नरैः स्तुतः सुपुष्पदन्तनिर्मितम् ॥३८॥

## भाषाटीका

(प्राञ्जलिः) दोनों हाथों को जोड़कर, (नान्यचेताः) एकाग्रचित्त हो, (मनुष्यः) कोई भी मनुष्य, (सुरवरमुनिपूज्यम्) इन्द्रादिक देवता और वशिष्ठादिक महर्षियों से पूजनीय (स्वर्गमोक्षैकहेतुम्) स्वर्ग और मोक्ष के एकमात्र साधन, (पुष्पदन्तप्रणीतम्) पुष्पदन्ताचार्य्य के बनाये हुए, (अमोघम्) कभी व्यर्थ नहीं होने वाले अर्थात् सदा फलदायक, (इदं स्तवनम्) इस महिम्नस्तोत्र को, (यदि पठति) है यदि पढ़ता तो (किन्नरैः स्तूयमानः) (सन्) किन्नर लोगों से स्तुत होता हुआ, (शिवसमीपम्) महादेव के पास (व्रजति) जाता है, अर्थात् यह स्तोत्र अव्यर्थ है, इसके पाठ से स्वर्ग और अपवर्ग दोनों ही मिलते हैं, वरन् सामीप्य नामक परम पद (मोक्ष) भी इससे प्राप्त हो जाता है और किन्नर लोग उसकी बड़ाई गाया करते हैं ॥ ३८ ॥

## भाषापद्यानुवाद

पूजहिं सुरमुनि जाहि सब, देत स्वर्ग अरु मुक्ति।
एकचित्त ह्वै जोरि कर, जो पढ़ नर तजि भुक्ति ॥
किन्नर गावहिं ताहिको, सो जावै सिव पास।
पुष्पदन्त प्रनीत यह, अस्तुति पुरवति आस ॥ ३८ ॥

## भाषाबिम्ब

सुरमुनि सम पूज्यै स्वर्ग औ मोच्छ मूलै,
स्तुति यहहि अमोघै पुष्पदन्तै रची है।
पढ़ि नर कर जोरे चित्त एकाग्रता से,
पहुँचत शिव पासैं किन्नरैं ताहि गावैं ॥ ३८ ॥

❁

आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम्।
अनौपम्यं मनोहारि शिवमीश्वरवर्णनम् ॥३९॥

## नारायणी

(गन्धर्वभाषितम्) गन्धर्वराजपुष्पदन्ताचार्य्यकथितम्, (पुण्यम्) पुण्यप्रदम् पवित्र-मित्यर्थः। "पुण्यं धर्मे मनोज्ञे च पावने च प्रयुज्यते" इति मेदिनी। (अनौपम्यम्)

उपमारहितमद्वितीयत्वात्, (मनोहारि) पठतां शृण्वताञ्च जनानां चित्तापहारकम् (सर्वम्) अखिलमेव (ईश्वरवर्णनम्) परमेश्वरमहिमवर्णनापूर्णम्, (इदम्) पूर्वोक्तं (स्तोत्रम्) महिम्नः स्तोत्रम् (आसमाप्तम्) आ समन्तात्समाप्तिगतमिति ।

## संस्कृतपद्यानुवादः

प्रसिद्धमतेच्छ्रीशम्भोर्द्वात्रिंशच्छ्लोकसम्मितम् ।
समस्तमीश्वरस्यैव वर्णनेन समापितम् ॥
असमानमिदं स्तोत्रमभिज्ञानां मनोहरम् ।
गन्धर्वगीतं गीतेव पवित्रं पुण्यवर्द्धनम् ॥३९॥

## भाषाटीका

(पुण्यम्) परमपवित्र, (गन्धर्वभाषितम्) गन्धर्वराज पुष्पदन्ताचार्य्य का कहा हुआ, (अनुपमम्), उपमारहित, अतुलनीय (मनोहारि) पढ़ने-सुनने वालों का मन लुभाने वाला (सर्वं ईश्वरवर्णनम्) सर्व प्रकार ईश्वर के ही वर्णन से भरा हुआ, (इदं स्तोत्रम्) यह महिम्नस्तोत्र (आ समाप्तम्) समाप्त हुआ ॥ ३९ ॥

## भाषापद्यानुवाद

है समाप्त अस्तोत्र यह, ईश्वर वर्णन सर्व ।
अनुपम पुन्य मनोहरै, जिहि माष्यो गन्धर्व ॥ ३९ ॥

## भाषाबिम्ब

है समाप्त यही स्तोत्रै, सबै ईश्वर बर्निकै ।
बेजोड़ चित्त-हारी है, पुन्य-गन्धर्व-माषितै ॥ ३९ ॥

●

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥४०॥
तव तत्त्वं न जामामि कीदृशोऽसि महेश्वर ।
यादृशोऽसि महादेव तादृशाय नमोनमः ॥४१॥
एककालं द्विकालं वा त्रिकालं यः पठेन्नरः ।
सर्वपापविनिर्मुक्तिः शिवलोके महीयते ॥४२॥

श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन
स्तोत्रेण किल्बिषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥४३॥

॥ इति श्रीपुष्पदन्तविरचितं शिवमहिम्नस्त्रोत्रं सम्पूर्णम् ॥

## नारायणी

(श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन) श्रीमत्पुष्पदन्ताचार्य्यस्यैव मुखकमलाद्वहिर्गतेन । एतेनेयं प्रभोरनादिस्तुतिरिति सूचितम्, (किल्बिषहरेण) पापपुञ्जविदारकेण (हरप्रियेण) शम्भोः प्रेमास्पदत्वं प्रयातेन, (कण्ठस्थितेन) कण्ठस्थेनैवास्य पाठमाहात्म्यमिति ध्वनितम्, तेन पुस्तकसाहाय्येन पाठे कृते न तादृशः फललाभो भवतीति च विज्ञापितम् । (पठितेन) अधीतेन पाठ्यतां गतेन (समाहितेन) अङ्गीकृतेन, निर्विवादीकृतेन अथवा प्रतिज्ञातेनेति यावत् । "सङ्कीर्णं-विदित-संश्रुत-समाहित-उपश्रुत-उपगतम्" (अ० को० ३।१।१०९) इत्यमरः । समाहितेनेत्यत्र "निष्ठा" (अष्टा० ३।२।१०२) इत्यनेन क्तः, ततश्च "दधातेर्हिः" (अष्टा० ७।४।४२) इत्यतो हित्वमपि । केचिदत्र समाहितेनेत्यस्य समाहितचित्तेन जनेन पठितेनेति योजयन्ति, तन्न समीचीनम् । नान्यचेता इत्येवं पूर्वोक्तत्वात् । (स्तोत्रेण) महिम्नस्तोत्रपाठेन (भूतपतिः) भूतानां पृथिव्यादीनां देवविशेषाणां वा पतिः स्वामी (महेशः) महाँश्चासौ ईशश्च महेशः (सुप्रीणितः) अत्यन्तप्रसन्नः (भवति) । अस्य स्तोत्रस्य कण्ठस्थपठनमेव महेश्वरप्रसन्नताहेतुः, हरप्रियत्वादिति तात्पर्यार्थः स्पष्ट एव सिद्धः वसन्ततिलकावृत्तम् "उक्ता वसन्ततिलका तभजाजगौगः" इति वृत्तरत्नाकरे ॥४३॥

॥ इति महिम्नस्तवस्य नारायणी टीका समाप्ता ॥

## संस्कृतपद्यानुवादः

श्रीलश्रीपुष्पदन्ताननसरसिजतो निर्गतेन स्तवेन
पापौघग्रावभेदप्रविततभिदुरेणेश्वरातिप्रियेण ।
कण्ठस्थानस्थितेन प्रणिहितमनसोच्चारितेनैव भक्त्या
देवानामादिदेवो भवति (पशु) भवपतिः प्रीणितोऽतीव शीघ्रम् ॥४३॥

महिम्नस्तोत्रेऽस्मिन्परमभगवन् ! पद्यखचिता
द्विधा टीका नारायणपतिमहीदेवरचिता ।
मुदे तेऽस्तान्मार्गी-सितदलदशम्यां कुजदिनेऽ-
र्पिता भक्त्या वर्षे ऋतु-रस-निधि-क्षोणि-गणिते ॥

### भाषाटीका

( श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन ) श्रीपुष्पदन्ताचार्य्यं के मुख कमल से निकले हुए, (किल्बिषहरेण) पापों के हरण करने वाले, (हरप्रियेण) महादेव के बड़े प्यारे, (समाहितेन) प्रतिज्ञा किए हुए, (कण्ठस्थितेन) कण्ठाग्रही (पठितेन) पढ़े गए; क्योंकि पुस्तक देखकर पाठ करने से मन अक्षरों पर लग जाता है, जिससे स्तोत्रार्थ का भाव कभी-कभी नष्टप्राय हो पड़ता है। (स्तोत्रेण) इस महिम्नस्तोत्र से, (भूतपतिः महेशः) समस्त भूतों के अधिपति महेश्वर देव, (सुप्रीणितः भवति) अत्यन्त प्रसन्न होते हैं, अर्थात् इस स्तोत्र के कण्ठस्थ पाठ करने से महादेवजी बड़े ही प्रसन्न होते हैं ॥ ४३ ॥

### भाषापद्यानुवाद

पुष्पदन्त-मुख कमलते, निसरी अस्तुति जोय।
पाप हरै प्यारी लगै, महादेव को सोय ॥
याहि पढ़ै कण्ठस्थ जो, भले समाहित जानि।
तापै परम प्रसन्नचित, होवहि संभु-भवानि ॥ ४३ ॥

### भाषाबिम्ब

श्रीपुष्पदन्त मुखपंकजते कढ्यो जो,
स्तोत्रै अघै हरन है हरको पियारो।
कण्ठस्थ याहि पढ़ि है, स्थिरचित्त ह्वै जो,
तापै प्रसन्न रहिहैं नितहीं महेशो ॥ ४३ ॥

**विप्र रमापतिको तनय, नारायन पति नाम।**
**सेवत श्रीविश्वेश पद, वसत बनारस धाम ॥ १ ॥**
**संवत रस ऋतु अंक महि, माघ अमावस पर्व।**
**अर्पत यह अनुवाद सब, विनवत 'स्वीकुरु शर्व !' ॥ २ ॥**

॥ इति श्रीशिवभक्तेन काशीवासिना सरयूपारीणब्राह्मणपण्डितवंशजनररत्नेन श्रीनारायणपतिना प्रणीतः पञ्चमुखीव्याख्यासमलङ्कृतो महिम्नस्तोत्रं समाप्तम् ॥



# प्रथमं परिशिष्टम्

## महिम्नस्तोत्रपद्यानामकारादिक्रमेणानुक्रमः

• • •

# द्वितीयं परिशिष्टम्

## मधुसूदनीटीकायां प्रसङ्गादुद्धृतानां श्रुति-स्मृति-सूत्रवचनादीनां वर्णानुक्रमेणोपन्यासः

• • •

# तृतीयं परिशिष्टम्

## नारायणीटीकायां प्रसङ्गादुद्धृतानां श्रुति-स्मृति-सूत्रवचनादीनां वर्णानुक्रमेणोपन्यासः

• • •

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दी-संस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. 'वित्त-अधिकारी' सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ० प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१००२ (उ० प्र०)" इति सङ्केतेन विधेयः।





# विज्ञप्ति

( रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत )

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्री रमाशंकर पण्ड्या |
| | राष्ट्रियता | भारतीय |
| | पता | तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथ प्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथ प्रसाद त्रिपाठी
अनुसन्धान संस्थान निदेशक
सं० सं० वि० वि०, वाराणसी—२२१००२.

